*Sanskrit Academy Series–No. 14*
*A. 11*

# VIKRAMORVAŚĪYAM

OF

KĀLIDĀSA

WITH

THREE COMMENTARIES

THE SANSKRIT ACADEMY
OSMANIA UNIVERSITY
HYDERABAD-7

*First Edition*

1966

## CONTENTS

# *INTRODUCTION*

The Vikramorvaśīya of Kālidāsa with the commentary Prakāśikā was first published by the Nirṇaya Sāgara Press, Bombay, in the year 1888, and has been reprinted several times since. The text with the commentary Kumāragirirājīyā was published in 1929 by Prof. Cārudeva Śāstrī of Lahore. The Koṇeśvarī Commentary without the text was published by Prof. H. D. Velankar in the Annals of the Bhandarakar Oriental Research Institute, Poona, in the year 1958.

We felt that it would greatly help the reader if the text with all the three commentaries were printed in one volume.

The Prakāśikā and the Koṇeśvarī follow the longer recension of the text while the Kumāragirirājīyā follows the shorter one. We have adopted the longer recension as indicated by the Prakāśikā and as found in the Nirṇaya Sāgara Press Edition, making only a few corrections in the Prākṛta passages.

The date of the Koṇeśvarī is not known. Of the two remaining commentaries, though the Kumāragirirājīyā is older, we have given the first place to Prakāśikā because it is available for the whole of the text. The Koṇeśvarī, which also

follows almost the same version of the text as the Prakāśikā, but which is not available for the entire text has been printed next and the Kumāragirirājīyā last.

To make the reader acquainted with the variant readings adopted in the critical edition of the text published by the Sahitya Akademi, we have given them in the footnotes, omitting unimportant ones.

The text and the relevant portions of the commentaries have been printed on one and the same page, or on the page facing it. Rarely has the reader to turn a page to refer to the commentary pertaining to any portion of the text.

We are thankful to Prof. H. D. Velankar who procured for us a copy of the text with the Kumāragirirājīyā and lent us an off-print of the Koṇeśvarī.



श्रीः

महाकवि-कालिदासविरचितं

# विक्रमोर्वशीयम्

टीकात्रयोपेतम्

---

श्रीरङ्गनाथकृता प्रकाशिका

गण्डसिन्दूरमार्तण्डखण्डिताघतमश्चयः ।
शुण्डोत्क्षिप्तारिवृक्षोऽसौ रक्षताद् गणनायकः ॥१॥

दलत्पद्मपत्रप्रकाशाक्षि लक्ष्मि त्वदङ्घ्रिद्वयाम्भोजभृङ्गायितं मे ।
मनः स्तान्निरस्ताघमस्तातिदुष्टे समस्तात्मरूपे नमस्तेऽस्त्वजस्रम् ॥२॥

अञ्जनानन्दनानन्ददायिनं रघुनन्दनम् ।
वन्दारुजनमन्दारं दशास्यदमनं भजे ॥३॥

नीलोत्पलानुकारी नारीकुललम्पटः कोऽपि ।
गोकुलपरिसरचारी गिरिवरधारी हरिः पायात् ॥४॥

मौलौ मन्दारमाला जयति भगवती जाह्नवी पुण्डरीक—
स्रग्वेधी मुण्डराजी हिमकरकलया चाग्निना भालशोभा ।
यस्याङ्के नागभूषा प्रविलसति चिताभस्मना चाङ्गरागो
देवोऽयं वामदेवो भवतु भवुकक्त्नाटयसृष्टिप्रवीणः ॥५॥

श्रीबालकृष्णपितरं विद्वद्वृन्दशिरोमणिम् ।
नत्वा नारायणाख्यं च पितृव्यं विबुधोत्तमम् ॥६॥

श्रीकालिदासरचितत्रोटकस्य यथामति ।
रङ्गनाथेन विदुषा व्याख्या विख्यापयिष्यते ॥७॥

यदत्र मोहतः किंचिद् विच्युतं तद् बुधोत्तमैः ।
परोपकाररसिकैः संशोध्यं शुद्धमानसैः ॥८॥

**कोणेश्वरकृता कोणेश्वरी टीका**

युद्धरुद्धपरतारतारकं
विघ्नसङ्घविनिपातघातकम् ।
भुक्तिमुक्तिफलसारकारकं
तं नमामि हरदारदारकम् ॥१॥

अस्ति यद्यपि न मे विवेचने
मोहमुक्तमनसां समादरः ।
यत्तथापि विदधे विवेचनं
तोटकस्य सुधियां मुदेऽस्तु तत् ॥२॥

**काटयवेमकृता कुमारगिरिराजीया**

वेदादीनां विशुद्धानां विद्यानां जन्महेतवे ।
पार्वतीपरतन्त्राय परस्मै वस्तुने नमः ॥१॥

जयतु विजयलक्ष्मीवल्लभो नित्यकीर्तिः
कुमरगिरिनृपालो राजवेश्याभुजङ्गः ।
बिरुदमसहमानः साभिमानो यदीयं
भवति विमतवर्गो देववेश्याभुजङ्गः ॥२॥

# विक्रमोर्वशीयम्

## प्रथमोऽङ्कः

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥१॥

---

**प्रकाशिका**

प्रारिप्सितग्रन्थस्य निष्प्रत्यूहसमाप्तिकामनया मङ्गलं मनस्यनुसंदधद्अन्यार्थनीयमानपानीयभृतकुम्भस्येव सूत्रधारयाच्ञाया अपि नान्द्या मङ्गलत्वमभिसंदधद् वा, नान्दीमवतारयति—वेदान्तेष्विति। स स्थाणुः शिवो वः सामाजिकानां निःश्रेयसाय मोक्षायास्तु। चतुर्थ्या निमित्तत्वमर्थः। तथा च मोक्षनिमित्तमस्त्वित्यर्थः। मोक्षं ददात्विति यावत्। 'तुमर्थाच्च' (पा २-३-१५) इति तुमर्थे वा चतुर्थी। निःश्रेयसं दातुमस्त्वित्यर्थः। 'स्थाणुः कीले हरे' इति त्रिकाण्डी। हरे प्रवृत्तस्य स्थाणुपदस्य प्रवृत्तिनिमित्तप्रदर्शनं च—'ततः प्रभृति विश्वात्मा प्रसूते च (न प्रसूते) शुभाः प्रजाः। स्थाणुवन्निश्चलो यस्मात् स्थितः स्थाणुस्ततः स्मृतः ॥' इति पुराणेषु। शिवस्य मोक्षहेतुत्वं च—'स एव मोक्षस्थितिनाशहेतुः' इति श्वेताश्वतरे। 'नमो भवस्य हेत्यै' इति च तैत्तिरीये (४-५-२६)।

तदेतत् सकलं विश्वं स हि विश्वाधिकः शिवः।
स एव जगतां नाथः स तु संसारमोचकः ॥

इति पाराशरः। अन्यत्र च बहुषु स्थलेषु सुप्रतीतमेव। ननु यदि स स्वभाव एव तस्य, तर्हि किमिति स लोकैः सेव्यते इत्याशङ्कयाह—स्थिरेति। स्थिरो विषया-

दिनानुच्छेद्यः । भक्तियोगो भक्तिप्राप्तिः । तया सुलभः सुप्राप्यः । 'आराध्यत्वेन ज्ञानं भक्तिः' इत्युदयनाचार्याः । शिवस्य भक्तिप्राप्यत्वं प्रनीतम् 'भावग्राह्य-मनीडाख्यं भावाभावकरं शिवम्' इति श्वेताश्वतरे (५-१४) । भक्तियोगेत्यनेन हरे भक्तिरपि पूर्वपूर्वानिकजनुरर्जितसातिशयसुकृतगम्भारो भवतीति ध्वनितम् । यद्वा स्थिरा भक्तिः, योगो ध्यानं च, ताभ्यां सुलभः । स्थिरभक्तिपूर्वकध्यानैकगम्य इत्यर्थः । ध्यानगम्यत्वमप्युक्तं कैवल्योपनिषदि (१-२)—'श्रद्धाभक्तिध्यान-योगादवेहि' इति । श्रद्धाभक्त्योर्भेदस्त्वाचार्यैरुक्तः—

'वेदबोधितफलावश्यंभावनिश्चयः श्रद्धा' इति । योगस्वरूपं चोक्तं कठवल्ल्याम्

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' । (कठ. २-६-१०)

इति । स क इत्यपेक्षायामाह—वेदान्तेष्वित्यादि वाक्यत्रयम् । वेदान्तेषूपनिषत्सु यमेकपुरुषमाहुः । तत्त्वविद इत्यर्थात् । नन्वेकादश रुद्राः सन्ति तत् किमेकस्य सेवनेन मुक्तिरुत सर्वेषाम् । आद्ये कारणानिर्णयेन कार्यस्यासम्भवः । द्वितीये तु सर्वेषामेकदा सेवनासम्भव इति दूरापास्तम् । तस्मान्मुक्तिरूपं फलमिति चेत्तत्राह—एकेति । एकत्वं चोक्तमथर्वशिरउपनिषदि (२-३)—'स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान् महेश्वरः' इति । 'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादि तैत्तिरीये (२-१३) अपि । तथा चैकादश-त्वप्रवादस्तु प्रापञ्चिकः । ज्ञानमार्गे तु स एक एव । तस्य च सुगपत्समेव सेवनेन मुक्तिदातृत्वमिति भावः । पुरुषमिति । निखिलकामनापूरणसमर्थमित्यर्थः । पुरुषत्वं चास्य—

'पुरुषो वै रुद्रः सन्महो नमो नमः' (म. ना. ११-२) । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वेताश्व. ३-९) इत्यादि ।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥
(कठ. १-३-१०-११)

इति

'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वै तत्' ॥

इत्यादि च **कठवल्ल्याम्** (२-४-१३) ।

'सर्ववर्णा पुरुषदैवत्या' **इत्यथर्वशिखायाम्** (१.१२) । इत्यादिषु बहुषु वेदान्तेषु दृष्टम् । वेदान्तेष्विति चोपलक्षणं पुराणादिष्वपि द्रष्टव्यम् । यथा **श्रीकौर्मे श्वेताश्वतरोपबृंहणे**—

'निरीक्षितास्ते परमेशभक्त्या तदन्तरे देवमशेषहेतुम् ।
पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम्' ॥

इति । तथा **स्कान्दे शङ्करसंहितायामुपदेशकाण्डे**—

'इदं सदैव सौम्याग्रे यदीयं लक्षणा श्रुतिः ।
मह एवेति तद् ब्रह्म पुरुषः सन्महान्नमः' ॥

इति । **भारत आनुशासनिके पर्वणि**—

'ततः स भगवानीशः सर्वसत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः' ॥

इति । तथा **सूतसंहितायां शङ्करगीतायाम्** (४-११-२७) 'इन्द्रिय' इत्यारभ्य

'पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि च' ॥

इत्यादिनोक्तम् । वेदान्तेष्वित्यनेनैव तदाह—सकलप्रमाणेषु मूर्धन्यं प्रमाणं श्रुतिः । तल्लाभे किं प्रमाणान्तरगवेषणयेति । उत्कर्षकं विशेषमाह—**व्याप्येति** । रोदसी द्यावापृथिव्यौ व्याप्य स्थितम् । रोदसीति रोदःशब्दस्य सान्तस्य द्विवचनम् । 'भूद्यावौ रोदस्यौ रोदसी च ते' **इत्यमरः** (३-३-२२९) । सान्ते 'रोदः क्लीबे रोदसी स्त्री दिवि भूमौ पृथक् पृथक् । सहोक्त्याप्येतयोरेतौ रोदस्यौ (रोदसी) तथा ॥' इति **रूपचिन्तामणिश्च** ।—शिवस्य व्यापकत्वमुक्तमथर्वशिरउपनिषदि (३-३)—

'स ॐकारो य ॐकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी'। इति । 'व्यापको हि भगवान् रुद्रः' इति च तत्रैव (अ. शि. उ. ३.६) । 'व्यापनाद् व्यापी महादेवः' **इत्यथर्वशिखायाम्** (२) ।

'सर्वाननशिरोग्रीवः सर्वतोऽक्षिशिरोरुहः ।
सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिवः' ॥

इति **श्वेताश्वतरे** (३.११) । **तैत्तिरीये** (५-५-९-९) च—

'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु' इत्यादौ।

**यस्मिन्निति**। यस्मिन् भवे ईश्वर इति शब्दोऽनन्यविषय एतन्मात्रवाचकः। यथार्थाक्षरो यौगिक इत्यर्थः। ईश्वरत्वं चास्य सकलश्रुतिसिद्धम्। तथाहि-- 'ईशानः सर्वविद्यानामीश्वरः' इत्यादि **तैत्तिरीयारण्यके** (१०.४७.१)। **श्वेताश्वतरे** (६.७)—

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं पुरस्ताद् विदाम देवं भुवनेशमीड्यम्'॥

इति। 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति **पातञ्जले** (१.२४)। तथा **भारते हरिवंशे** कृष्णवचनम्—

'यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च।
तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्वशास्त्रार्थविज्ञाः॥'

इति। इत्यादीश्वरशब्दस्य शिवमात्रवाचकत्वं तैत्तिरीयादौ प्रतीतमेव। तदनुसारिणः **श्रीहरदत्तचरणा** अप्याहुः—

'नानीश्वरं भवितुमर्हति विश्वमेतद् बह्वीश्वरं च नितरामयथाप्रमाणम्।
तल्लोकवेदविदितेश्वरवर्जनेन कोऽयं भ्रमः कतिचिदीश्वरमन्यमाहुः॥
मन्त्रार्थवादविधिभिर्बहुभिर्विभक्तो यः शब्दराशिरनपेक्षतया प्रमाणम्।
सोऽयं विमत्सरविमृष्टपदार्थतत्त्वो वेदः प्रकाशयति केवलमीश्वरं त्वाम्॥
शब्दोऽयमीश्वर इति श्रुतिगोचरः सन्नानीलकण्ठमवतंसितचन्द्रलेखम्।
त्वामेव बोधयति नाथ निजार्थपोषादन्यं पुनः प्रकरणादिनिपीडनेन॥'

इति। यथार्थाक्षरत्वं निरतिशयैश्वर्यशालित्वात्। ईष्टे इतीश्वरः। 'स्थेशभासपिसकसो वरच्' (पा. ३-२-१७५) इति वरच्। सर्वव्यापित्वाद्वा अश्नुत इतीश्वरः। 'अश्नोतेराशुकर्मणि वरट् च' (उ. ७३५) इत्यनेनौणादिको वरट्, उपधाया ईत्वं च। **अन्तरिति**। चः पूर्वेण सह समुच्चयार्थः। नियमिताः प्राणादयः प्राणापानसमानव्यानोदानाख्या वायवो यैस्तादृशैर्मुमुक्षुभिरन्तर्हृदये यो मृग्यतेऽन्विष्यते। तथा च **छान्दोग्ये** दहरोपासनायाम्—

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छां. ८-१-१) इत्यारभ्य

'एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः।
एष आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोकोऽ—

विचिकित्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छां. ८-१-५)

इति । **कैवल्ये** (१-६) अपि—

'हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्' ॥

इति ।

'दह्रं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' ।
(म. ना. १०-७)

इति **महानारायणोपनिषदि** ।

तथा **शैव एकादशरुद्रसंहितायाम्**—

'दहरं विपाप्मं परमेश्वरस्य यद्वेश्मभूतं सकलं पुरस्थम् ।
तत्रापि दह्रम् गगनं विशोकं तदेव नित्यं सकलैरुपास्यम्' ॥

इति । पुरुषस्यान्तर्मार्गणमुक्तं **याज्ञवल्क्येन**—

'अथैकं परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् ॥
ब्रह्मपुरे गार्गि दहराब्जे खमध्यमे ।
अभ्यासात्तं प्रपश्यन्ति सन्तस्त्वं च तथा कुरु' ॥

इत्यादिना । सर्वव्यापिज्ञानेन मोक्षप्राप्तिरुक्ता **श्वेताश्वतरे** (३-११)—

'ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति ॥'

इति ॥ ईश्वरस्यान्तःस्थत्वमुक्तं **वामनपुराणे**—

'ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजशायिनम् ।
दर्शयामास देवानां मुरारिर्लिङ्गमीश्वरम्' ॥

इति । अन्तर्मार्गणं निःश्रेयसार्थमेवेति मुमुक्षुभिरित्यनेन ध्वन्यते । तथा चोक्तं **ब्रह्माण्डपुराणे शैवे च**—

'स्वराडाख्यस्य देवस्य हृदयाम्भोजमध्यमे ।
उमासहायो भगवान्नीलकण्ठस्त्रिलोचनः ॥

'यो नृत्यत्यसौ नित्यं परमानन्दचिद्घनः ।
तं दृष्ट्वा मनुजः सर्वो विमुक्तो भवतीति हि ॥'

इत्यादिना । एतेन यः सकलोपनिषत्सु एकत्वपुरुषत्वेश्वरत्वान्तःस्थत्वमोक्षहेतुत्वादिधर्मविशिष्टो गीयते स युष्माकं सुखसंपत्संपादको भूयादित्यक्षरार्थः ।

'प्राणोऽपानः समानश्चोदानव्यानौ च वायव.'

इति त्रिकाण्डी ।

'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्'

इति च सैव । इति ग्रन्थविस्तरभयादलमतिपल्लवितेन ।

'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इति मातृगुप्ताचार्योक्तम्, 'आशीर्यत्र नमस्क्रिया च शशिनः सङ्कीर्तनं वस्तुनो निर्देशः' इत्यादि नाट्यलोचनकारोक्तम्, 'समुच्चितार्थतात्पर्यं तद्वस्तु सुधियां मतम्' इति नाटकस्य मुख्यार्थसूचका नान्दीति कल्पतरुकारकथितं च नान्दीलक्षणमनुसंधाय काव्यार्थसूचनमप्यत्रैवावगन्तव्यम् । वेदस्यान्तेष्वन्तिकेषु प्रदेशविशेषेष्विति यावत् । 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' ॥ इति विश्वलोचनः । अनन्यसामान्यप्रजापालनदयादाक्षिण्यादियोगाद्यं पुरुषमेकं मुख्यमाहुर्वर्णयन्ति ।बुधा इति शेषः । रोदसी द्यावाभूमी व्याप्य स्थितम् । निजकीर्त्येति शेषः । यस्मिन् राजनीश्वरशब्दो यथार्थाक्षरो निग्रहानुग्रहादिप्रभुशक्तिसम्पत्तेरितिभावः । चोऽप्यर्थे । तथा च नियमितप्राणादिभिर्मुमुक्षुभिरपि समलोष्टाश्मकाञ्चनैरत्युदासीनैरपीत्यर्थः । यो राजा अन्तः अन्तःकरणे मृग्यते चिन्त्यते । नैतादृशो धर्मशीलो जगति दृष्टपूर्व इति सर्वदा चेतस्यनुसंधीयते (तस्य सुधियः) इति भावः । स्थाणुः स्थिरतरः । अतिधीर इति यावत् । यद्वा स्थाणू रुद्ररूपः । तदंशत्वात् । स्थिरा भक्तिर्यासां प्रजानां ताभिर्योगेन चित्तानुसरणरूपेणोपायेन सुलभोऽभिगम्यः । यद्वा 'स्थाणुस्थिर' इति निर्विसर्गान्तं पाठमङ्गीकृत्य स्थाणुवत् स्थिरः केनाप्यनुच्छेद्यो भक्तियोगेन सुलभश्च । पश्चात् कर्मधारयः । यद्वा भक्तिभंगो राजभाग्यस्तद्योगो यस्य स चासौ सुलभश्च । भागरूपेण वा योगेनोपायेन सुलभः । यद्वा स्थिरा भक्तिरर्थाद्राजनि यस्या उर्वश्यास्तया योगेनार्थात् सङ्गमनीयाख्यमणिसम्बन्धेन सुलभः सुप्रापः । तस्या वा योगेन पूर्वोक्तोपायेन सुलभः । एतेनास्योर्वशीकामुकत्वम्, लतारूपायाश्चास्याः सङ्गमनीयद्वारा सङ्गम इत्याद्यसूचि । 'योगस्त्वारे पूर्वलाभे सूत्रे विस्रब्धघातिनि । उपाये सङ्गतौ ध्यानौषधिसन्नाहयुक्तिषु ॥'

इति त्रिकाण्डीशेषः। एवं विशेषणगणविशिष्टः स प्रसिद्धविभवो विशेषण-महिम्ना विशेष्यलाभात् पुरूरवा वो युष्माकं सभासदां निःश्रेयसाय प्राक्षेम योगक्षेमादिरूपकल्याणायास्तु भवत्विति ॥१॥

**कोणेश्वरी**

इह खलु प्रारिप्सितप्रतिबन्धकोत्सारणकामाः प्रेक्षावन्तोऽभिमतग्रन्थ-प्रारम्भे नियमत इष्टदेवताकीर्तनादिरूपं मङ्गलमाचरन्तीति तत्कर्तव्यतावसितौ कर्तव्यतोटकारम्भसमये इष्टदेवताकीर्तनरूपं मङ्गलं कुर्वन् प्रेक्षावत्प्रवृत्त्यौपयिकं प्रयोजनाभिधेयतत्सम्बन्धं प्रदर्शयन्नेव कविश्चतुष्पदां नान्दीमाह—**वेदान्ते-ष्वित्यादि**। वेदान्तेषु वेदान्तशास्त्रेषु यमेकपुरुषमद्वितीयपरमात्मानं परं ब्रह्मरूपमामनन्ति पुराविद इत्यर्थातः स प्रसिद्धप्रपञ्चनादि-विभवोऽस्माकं निःश्रेयसाधिगमायात्यन्तिकदुःखविगमायाऽस्तु भवतात् हे सभासदः, इत्यर्थात् सभासदामाशीः। नाम्ना (टचा) ढयतोटके तेषां विशेष-प्रतिपत्त्या नाट्यं गुणवत्तया प्रतीयते नैपुण्यं च नर्तकस्य प्रतीयत इति भावः। स्थाणुः स्थिरो नित्य इति यावत्। एतावता क्षणिकतापादनं कटाक्षितम्। तदनित्यत्वे हि तद्विगमेति (?) तदुपासनादिर(न)र्थिका स्यादिति शङ्कया प्रेक्षाकारिणस्तदुपासनायां न प्रवर्तेरन्निति हृदयम्। भक्तिरुपासना स्तुति-पूजादिका। उपास्यतया ज्ञानमेव वा। योग आध्यात्मिकचिन्तनम्। ताभ्यां स्थिराभ्यां बहुसमयनैरन्तर्यसेविताभ्यां सुलभः सुग्राह्यो न नास्तिकानामिव दुर्लभ इति यावत्। एतेन येऽनुपलब्धिं तद्बाधिकामामनन्ति ते निरस्ता वेदितव्या। योगिसाक्षात्कारविषयत्वात् तस्येत्यर्थः। यं कथंभूतम्। रोदसी व्याप्य स्थितं द्यावापृथिव्योरन्तरमश्नुवानम्। एतेन विभुत्वमुक्तम्। ईश्वर इति शब्दो यस्मिन् यथार्थाक्षरोऽर्थानपेतवर्णसमुदायः। ईशनाशक्तियुक्तत्वात् तस्येत्यर्थः। नान्यो विषयो वाच्यो यस्य सोऽनन्यविषयः। राजादावीश्वरपदं लक्षणया प्रयुज्यत इति भावः। ननु तस्मान् निःश्रेयसमित्यनार्षत्वान् न श्रद्ध्म इति चेत् न। मुमुक्षुभिः 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इत्यादिप्रमाण-विद्भिर्मृत्यर्थं तस्यैवाध्यात्मं मननादित्याह—**अन्तरिति**। अन्तरध्यात्मं मुमुक्षुभिः सांसारिकं दुःखं जिहासुभिर्मृग्यते चिन्त्यते। निदिध्यासनविषयीक्रियत इति यावत्। नियमिताः संयमिताः प्राणादयो यैस्ते तथा। आदिपदादपानादिचतुष्कमेकादश-विधमिन्द्रियं च गृह्यते। संप्र (?) अथ च स प्रसिद्धकर्मा अर्थात् पुरूरवा वो युष्माकं निःश्रेयसाय कल्याणायास्तु हे अप्सरस इत्यर्थात्। एतावता तासां कल्याणमनेनेह

करिष्यत इति सूचितम्। स्थाणुः स्थिरोऽचलो दीर्घायुरिति वा। तेन उर्वश्या समं बहुसमयं दृढं सौहार्दमस्य भविष्यतीति सूचितम्। स्थिरो यो भक्तियोगस्तदेकपरत्वसम्बन्धस्तेन सुलभो न दुर्लभ इत्यर्थः। तदेकपरयोर्वश्या सदसि तन्नाम ग्रहीतव्यं तेन तस्यास्तल्लाभो भविष्यतीति सूचितम्। स क इत्याकाङ्क्षायामाह **वेदान्तेष्विति**। अन्तःशब्दः स्वरूपवचनः। तेन वेदान्तेषु वेदेष्वित्यर्थः। अथ वा वेदान्त उपनिषद्भागस्तत्र यमेकपुरुषं श्रेष्ठपुरुषमाहुर्वेदविद इति शेषः। वेदेष्विति बहुवचनं नानास्थानापेक्षया नानावेदापेक्षयैव वा। तथा हि। 'उर्वश्यस्यागुरसि पुरूरवा' इत्यादिश्रुतौ बहुशः श्रूयते। व्याप्येत्यादिना सर्वत्राबारितगतिता तस्य दर्शिता। तथा चाकाशयानेन क्लेशनिवारणमिहानेन करिष्यत इति ध्वनितम्। यस्मिन्नित्यादिना ऐश्वर्यं सर्वासाधारण्यं दर्शितम्। उर्वश्या असाधारणेश्वरतास्य सूचिता। यो मोक्षमिच्छुभिरन्तर्नियमितप्राणादिभिरर्थादप्सरोभिर्मृग्यतेऽन्विष्यते याच्यते वा। प्राणाद्यन्तर्नियमने दानवभयमेव हेतुः। तथा चेहान्ते दानवापहृतोर्वश्युन्मोचनायाप्सरोभिरस्य मङ्गलं करिष्यत इति सूचितम्। पुरूरवसो वेदप्रणीतत्वप्रतिपादनेन महापुरुषतोक्ता। तथाविधस्य च कीर्तनादिना पुण्यमस्य प्रयोजनमुक्तम्। उर्वश्यास्तु देवतात्वेन तत्र कीर्तनादेः पुण्यहेतुता स्फुटैवेति भावः। अथ च स स्थाणुरुमापतिर्वो निःश्रेयसाय शर्मणेऽस्तु। शेषं प्रथमपक्षवद्बोध्यम् ॥१॥

इयं च नान्दी सूत्रधारेण जवनिकान्तरितेन पठनीया। 'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः'। (ज्योतिरीश्वरः) इति वचनात्। नान्द्यन्ते सूत्रधार इत्यनेन नान्दीपाठानन्तरं सूत्रधारस्य रङ्गभूप्रवेशप्रतिपादनात्।

> वर्तनीया(य) कथासूत्रं प्रथमं येन सूच्यते।
> रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥

प्रवेशश्चानेन वैष्णवस्थानकेन कर्तव्यः। तथा च भरतटीकायाम्—

> ईषन्नम्रशिराः सुसंयतकचः श्यामाङ्गवर्णप्रभो
> नाभौ सव्यकरं सुसज्जकटकं कृत्वा नितम्बोपरि।
> नान्दीपाठपरः प्रसन्नवदनो निर्दिष्टभावान्वितः
> स्थानं वैष्णवमाश्रितः प्रविशति श्रीसूत्रधारो नटः ॥

रङ्गभूमिमिति जवनिकान्तरस्थानमिति बोद्धव्यम् । नान्दी च चतुष्पदाष्टपदा द्वादशपदा षोडशपदा वा कर्तव्या । पदं च सुप्तिङन्तं श्लोकचरणो वा । यदाह—

नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम् ।
तां षोडशपदामेके केचिदाहुश्चतुष्पदाम् ॥

तथा कण्ठभूषणेऽप्याह—

अष्टद्वादशभिर्नान्दी पदैः कार्या समैरपि ।

वामदेवोऽप्याह—

सुप्तिङन्तं पदं तुर्यः श्लोकांशश्चेति पक्षयोः ।
न मुनेः सु(स्य)रसः किन्तु गतार्थ इति कादरः ॥

सा च नान्दी स्तुतिरिति कथ्यते । 'णदि स्तुतौ' इति धात्वर्थसारात् । पृषोदरादित्वात् साधुः । निघण्टुना पृषोदरादित्वेन व्युत्पादनात् । केचित्तु पचाद्यचि कृते 'प्रज्ञादिभ्यश्च' (पा. ५-४-३८) इति स्वार्थिकाण्प्रत्ययं विधाय व्युत्पादितवन्तः । तन्न । निघण्टुविरोधात् ।

'नाट्यपूर्वरङ्गस्य प्रधानाङ्गभूता स्तुतिर्नान्दी' इति रत्नकोषः । तथा—

'देवतादेर्नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्नान्दीति कोहलः' ॥

कोहल एव पुनराह—'सूत्रधार एव वा नान्दी' । यदाहुः—

'देवतादेर्नमस्कार(रो) मङ्गलारम्भपाठकः ।
नाट्यादौ शस्यते यस्तु नान्दी सा कथिता बुधैः' ॥

इति । तदेतदुपेक्षणीयम् । बहुप्रामाणिकविरुद्धत्वात् । सकलपूर्वरङ्गनिबन्धनासमर्थैरपि नाटके नान्दीनिबन्ध आवश्यकः ।

'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥
नाटकादिस्वरूपेण पूर्वरङ्गसमाश्रया ।
नान्दी नाम विधातव्या सर्वविघ्नोपशान्तये ॥

इति बादरायणात् ।

अथ च नान्दीच्छलेन 'आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात् कर्तव्यश्च' इति श्रुतेर्मुमुक्षुभिः स्वात्मन इव ईश्वरात्मनोऽपि श्रवणादिप्रतिपत्तिचतुष्टयं कार्यमित्यपाङ्क्ति तं वेदितव्यम् । तथाहि—वेदान्तेष्वित्यादिना श्रौतं ज्ञानमाह । ईश्वर इत्यादिनेशनाशक्तिमत्वेन व्याप्येत्यादिना विभुत्वेन च कार्यत्वाप्तोक्तत्वानुमाने तत् सूचितेऽन्तरित्यादिना च निदिध्यासनं स्थिरेत्यादिना साक्षात्कारस्तत्र सूचित इति । न च वाच्यमित्यादिश्रुतेः स्वात्ममात्रपरत्वात् कथमेवमिति ।

'द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च' ॥

इत्याद्येकवाक्यतयोभयत्वेन तदभियुक्तैस्तस्याः प्रतिपादनात् । नन्विन्दुवाचकपदालक्षितत्वेन कथमस्य पद्यस्य नान्दीत्वमिति चेत् । मैवम् । इन्दुबोधकपदवत्त्वमात्रस्यैव प्रयोजकत्वात् । न तु वाचकमिति यावत् । सा च बोधकता वेदशब्दस्येश्वरशब्दस्य स्थाणुशब्दस्य वा इन्दुव्याप्यवाचकत्वे तत्स्मारकत्वादप्युपपद्यते । वस्तुतस्तु नान्द्या इन्दुप्रतिपादकपदवत्तानियमे प्रमाणाभाव एव । अधिकं तु विस्तरभयादुपेक्षितम् ।

## कुमारगिरिराजीया

अत्र कविः कालिदासः प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थमिष्टदेवतास्मरणपूर्वकमाशिषं प्रयुङ्क्ते—वेदान्तेष्वित्यादि । स स्थाणुः शिवो वो युष्माकं निःश्रेयसाय नित्यानन्दायास्त्विति सम्बन्धः ।

सदा तिष्ठतीति स्थाणुः । 'स्थो णुः' (उ. ५-३-३७) इत्यौणादिको णुप्रत्ययः । निःश्रेयसमिति 'अचतुरविचतुर' (पा. ५-४-७७) इत्यादिना अच्प्रत्ययान्तं निपातितम् । कीदृशः ? स्थिरभक्तियोगसुलभः । स्थिरो भक्तियोगो येषां ते तथोक्तास्तैः सुलभः सुखेन प्राप्यः । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (पा. ३.३.१२६) इति खल्प्रत्ययः । रोदसी द्यावापृथिव्यौ व्याप्याक्रम्य स्थितम् । अनेन विभुत्वमुक्तम् । यं स्थाणुं वेदान्तेषूपनिषद्भागे एकपुरुषमेकमद्वितीयं पुरुषमात्मानमाहुर्ब्रुवन्ति ब्रह्मविद इति शेषः । तथा चोक्तं ग्रन्थकारेण—

अविकल्पविषय एकः स्थाणुः, पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।

ईश्वरमुमया न परं वन्दे नु मयापि तमधिगतम् ॥ (कं. स. सा. १-१)

इति । यस्मिन् स्थाणौ ईश्वर इत्ययं शब्दो यथार्थाक्षरोऽन्वर्थवर्णः । अस्याणिमाद्यैश्वर्यवत्वात् सार्थं इत्यर्थः । तथाविधः सभमन्यविषयो न विद्यतेऽन्यो

*(नान्द्यन्ते)*

**सूत्रधारः**—अलमतिविस्तरेण । *(नेपथ्याभिमुखमवलोक्य)* मारिष, इतस्तावत् ।

---

विषयो वाच्यो यस्य स तथोक्तः । यश्च स्थाणुर्नियमितप्राणादिभिर्नियमिता निरुद्धाः प्राणादयः पञ्च वायवो यैस्ते तथोक्तास्तैर्मुमुक्षुभिर्मोक्षार्थिभिरन्तरन्तरङ्गे मृग्यते विचीयते ।

एष नान्दीश्लोकः । नान्द्यादि सर्वलक्षणं शाकुन्तलव्याख्यान एवोक्तम् । अत्र 'पदादिनियमोऽपि वा' इति विकल्पात् पदादिनियमाभावः । अत्र 'वेदान्तेषु यमाहुरेकपुरुषम्' इत्यादिभिर्निर्गुणो लक्ष्यमाणः कथानायकः पुरूरवा नाम राजा सूच्यते । कुतः

'उर्वश्यस्यायुरसि पुरूरवा घृतेनाक्ते वृषणं दधाथाम्' (तै. सं. १-३-७-१) इत्यादिवेदवाक्येषु कथितत्वात् । 'अम्म मा अंबरदले गदी अत्थि' (वि. १-३-५) इत्यादिवाक्यप्रतीयमानरोदःसंचारत्वात् च । उर्वश्या मोक्षार्थिभिरप्सरोभिर्मृग्यमाणत्वात् च ।

**प्रकाशिका**

**नान्द्यन्ते इति । समनन्तरमेव वक्ष्यमाणलक्षणाया नान्द्या अन्ते सूत्रधारः प्रविशतीत्यर्थः । क्वचित् पुस्तके 'सूत्रधारः' इत्यस्यान्ते [illegible]ऽङ्को दृश्यते । स च सूत्रधारः प्रविशति वदति च इति क्रियाद्वयसूचनार्थः । सूत्रधारो नाम सूत्रं सबीजकं नाट्यानुष्ठानं धारयति प्रवर्तयतीति सूत्रधारः । तदुक्तम्—**

**'नाट्यस्य यदनुष्ठानं तत् सूत्रं स्यात् सबीजकम् ।**
**रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः' ॥**

**इति ।**

**सागरोऽपि—**

**'पूर्वरङ्गो भवेदेषामादौ देवार्चनाविधिः ।**
**तद्विधाता स विज्ञेयः सूत्रधारश्च सूत्रभृत् ॥**
**अनुष्ठानं प्रयोगस्य सूत्रमाहुः सबीजकम् ।'**

**इति । [illegible]—**

चतुरातोद्यनिष्णातोऽनेकभाषासमावृतः ।
नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
वेषोपचारचतुरः पौरेपणविचक्षणः ।
नानागतिप्रचारज्ञो रसभावविशारदः ॥
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः ।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥
तत्तद्गीतानुगलयकलातालावधारणः ।
अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः॥
एवं गुणगणोपेतः सूत्रधारो निगद्यते ।

इति । तत्र तावत् पूर्वरङ्गमारभ्यामुखपर्यन्तमयं क्रमः—

तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसञ्ज्ञादेर्नाटकस्याप्यथामुखम् ॥

इति । तत्रेति नाटके । यद्यपि—

सभापतिः सभासंस्था गायका वादका अपि ।
नटी नटश्च मोदन्ते यत्रान्योन्यं तु रञ्जनात् ॥
अतो रङ्ग इति ज्ञेयः पूर्वं यत् संप्रकल्पते ।
तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥

इति भावप्रकाशोक्तलक्षणात् पूर्वं रज्यते जनोऽस्मिन्निति पूर्वरङ्ग इति व्युत्पत्तेश्च, पूर्वरङ्गो नाट्यशालोच्यते तथापि तात्स्थ्यादुपचारहेतोरधिष्ठानलक्षणया पूर्वरङ्गशब्देन व्युत्थापनाद्युच्यते । तदुक्तं साहित्यदर्पणे (५-२२)—

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥'

किं च दशरूपके (२.३)—

'पूर्वरङ्गं विधायैव सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥'

अन्यत्रापि—

प्रयुज्य रङ्गान् निष्क्रामेत् सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत् पश्चात् सूत्रधारगणाकृतिः ॥

ज्योतिरीश्वरोऽपि—

'आरम्भं भरतः कृत्वा सालङ्कारः शुभाकृतिः ।
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः' ॥

इति । सङ्गीतकल्पतरुकारोऽपि—

सूत्रधारः पठेन्नान्दीमन्यो वा रङ्गभूमिगः ।
मङ्गलं सूचयित्वा तु ललितेन शुभान्विताम् ॥

इति । अत्र च 'सूत्रधाराख्यो भरतो नट एव दिक्पालस्तुतिजर्जरपूजादिनान्द्यन्तं पूर्वरङ्गं जवनिकान्तर्विदधीत । तस्मिंश्च विनिर्गते रङ्गभूमावागते सूत्रधारसमालंकारगुणोऽन्यः स्थापकाभिधो नटो वैष्णवस्थानकादिना सूत्रधारवत् प्रविश्य काव्यमास्थापयेत् सूचयेत् । अत एव वक्ष्यमाणेन 'नटी विदूषको वा' इति सूत्रधारलक्षणे स्वसमत्वेनस्थापकाख्यनटेन सूत्रधारेण च संलाप इति सङ्गच्छते' इति केचिदाहुः । अपरे तु—'दिक्पालस्तुतिजर्जरपूजान्तमेव पूर्वरङ्गं नान्दीव्यतिरिक्तं कृत्वा सूत्रधारे विनिर्गते तत्समगुणत्वात् स्थापक एव सूत्रधारो नान्दीं जवनिकान्तः पठित्वा रङ्गभूमावागत्य काव्यमास्थापयेत्' इत्याहुः । 'इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयति' इति साहित्यदर्पणकारः । शक्रध्वजस्य च जर्जर इति पूर्वाचार्यकृता सञ्ज्ञा ।

तथा च—

'प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये' ॥

इति । अस्येति पूर्वरङ्गस्य । अतश्चास्या आवश्यकत्वेनोक्तत्वात् प्रत्याहारादिद्वाविंशदङ्गेषु केवलं नान्द्येव सर्वनाटकेषु बहुधा विधीयते । तल्लक्षणं तु देवपाणिविरचितदशरूपकटीकायाम्—

'देवद्विजनृपादीनामाशीर्वचनपूर्विका ।
नन्दन्त्यस्यां सुरा यस्मात्तस्मान्नान्दीति कीर्तिता ॥'

तथा नाट्यलोचनकारोऽप्याह—

'आशीर्वचन नमस्क्रिया च शशिनः सङ्कीर्तनं वस्तुनो
निर्देशो गुरुसंस्तुतिर्मधुलिहो मोदाय पुष्पाञ्जलिः ।
शब्दैर्द्वादशभिः पदैरथ समैर्वाष्टभिर्निर्मिता
सद्वस्तेन ससंधिना च कथिता नान्दीति सर्वागमे' ॥

**मातृगुप्ताचार्या** अप्याहुः—

'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः ।
नान्दीति कथ्यते'... इति ।

**साहित्यदर्पणे** (६-२४) अपि—

आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युता द्वादशभिरष्टाभिर्वा पदैर्भवेत् ॥

इति । इयं चाष्टपदा द्वादशपदा समपदा वा विधेया । तदुक्तम्—

'सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वा पदैर्युताम् ॥
पदैरथ समैः'

इति चेत्यादि । पदनियमोऽप्यस्यामुक्तो यथा—

'श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यं च पदमाहुर्विशारदाः ॥'

यत्त्वत्र **साहित्यदर्पणकृदाह**—'कालिदासादिमहाकविप्रबन्धेषु च वेदान्तेष्वित्यादौ नान्दीलक्षणायोगात् पूर्वरङ्गस्यैव रङ्गद्वाराख्यमङ्गलमारभ्य कविः कुर्यादित्याद्युक्तत्वाच्च रङ्गद्वारमेवेदं न नान्दी' इति, तन्मूलादर्शननिबन्धनम् । यतः 'प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि' इत्यादिपूर्वोदाहृतवचनेनास्या अवश्यकर्तव्यत्वात् 'अष्टैर्द्वादशभिः पदैरथ समैर्यद् वाष्टभिर्निर्मिता' इत्यादिसमनन्तरोदाहृतनाट्यलोचनकारोक्तनान्दीलक्षणेऽस्याः समपदत्वेनाप्युक्तेरत्र च श्लोकपादपदाभिधाननयेऽवान्तरवाक्यपदाभिधाने च चतुष्पदात्वेन तत्पदमते स्थिरभक्तीति क्रियाविशेषणान्तपदविश्रान्ततः षड्विंशतिपदात्वेन चातिस्पष्टतया नान्द्या विद्यमानत्वान्नान्दीलक्षणायोगाभिधानं गजनिमीलिकया मौखर्यमात्रमित्यास्तां विस्तरेण । अत्र च समासोक्त्या पूर्वोक्तप्रकारेण काव्यार्थप्रकाशनात् पत्रावलीसमाख्येयं नान्दी । तथा चोक्तं **नाटयदर्पणकृता**—

'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नाम्ना पत्रावली तु सा ॥

इति ।

## प्रकाशिका

'यत्र किञ्चिन्नतौ पादौ स्यातां मूलप्रसारितौ ।
वैष्णवं तत्तु निर्दिष्टं स्थानकं विष्णुदैवतम् ॥'

इति । **ज्योतिरीशवचनोक्तवैष्णवस्थानकेन प्रथमप्रविष्टसूत्रधारसमः** स्थापकाभिधोऽपरो नटः ।

'दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद् वस्तु बीजं वा मुखं पात्रमथापि वा ॥'

इत्यभिधानात् ।

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥
भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।
पदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥' (सा. द. ६-१३-१४)

इत्युक्तलक्षणवाग्व्यापारात्मकभारतीरूपाम् 'अलमतिविस्तरेण' इत्यारभ्य 'प्रस्तावना' इत्यन्तां प्रस्तावनामवतारयति—**अलमित्यादिना** । अतिविस्तरेण पूर्वरङ्गाङ्गप्रपञ्चेनालं पूर्यतामित्यर्थः । प्रत्याहारादिनिखिलपूर्वरङ्गाङ्गकरणे हि कथारम्भोत्कण्ठितानां जनानां जाड्यता स्यादतस्तिष्ठत्वयमेतत्प्रपञ्च इति भावः । **नेपथ्याभिमुखमिति** । नेपथ्यं जवनिकान्तर्भूमिर्वेषपरिग्रहस्थलम् । 'अन्तर्जवनिकामाहुर्नेपथ्यम्' इति सागरोक्तेः । केचित्तु—'रङ्गभूमौ तु नेपथ्यं स्यात् प्रसाधने ।' इति विश्वलोचनोक्त्यनुसन्धानेन नेपथ्यं रङ्गभूमिमाहुः । अपरे पुनः—'नेपथ्यं स्याज् जवनिका' इति कोषमुपन्यस्य नेपथ्यं जवनिकामेवाहुः ।

## कोणेश्वरी

प्रथमपात्रप्रवेशसमयमाह—**नान्द्यन्ते** इति । नान्द्या अन्ते अवसाने सूत्रधारः प्रविश्याह इति शेषेण सम्बन्धः । वचनशरीरमाह-**मारिष** इत्यादि । मान्योक्तौ मार्ष (भाव) मारिषौ । तथा चोक्तम्—

मान्यो भावेति वक्तव्यः किंचिदूनस्तु मारिषः । इति । भावापेक्षयाल्पमान्य इत्यर्थः ।

## कुमारगिरिराजीया

अथ प्रस्तावनां विवक्षुस्तदङ्गयोः प्रथमं प्ररोचनां प्रस्तौति—**नान्द्यन्ते सूत्रधार इत्यादि** । नेपथ्याभिमुखमवलोक्य । 'मारिष, इतस्तावत्'—आगम्यतामिति शेषः । मारिषो नाम नटः सूत्रधारिणा मारिष इत्यामन्त्र्यते । सूत्री नटेन भाव इति तेनासौ मारिष इत्युक्तत्वात् ।

*(प्रविश्य)*

**पारिपार्श्वकः**—भाव, अयमस्मि ।

**सूत्रधारः**—मारिष,[1] परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा । [2]अहमस्यां कालिदासग्रथितवस्तुना[3] नवेन त्रोटकेनोपस्थास्ये । तदुच्यतां पात्रवर्गः[4] स्वेषु स्वेषु पाठेष्ववहितै[5]र्भवितव्यमिति ।

**पारिपार्श्वकः**—यथाज्ञापयति भावः । *(इति निष्क्रान्तः)*

**सूत्रधारः**—यावदिदानीमार्य[6]विदग्धमिश्रान् विज्ञापयामि ।

*(प्रणिपत्य)*

प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमानात् ।
शृणुत जना[7] अवधानात् क्रियामिमां कालिदासस्य ॥२॥

---

**प्रकाशिका**

मारिषेति—मारिषः स्थापकाख्यसूत्रधारकल्पः पारिपार्श्वाभिधो नटः । लक्षणं चाभाणीद् भरतः—

'सूत्रधारस्य पार्श्वे यः प्रवदन् कुरुतेऽर्थनाम् ।
काव्यार्थसूचनालापं स भवेत् पारिपार्श्वकः ॥'

इति । उक्तं चान्यत्र—

'मान्यो भावः समुद्दिष्टः किञ्चिदूनस्तु मारिषः' ।

इति ।

कालिदासेन तदाख्यकविना ग्रथितं वस्तु इतिवृत्तं यत्र । त्रोटकेन तन्नामकेनोपरूपकेण । तल्लक्षणं साहित्यदर्पणे (६-२७३)—

---

१. बहुशः कु. २. तावदहं—कु. ३. विक्रमोर्वशीयं नामापूर्वं नाटकं प्रयोक्ष्ये—कु. विक्रमोर्वशीनाम्ना—को. ४. भरतवर्गः—कु. ५. पात्रेषु असंमूढैः—कु. स्थानेषु—को. ६. आर्यमिश्रान्—सा. ए. ७. मनोभिरवहितैः—सा. ए.

प्रकाशिका

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम् ॥

इति। प्रत्यङ्कं सविदूषकत्वादत्र शृङ्गारोऽङ्गी। 'प्रत्यङ्कं सविदूषकम्' इति तु प्रायिकाभिप्रायम्। शृङ्गाराङ्गित्वमात्रमिह विवक्षितम्। तेन कस्मिंश्चिदङ्के सविदूकषत्वव्यभिचारेऽपि न क्षतिः। अन्यत् सर्वं नाटकवत्।

'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्।'

इति तत्रैवोक्तेरिति। पात्रवर्गो नर्तकसमुदायः। अवहितैः सावधानैः। आर्या अभ्यर्हिताः, विदग्धाश्चतुःषष्टिकलावेदिनः, तन्मिश्रान् संवलितान्। सभ्यानित्यर्थः। यद्वा आयाता दूरं गता भ्रान्तत्वादिदोषेभ्य इत्यार्याः। यद्वा आर्याः सत्कुलादिसम्पन्नाः। यदाह भरतः—

'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता।
अद्रोह इति येष्वेतत् तानार्यान् संप्रचक्षते ॥'

कार्यरसवत्सलमनसो विदग्धा मिश्राः पूज्या वा। पूज्ये मिश्रवचनं नित्यबहुवचनान्तम्। 'मरीचिमिश्रैर्दक्षेव' इति विष्णुपुराणात्, लोकेऽपि व्यवहारदर्शनाच्च। **प्रणयिष्विति**। प्रणयः प्रीतिस्तद्वत्सु। दाक्षिण्यमानुकूल्यम्। सद्वस्तु सदितिवृत्तम्, पुरुषो वर्णनीयो नायकः, तयोरादरातिशयात्। समीचीनं वृत्तं यस्यैतादृशः पुरुषो वा। क्रियां कृतिम् ॥२॥

कोणेश्वरी

एषा उपस्थिता परिषत् सभा प्राचीनकवीनां दृष्टो रसप्रधानः प्रबन्धो यया सा तथा। शाकपार्थिवत्वात् मध्यमपदलोपी समासः। रसः शृङ्गारादिनवसङ्ख्याकः।

'शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः।
बीभत्सरौद्रशान्ताश्च नव नाट्ये रसाः स्मृताः ॥'

इति। अहमस्यामुपस्थास्ये। तत् पात्रवर्गं इत्युच्यतामित्यन्वयः। अस्यां सभायामुपस्थास्ये उपस्थानं करिष्यामि। करणाकाङ्क्षायामाह—

## कोणेश्वरी

**विक्रमेति ।** विक्रमोर्वशीनाम्ना नवेन तोटकेन । तोटकता चास्य देवमानुषसंवादात् । तथा चोक्तम्—

'देवमानुषसंवादः पञ्चाङ्कस्तोटको मतः' ।

इति । विक्रमन(ल)ब्धा उर्वशी । अत्र तेनोपाधिना **विक्रमोर्वशी** ग्रन्थनाम । तत् किमन्यानि नाटकान्युपेक्ष्यानेनोपस्थानमार्नारिप्सितमित्यत आह— **कालिदासेति ।** कालिदासेन ग्रथितं गुम्फितं वस्तु समीचीनपदार्थस्वरूपं पुरूरवोलक्षणं यत्र तत्तथा । तेनैतेन नाटकान्तरापेक्षया नायकोऽत्र साधीयानित्येतदुपाद(पस्था)नप्रयोजकं रूपमुक्तम् । नायकस्तु नाटके यथा —

'प्रियंवदस्त्यागरतो दयार्द्रो लोकानुरक्तस्तरुणो विनीतः ।
विद्याश्रयो धर्ममतिः कृतज्ञो निरूपितो रूपितनायकोऽसौ' ।।

तदीयवक्तव्यस्वरूपमाह—स्वेषु स्वेषु स्थानेषु स्वीयस्वीयकृत्येषु भवद्भिरवहितैः सावधानैर्भवितव्यमिति । यथा न कुत्रापि कृत्ये स्खलनं जायते तथा व्यवहर्तव्यमित्यर्थ । इयं हि सभा दृष्टबहुतरप्राचीनकविप्रणीतशृङ्गारादिरसप्रधानप्रबन्धा । इदं च तोटकं नवमतोऽनेनास्या गुरुकृत्न(?)मतिदुष्करम् । प्राच्यादिमहाकवयो विश्वदृश्वानः । दृष्टतत्कृतप्रबन्धानामाधुनिकाल्पपदार्थकृतप्रबन्धे तथादरो न भवतीति स्फुटदृष्टत्वादिति भावः । अथ **वोक्तिभङ्ग्या** कवेरुत्कर्ष एव सूच्यते । तथा हि— अमी ईदृशाः सभ्या अत्र तोटके तेभ्यः । विशेषमाकलयन्तु । बहवो हि विशेषा अत्र सन्ति । कालिदासकृतत्वात् पुरूरवःसमाश्रितोर्वश्याश्रितत्वाच्च । कालिदासो हि कवीनामग्रणीर्नायकानां पुरूरवाः नायिकानामुर्वशी चेति । अथ प्राचीननाटकान्युपहसति । तानि हि वृद्धकृतानि । वृद्धा हि गलितरसाः स्फुरणशून्या भवन्ति । पूर्वेषामित्यनेन वृद्धत्वं तत्कारिणां व्यञ्जितम् । रसप्रबन्ध इति । सो(हमथ)अत एव कालिदासप्रथितवस्तुनेति सगर्वोक्तिरिति रहस्यम् । **प्रविश्येत्यादि ।** नटः प्रविश्येति व्युत्क्रमेणान्वयः । वदतीति शेषः । यथेत्याज्ञानतिक्रमे । भावो विद्वानित्यर्थः ।

'भगिनीपतिरावुत्तो भावो विद्वानथावुकः' इत्यमरात् (१-६-१२) ।

कालिदासकृतैतत्तोटकेन सभोपस्थानादेव भवती विदुषा मयावगतेति प्रकाशनार्थं विद्वत्त्वेनोपन्यासः । **सूत्रेति ।** ग्रन्थकाव्यार्थमेकदेशेन

**कोणेश्वरी**

सूत्रधारस्योपन्यासः । यावदिति प्रकृतोपक्रमे । अस्यां संसदि, आर्या मान्याः श्रोत्रिया इति यावत् । विदग्धा रसिका इति यावत् । मिश्राः पण्डिताः सहस्राधिकरणवेत्तार इति यावत् । तेषां द्वन्द्वः । अत्रार्याणां प्रथमं निर्देशो भयहेतुकार्म्याहिततया । ते हि श्रोत्रिया अभिमानिनो विशेषविद्वांसः सुलभक्रोधा मिथ्यादोषदातारो भवन्तीति भयम् । प्रणिपत्येत्यनेन नमस्कारोपलब्धौ शिरसेत्यादरद्योतनाय । याच्ञाप्रकाशनाय विज्ञापनोक्तिः । याच्ञाशरीरमेवाह—

**प्रणयिष्वित्यादि** । हे जना आर्यादय इत्यर्थात् । **कालिदासस्ये**मां क्रियामेतद् ग्रन्थरूपं व्यापारमवधानाच् छृणुतैकचित्तीभूयाकर्णयतेत्यर्थः । तथा च भवद्भिरत्र दीयमानमवधानमर्थयामह इत्यर्थः । किमर्थमस्माभिः स्वकार्यं विहायात्रावधानं दीयेत इत्यत आह—प्रणयिष्विति । प्रेमपात्रेषु मादृशेषु यद् दाक्षिण्यं तद्वशाद् दाक्षिण्याधीनत्वात् । भवन्तो हि दक्षिणाः । दक्षिणानां च दाक्षिण्यमुचितमेवेत्यर्थः । तथापि न स्वप्रयोजनं पश्यामि इत्यत आह—अथवेति । सद्वस्तु यः पुरुषः पुरूरवास्तस्मिन् यो बहुमान आदरस्तस्माद्वेत्यर्थः । तस्य पुण्यपुरुषवद् भवतां पुण्यं स्वप्रयोजनं भविष्यतीति भावः । ननु पुण्यहेतवो बहव एव सन्ति तत् किमनेने—त्याह—**कालिदासस्येति** । कालिदासक्रियाश्रवणाद् बहुषु पदार्थेषु विज्ञत्वं कौतुकमप्यानुषङ्गिकं भवतां भविष्यतीति पुण्यहेत्वन्तराद् विशेष इत्यन्वयः । यद्वा आर्यादीन् प्रति प्रत्येकमेवानुक्रमेणोपन्यासः । तथाहि—आर्या इमां क्रियां शृणुत प्रणयिष्वस्मादृशेषु दाक्षिण्यवशात् । भवतामस्मासु दाक्षिण्यमेवात्र श्रवणे हेतुरिति गूढोपहासोक्तिः । न च वाच्यं भवन्तः प्रणयिन एव कुतोऽस्माकमिति । वैरनिमित्तस्यास्मास्वभावात् । प्रमानवबोधकाभावाच्चेति तात्पर्यार्थः । अथवा हे रसिका यूयमेव शृणुत । कुतः । सद्वस्तुपुरुषबहुमानात् । सद्वस्तुत्वमस्य नायकस्य परमरसिकत्वेन । रसिकाः परमरसिके रज्यन्तीत्युचितमेव । मिश्रान् प्रत्याह—इमां क्रियां शृणुत कालिदासस्य । यतः कालिदासो हि न केवलं कविरपि तु पण्डितोऽपि । तथा च भवन्तोऽपि पण्डिता विशेषमवधारयन्तु जानन्त्वेव वा तस्मिन्ननुरागादेव वा । विदुषां विद्वत्स्वनुराग उचित एव । यदाहुः—

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः । इत्यादि ॥२॥

**कुमारगिरिराजीया**

**परिपार्श्वं** यथा भवति तथा वर्तते । पारिपार्श्वको नट इत्यर्थः । 'परिमुखं च' । (पा. ४-४-२९) इत्यत्र चकारात् ठक्प्रत्ययः । **बहुश इत्यादि** ।

(नेपथ्ये)

अज्जा, परित्ताअध परित्ताअध। जो सुरपक्खवादी, जस्स वा अंबरदले गदी अत्थि। [आर्याः, परित्रायध्वं परित्रायध्वम्। यः सुरपक्षपाती, यस्य वा अम्बरतले गतिरस्ति]

---

**कुमारगिरिराजीया**

बहुशोऽनेकशः। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' (पा. ५-४-४२) इति शस्प्रत्ययः। प्रयोगबन्धः प्रयोगोऽभिनयो बध्यतेऽस्मिन्निति प्रयोगबन्धो नाट्यम्। अत्र बहुदर्शितत्वकथनेन सभा योग्यतरेति तत्प्रशंसा गम्यते। **तावदहमित्यादि**। विक्रमोर्वशीयं नाम नाटकं रूपकविशेषमपूर्वाभिनयं प्रयोक्ष्येऽभिनेष्यामि। विक्रमं चोर्वशीं चाधिकृत्य कृतं नाटकं विक्रमोर्वशीयम्। 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' (पा. ४-३-८८) इति छप्रत्ययः। विक्रमशब्दः पुरूरवसः सञ्ज्ञेति संप्रदायः। अनेन प्रयोज्यनिवेदनं कृतम्। भरतवर्गो नटवर्गः। स्वेषु पात्रेष्वनुकार्यरूपेषु। असंमूढैरप्रमत्तैः।

**प्रणयिष्वित्यादि**। स्वविद्याविशेषं पश्यतेति प्रार्थयमानेष्वस्मास्विति शेषः। दाक्षिण्यादादरात्। अथवेति पक्षान्तरे। सद्वस्तुपुरुषबहुमानात् प्रशस्तकथानायकगौरवात्। अवहितैरेकाग्रैर्मनोभिश्चित्तैरुपलक्षिताः कालिदासस्येमां क्रियां कृतिं शृणुत। प्रणयिषु दाक्षिण्यादित्यनेन सभादाक्षिण्यपात्रत्वात् नटानां प्रशंसा कृता। सद्वस्तुपुरुषबहुमानादित्यनेन वस्तुप्रशंसा कृता। कालिदासस्येत्यनेन महत्त्वोपपादकविशेषणाभावेऽपि प्रसिद्ध्या एव तस्य माहात्म्यं गम्यते। कालिदासस्य क्रियामित्यनेन तत्सम्बन्धित्वकथनात् काव्यप्रशंसा कृता ॥ २ ॥

**प्रकाशिका**

नेपथ्ये। अज्जा इति। आर्याः परित्रायध्वं परित्रायध्वम्। यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति। अत्र क्वचित् क्वचिद् गाथादिषु लिङ्गवचनपदविपर्यासाः 'प्राकृते लिङ्गवचनमतन्त्रं पूर्वनिपातानियमश्च' इत्युक्तत्वाज्ज्ञेयाः। अत्रेदमवधेयम्। इतिवृत्तं हि वस्त्वित्युच्यते। तच्च—

'सूच्यमेव भवेत् किञ्चिद् दृश्यं श्रव्यमथापरम्'

इतीतिवृत्तस्य द्वैविध्यमुपन्यस्य—

सूत्रधारः–(*कर्णं दत्त्वा*), अये, किं नु खलु मद्विज्ञापनानन्तर-मार्तानां [1]कुररीणामिवाकाशे[2] शब्दः श्रूयते ।

[3]मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः ।
आकाशे सुरगणसेविते समन्तात्
किं नार्यः कलमधुराक्षरं प्रगीताः ॥३॥

प्रकाशिका

'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥'

इत्यादि प्रतिपादितम् । प्रकृते तु—'नेपथ्ये' इत्यादिना यत्र यत्र यत् प्रस्तूयते सा चूलिका । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम्' । इति लक्षणात् । यथात्रैव तावत् 'नेपथ्ये' इत्यारभ्य 'अंबरदले गदी अत्थि' इत्यन्तेन कुबेरभवनादागच्छन्त्याश्चित्रलेखाद्वितीयाया उर्वश्या दानवापहरणसूचनमिति ॥

कोणेश्वरी

**अज्जा परित्ताअधेति** । आर्याः । परित्रायध्वं, परित्रायध्वम् । द्विरुक्ति-रत्यावेगे ॥

प्रकाशिका

**मत्तानामिति** । किमिति वितर्के । स च सर्वत्र षट्पदादिशब्दादिष्वन्वेति । कलान्यव्यक्तानि मधुराणि चाक्षराणि यस्यां क्रियायामिति यथा तथा । यद्यपि कलशब्दोऽव्यक्तमधुरवाचकस्तथापि मधुरपदस्य वर्तमानत्वात् केवलाव्यक्तपरो ग्राह्यः । यद्वा कं चित्रं लान्तीति कलानि आश्चर्यकारीणि मधुराण्यक्षराणि यत्र यस्यां क्रियायाम् । यद्वा कं द्युतिं लान्ति तानि । अनुप्रासादिघटनाच्छोभमाना-नीति यावत् । यद्वा कं शुद्धार्थं लान्ति तानि । प्रसिद्धार्थपदयुक्तानीति यावत् । तेन च 'प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते' इति लक्षणोक्तप्रसादाख्यगुणवत्ता ध्वनिता । यद्वा कं स्मरं लान्ति तानि । यच्छ्रवणमात्रेण झटिति मदनोद्भवो भवतीति भावः । यद्वा कं स्मरं लान्ति वशीकुर्वन्ति तद्विधानि । यदाकर्णनेन तिर्यञ्चोऽपि हर्षकलिता वशीभवन्ति, किमुतान्ये सचेतस इति हृदयम् ।

१. विमानचारिणाम्—को. २. अकस्मात्—को. ३. Verse om. सा. ए.

*(विचिन्त्य)* [१]भवतु । ज्ञातम् ।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमनुसृत्य[२] निवर्तमाना ।
बन्दीकृता [३]विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः [४]करुणमप्सरसां गणोऽयम् ॥४॥

*(इति निष्क्रान्तः)* ।

प्रस्तावना

---

**प्रकाशिका**

को ब्रह्मानिलसूर्याग्निचित्रारियमकेतुषु ।
विष्णुवाहनशर्वेऽब्धौ सितकर्णे वसौ द्युतौ ।
स्वर्गे चक्रे तथा मित्रे शुद्धेऽर्थे स्मरकालयोः ॥

इत्येकाक्षरः । 'को ब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु' इति विश्वलोचनः । प्रगीता गातुमुपक्रान्ताः । प्रगीता इति 'आदिकर्मणि क्तः' । (पा. ३-४-७१) 'किंनर्यः' इत्यपि क्वचित् पाठे किंनरवनिता इत्यर्थः । परं त्वनुपादेयोऽयं पाठः । वितर्कार्थककिंपदस्यात्रातीवावश्यकत्वात् । त्रिगताभिधं चेदं वीथ्यङ्गम् । तल्लक्षणं दशरूपके—

'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम्' ।

इति । अत्राकाशे श्रुतः शब्दः श्रुतिसाम्यतः स्वरावयवीभूतसूक्ष्मशब्दसाम्यतः षट्पदादीनां किमित्यादिभिरनेकार्थैर्योजितः ।

'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ।
सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा' ॥

इति सङ्गीते ॥३॥

**कोणेश्वरी**

सूत्रेति । वदतीति शेषः । अकस्मादित्यज्ञातनिमित्तकत्वप्रकाशनाय । आकाशे श्रूयमाणमार्गे इत्यर्थः । विमानचारिणामित्यनेन ध्वनेः कारुण्येऽपि श्रुतिरमणीयत्वं सूचितम् ।

---

१. आम्—को २. उपसृत्य—सा. ए., उपनृत्य—को; ३. विबुधशत्रुभिः—को ४. शरण—कं

### प्रकाशिका

ऊरूद्भवेति । नरस्य नरावतारस्यार्जुनस्य सखा मुनिर्नारायणस्तस्योरूद्भवा सक्थ्यवयवोत्पन्ना । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः (२-६-७३) । सुरस्त्री उर्वशीसमाख्याप्सरोरूपा । कैलासनाथो महादेवस्तमनुसृत्य सेवित्वा । कैलासनाथमनुसृत्येत्यत्र 'कर्मप्रवचनीययुक्ते द्वितीया' (पा. २-३-८) इति द्वितीया । 'कैलासनाथमुपनृत्य' इति पाठे तत्समीपे नृत्यं कृत्वेत्यर्थः । 'विवक्षातः कारकविभक्तयो नाना भवन्ति' इति शाब्दिकोक्तिमनुसन्धायाधिकरणविवक्षायां कर्मत्वम् । बन्दीकृता हठगृहीताः । विबुधशत्रवो दैत्याः । मार्गस्यार्धमर्धमार्गो मार्गान्तरालम् । क्रन्दति रोदिति । उर्वशी किल नारायणोरुसंभूतेति पुराणम् ॥४॥

प्रस्तावनेति । तल्लक्षणं भावप्रकाशे—'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुतापेक्षितैर्मिथः । आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनाऽपि सा ॥' दशरूपकेऽपि— 'सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपिचित्रोक्त्या यत्तदामुखम् ।' इयं च प्रस्तावना आमुखापराख्या भारत्यङ्गमेवेति । अत्र च— 'उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥' इत्युक्तप्रस्तावनापञ्चाङ्गेषु—'यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥' इति लक्षणोक्तप्रकारेणेह 'नेपथ्ये । अज्जा परित्ताअध' इत्यारभ्य 'क्रन्दत्यतः करुणमप्सरसां गणोऽयम्' इत्यन्तेनाप्सरसां प्रवेशं सूचयित्वा निष्क्रान्तेन सूत्रधारेण स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजित इति ॥

### कोणेश्वरी

स एवाह—आमित्यादि । आमित्यव्ययं स्मृत्यभिनये । भवत्विति लोकोक्तौ । ज्ञातमिति बोधप्रकाशे । किं ज्ञातमित्याकाङ्क्षायामाह—ऊरूद्भवेत्यादि । अतः शरणं नि(नी)रक्षकं यथा स्यादेवमाकाशस्थो गणः समूहः (अप्सरसा)माकाङ्क्षायामाह—बन्दीकृतेति । विष्णुशत्रुभिरर्धमार्गे सुरसुन्दरी बन्दीकृतावगृहीतेत्यर्थः । सुरस्त्रियास्तत्र गमनं कथमभूदित्यत आह—कैलासेति । कैलासनाथं गिरीशं कुबेरं वोपनृत्य तस्य समीपे नर्तित्वा निवर्तमाना ततः प्रत्यागच्छन्तीत्यर्थः । सुरस्त्रियोऽपि बहवः सन्ति तन्मध्ये का सा इत्यत आह— ऊरूद्भवेति । नरसखस्य मुनेर्नारायणस्य ऋषेरूरूद्भवा ऊरुभागादुद्भव उत्पत्तिर्यस्याः सा तथा । श्रूयते हि पुरा नरनारायणावृषी उग्रं तपश्चेरतुः । ततः

*(ततः प्रविशन्त्यप्सरसः ।)*

**अप्सरसः**—अज्जा, परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अंबरदले गदी अत्थि । [आर्याः, परित्रायध्वम्, परित्रायध्वम् । यः [1] सुरपक्षपाती यस्य वा अम्बरतले गतिरस्ति ।]

*(ततः प्रविशत्यपटीक्षेपेण राजा रथेन [2] सूतश्च)*

**राजा**—[3]अलमाक्रन्दितेन । [4]सूर्योपस्थाननिवृत्तं पुरूरवसं मामुपेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति ।

**रम्भा**—असुरावलेपादो [असुरावलेपात् ।]

---

**कोणेश्वरी**

स्वराज्यग्रहणशङ्किना सुरपतिना रम्भाप्रमुखा अप्सरसस्तयोर्मोहनाय प्रेषिताः । तासु श्रुतपूर्वं बहुविधं विभ्रमं दर्शयन्तीषु नारायणमुनिना ऊरोरग्रं निर्मथ्य काचिदप्सराः सृष्टा । तां दृष्ट्वा सर्वा व्रीडिताः (म. पु. ६०) ॥४॥

**कुमारगिरिराजीया**

ऊरूद्भवेत्यादि । नरसखस्य नारायणस्य मुनेरूरूद्भवा सुरस्त्री उर्वशी कैलासनाथं कुबेरमुपसृत्य सेवित्वा निवर्तमाना प्रत्यागच्छन्ती अर्धमार्गे मार्गस्यार्धमर्धमार्गस्तस्मिन् । 'अर्धं नपुंसकम्' (पा. २-२-८) इत्येकदेशिसमासः । विबुधशत्रुभिरसुरैर्बन्दीकृता बलात्कारेण गृहीता । अतोऽस्मात् कारणादयमप्सरसां गणः करुणं दुःखं यथा तथा क्रन्दस्याक्रोशति । अनेन पात्राक्षेपहेतुः प्रयोगातिशयो नाम आमुखाङ्गमुक्तं भवति ॥४॥

**प्रकाशिका**

ततः प्रविशन्तीति । ततः प्रविशन्तीत्यनेन प्रस्तावनान्तसूचितानामप्सरसां प्रवेशः । अप्सरसः । आर्याः, परित्रायध्वं, परित्रायध्वम् । यः सुर-

---

१. अमरपक्षपाती—को. २. रथारूढः-सा. ए., को. ३. अलमलमा—को. ४. सूर्योपस्थानात् प्रतिनिवृत्तं—सा. ए.

## प्रकाशिका

पक्षपाती, यस्य वाम्बरतले गतिरस्तीति। कुत्रचित् 'ततः प्रविशन्त्यपटीक्षेपेण' इति पाठः। स नाटकग्रन्थादर्शननिबन्धनः। यतः—'नासूचितस्य पात्रस्य प्रवेशो नाटके मतः' इति नाटकसमयप्रसिद्धेर्यत्रासूचितपात्रप्रवेशस्तत्राकस्मिकप्रवेशोऽपटीक्षेपेणेति वचनं युक्तम्। अत्र तु प्रस्तावनान्ते सूचितानामेवाप्सरसां प्रवेश इति। केचित् पुनः—न पटीक्षेपोऽपटीक्षेप इति विग्रहं विधाय पटीक्षेपं विनैव प्रविशन्तीति समर्थयन्ते तदप्यापाततःकुचोद्यमात्रमित्यास्तां तावत्। पुरूरवसः प्रवेशे त्वपटीक्षेपो युक्तोऽसूचितत्वात्। अपटी जवनिका तस्याः क्षेपेण सारणेन। 'अपटी काण्डपटः स्यात् प्रतिसीरा जवनिका तिरस्करिणी' इति **हलायुधः** (२-१५४)। **राजा**—मामुपेत्य मां प्राप्य। 'समेत्य' इति पाठे मिलित्वा। **रम्भा**—असुरावलेपात्। अवलेपो गर्वः। 'अवलेपस्तु दोषे स्याद् गर्वे लेपे च संगमे।' इति **विश्वलोचनः**। 'अवलेपादो' इत्यत्र 'आदो दुहय' इति पञ्चम्यामादो इत्यादेशः॥

## कोणेश्वरी

ततस्तामिन्द्रियैकादानं (?) विनैवेत्यर्थः। तथा चोक्तम्—

'पटक्षेपो न कर्तव्य आर्तराजप्रवेशयोः।

इति। तथा—

भीतसंभ्रान्तनीचानाममतप्रतिपादिनाम्।
अपटीक्षेपतः प्रोक्तः प्रवेशो मुनिभिः सदा॥

इति। को रक्षतीति विशेषाकाङ्क्षायामाह—**योऽमरेति**। योऽमरपक्षपाती देवपक्षपाती। ननु देवपक्षपातिनो भूमात्रगतयो बहवः सन्ति। न च प्रकृते तेभ्यो रक्षा सम्भवतीत्याह—जस्स वेति। वाकारः समुच्चये। यस्य वा अम्बरतले गतिरस्तीति सूचितं पुरूरवसः प्रवेशमाह—तत इति। रथे आरूढ उपविष्ट इत्यर्थः। उपविष्टेनैव राज्ञा रङ्गे प्रवेशः कर्तव्यः। यदाह—

उपविष्टो विशेद्रङ्गं योगी भोगी च भूमिपः।

इति। प्रवेशश्चास्य वीररसेन। स यथा—

सोत्साहः सौष्ठवोपेतः सावष्टम्भो घनध्वनिः।
साक्षेपवचनो दृप्तः प्रायो वीररसी विशेत्॥

**राजा**—किं पुनरसुरावलेपेन भवतीनामपराद्धम् ।

**रम्भा**—सुणादु महाराओ। जा तवोविसेस[1]संकिदस्स सुउमारं पहरणं महिंदस्स, पच्चादेसो रूवगव्विदाए सिरीगोरिए[2], अलंकारो सग्गस्स, सा णो पिअसही उव्वसी कुबेरभवणादो णिवत्तमाणा[3] केणावि दाणवेण चित्तलेहादुदिआ[4] अद्धपथं ज्जेव बंदिग्गाहं गिहीदा ।

[शृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्विताया: श्रीगौर्याः, अलङ्कार: [5]स्वर्गस्य, सा नः प्रियसखी उर्वशी कुबेरभवनान् निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं [6]गृहीता ।]

---

**कोणेश्वरी**

इति । सूत इत्यत्र प्रवेशमात्रमन्वेति । तिष्ठत एव नरग प्रवेशात् । नृपयोगिनोरैक्योपविष्टत्वेन [Folio missing] प्रादेशिकी प्रतिपादनात् । अलमिति गर्वभाप्रयोजकत्वप्रतिपादनार्थं द्विरभिधानम् । प्रतीकाराय यत्नवमाक्रन्दितं परिहरतेत्यर्थः । कोऽयं प्रतीकार इत्यत आह—सूर्येति । सूर्योपस्थानसंनिवृत्तत्वेनात्मनोऽमरपक्षपातित्वमुक्तम् । पुरूरवसमित्यनेनाकाशादावप्रतिबन्धगतित्वा सूचिता । पुरूरवा हि शक्रादिसभागामीति सर्वजनप्रसिद्धम् । रम्भा अप्सरोविशेष उत्तरयतीति शेषः । त्वरितत्वेन सारमात्रमुत्तरयति-असुरेति । असुरावलेपादसुरकृतादपमानादित्यर्थः ।

**कुमारगिरिराजीया**

अथाङ्कः प्रस्तूयते । ततः प्रविशतीत्यादि । अङ्कलक्षणं चोक्तं शाकुन्तलव्याख्याने ।

---

१. परिसंकिदस्स—सा. ए. २. सिरीए—सा. ए. ३. °णिवट्टमाणा—सा. ए. ४. चित्तलेखादुदीआ—प्र. ५. सर्गस्य—प्र. ६. निगृहीता—श्री.

## प्रकाशिका

**रम्भा** । शृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्विताया: श्रीगौर्याः, अलङ्कारः सर्गस्य, सा नः प्रियसखी उर्वशी कुबेरभवनान् निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता । 'परिवर्तमाना सहसा' इति, 'हिरण्यपुरवासिना केशिना दानवाधिपेन' इत्यपि क्वचित् पाठः । प्रहरणमायुधम् । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इति **त्रिकाण्डी** । 'प्रत्यादेशो निराकृतिः' इति च सा । सर्गस्य संसारस्य । चित्रलेखा नामाप्सरा उर्वशीसखी । बन्दीव गृहीता बन्दिग्राहम् । हिरण्यपुराख्यं नगरम् ।

## कोणेश्वरी

सुरासुरयोर्विरोधादवज्ञा उचितैवेति तस्मात्रात्मनापराध्यतीति राज्ञो मम स न शासनार्ह इत्यभिप्रायवान् पृच्छति—**किमित्यादि** । अपराद्धं कोऽपराधः कृत इत्यर्थः । उत्तरं सुणादु इत्यादि । महाराजः शृणोतु इत्यन्वयः । सा नः प्रियसखी केनापि दानवेन निगृहीता इत्यन्वयः । देवदेवरक्षितायास्तस्याः कथं दानवनिग्रहावकाश इत्यत आह—**अद्धेति** । अर्धपथ एव । तथा च देवदेवस्य न तत्र सन्निधिरिति भावः । कथं वा तादृगर्धपथोपस्थितिस्तादृश्या अत आह—**कुबेरेति** । कुबेरभवनान्निवर्तमाना कुबेरसमीपे नर्तित्वा स्वगेहं प्रतियान्तीत्यर्थः । पथोऽर्धत्वोपन्यासेनेन्द्रकुबेरयोरसंनिधानमुक्तम् । दानवावगृहीताया उपघात-शङ्कया आनयनेऽप्यसमीचीनप्रयोजनमित्यत आह—**चित्रेति** । चित्रलेखाद्वितीया-मेवं तच्छङ्कापनोदिकास्तीति भावः । सा का अत आह—**जेति** । या तपो-विशेषशङ्कितस्य कस्यचिदतिशयिततपसा स्वपदग्रहं शङ्कमानस्य महेन्द्रस्य सुकुमारं प्रहरणं अस्त्रविशेष इत्यर्थः । रूपगर्वितायाः सौन्दर्याभिमानवत्याः श्रीगौर्याः प्रत्यादेशः प्रत्याख्यानम् । तस्या इयमतिसुन्दरीत्यर्थः । किमपरं स्वर्ग-स्यालङ्कारो भूषणम् । तया स्वर्गोऽलंकृत इत्यर्थः ॥

## कुमारगिरिराजीया

**असुरावलेपेन** भवतीनामसुराणां दैत्यानामवलेपेन दर्पेण **किमपराद्धम्** अपराधः कृतः । **बन्दीग्राहं गृहीता** बन्दीव गृहीता । 'उपमाने कर्मणि च' (पा. ३-४-४५) इति णमुल् । कषादित्वादनुप्रयोगः ।

**राजा**—अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ।

**अप्सरसः**—ईसाणीए[1] दिसाए । [ऐशान्या दिशा ।]

**राजा**—तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय ।

**अप्सरसः**—सरिसं एदं [2]सोमवंससंभवस्स । [सदृशमेतत् सोमवंशसम्भवस्य ।]

**राजा**—क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

**अप्सरसः**— [3]एदस्सिं हेमकूडसिहरे । [एतस्मिन् हेमकूटशिखरे ।]

**राजा**—सूत, ऐशानीं दिशं प्रति चोदयाश्वानाशुगमनाय ।

**सूतः**—यदाज्ञापयत्यायुष्मान् ।

(*इति यथोक्तं करोति*)

---

**प्रकाशिका**

'जाल्मोऽसमीक्ष्यकारी' इति त्रिकाण्डी । अप्सरसः । ऐशान्या दिशा । 'पूर्वोत्तरेण' इत्यपि पाठः । पूर्वोत्तरयोरन्तरालेनेत्यर्थः । अप्सरसः । सदृशमेतत्सोमवंशसम्भवस्य । प्रतिपालनं प्रतीक्षा । अप्सरसः । एतस्मिन् हेमकूटशिखरे ॥

**कोणेश्वरी**

राजेति । आहेति शेषेणान्वयः । एवमग्रेऽपि द्रष्टव्यम् । परिज्ञायते विशिष्य ज्ञायते भवतीभिरिति मध्यम् (?) केन दिक्प्रदेशेन स जाल्मो बर्बरो गतस्तां नीत्वा निःसृत इत्यर्थः । तासामुत्तरमीसेति । ऐशान्या दिशा गत इत्यनुषङ्गः । राजेत्यादि । तेन हीति स्वीकारे । वो युष्माकं सख्योः प्रत्यानयनाय परावर्तनाय यतिष्ये यत्नं करिष्ये । यद्यपि यत्नमात्रस्य तेन स्वीकारो विषाद-

---

१. सहजन्या-उब्बुत्तरेण—कु. २. सोमावो एक्कंतरस्स—कु. ३. इमस्सिं—सा. ए.

राजा—(*रथवेगं रूपयित्वा*)[1] साधु साधु। अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम्, किं पुनस्तमपकारिणं मघोनः। मम[2]

अग्रे यान्ति रथस्य रेणुपदवीं[3] चूर्णीभवन्तो घनाश्,
चक्रभ्रान्तिररान्तरेषु [4]वितनोत्यन्यामिवारावलीम्।
[5]चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं,
[6]यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात्॥५॥

(*निष्क्रान्तो रथेन राजा सूतश्च*)

---

**कोणेश्वरी**

मोचनाय न प्रभवति तथापि तथाविधानां यत्नस्य क्रियानिष्पत्तिनिर्वाहकत्वेनावधृतत्वाद् विषादमोचनमुचितमेव। सतामङ्गीकारस्येयमेव हि रीतिः। दृष्टादृष्टबहुतरकालायत्तत्वात् तत्तत्कार्यस्य स्वायत्तयत्न एव स्वीक्रियत इति भावः। सरिसमिति। सदृशमिदं सोमवंशसम्भवस्य। विश्वोपकार(क)स्य सोमस्य कुलोत्पन्नो भवानिति तदननुचितमेवेत्यर्थः। तथा हि बुधः सोमादजायत बुधात् पुरूरवा इति। प्रतिपालयिष्यन्ति अपेक्षिष्यन्त इत्यर्थः। एदस्सिं इति। एतस्मिन् परिदृश्यमाने हेमकूटशिखरे। हेमकूटनाम (Folio missing)

**कुमारगिरिराजीया**

पूर्वोत्तरेण, पूर्वस्या उत्तरस्याश्च दिशोर्यदन्तरालं स दिग्विभागः पूर्वोत्तरस्तेन। 'दिङ्नामान्यन्तराले' (पा. २-२-२६) इति बहुव्रीहिसमासः। एको बुधोऽन्तरं व्यवधानं यस्य स तथोक्तस्तस्य॥

**प्रकाशिका**

रथवेगमेवाह—अग्रे यान्तीति। ममेति चूर्णकस्थितं रथस्येत्यत्र योज्यम्। 'मम' इत्यत्र 'तथा हि' इत्यपि पाठः। चूर्णीभवन्तो घना मम रथस्य रेणुमार्गं

---

१. निरूपयन्—सा. ए. २. हि—सा. ए. ३. रेणुवदमी—सा. ए., कु. ४. जनयति—कु. ५. चित्रन्यस्तमिवाचलं—कु. ६. यष्टयग्रे—कु.

**सहजन्या**—हला, गदो[1] राएसी। ता अम्हे वि जधासंदिट्ठं[2] पदेसं गच्छम्ह। [हला, गतो राजर्षिः। तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः]

**मेनका**—सहि, एव्वं करेम्ह। [सखि, एवं कुर्मः]

*(इति हेमकूटशिखरे[3] नाट्येनाभिरोहन्ति)*

---

**प्रकाशिका**

यान्त्यनुसरन्ति। जलगुरवोऽपि जलदाश्चक्रधारया निर्भिन्ना मन्दमन्दमायान्तः पांसुवदुपसर्पन्तीत्यर्थः। यद्वा रथस्याग्रेऽश्वखुरैश्चूर्णीभवन्तो मेघा रेणुवद्वी यान्ति। रेणवो यथा अश्वोद्धताः पाश्चात्यवातेनाग्रे नीयमाना अपि रथस्य वेगातिशयेन पश्चाद् भवन्ति, तथैतेऽपि रथस्यान् पश्चाद् गच्छन्तीति भावः। 'रेणुवदमी' इत्यपि क्वचित् पाठः। अरान्तरेषु चक्रावयवीभूतकाष्ठान्तरालेष्वन्यामरावलीं तनोतीव। 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः (१००.३)। रयातिशयाद्धि तादृशं भासत इति भावः। हरिशिरस्यश्वमस्तके भूषणार्थं बद्धमायामवद्दीर्घं चामरं चित्रे आरम्भो न्यासो यस्य तदभिलिखितम्। जातमिति शेषः। 'चित्रन्यस्तमिवाचलम्' इत्यपि पाठः। अतिवेगेन निश्चलत्वाद्यष्ट्यग्रादीनां प्रत्यक्षदृश्यैव। चः पूर्वसमुच्चये। प्रान्ते। विद्यमान इति शेषः। मार्गाग्रगमनेनेत्यर्थात्। ध्वजपटो वेगानिलाद् यन्मध्ये रथमध्यभागे समवस्थितः। अथवा प्रान्ते यन् गच्छन्। आद्यन्तचरणाभ्यां वातादपि रथस्यातिवेगवत्त्वं द्योतितम्॥५॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

अग्रे यान्तीत्यादि। चूर्णीभवन्तः कणा सन्तो घना मेघा रथस्याग्रे रेणुवद्रजांसीव यान्ति। चक्रभ्रान्तिश्चक्रस्य रथाङ्गस्य भ्रमणम् अरान्तरेष्वराणां नेम्यवष्टम्भकदण्डाकारचक्रावयवानामन्तरालानि तेष्वन्यामरावलीं जनयतीव। हयशिरसि चामरं प्रकीर्णमायामवद्दैर्घ्यवदचलं निष्कम्पं सचित्रमस्यस्तमिवालेख्यनिवेशितमिव। स्थितमिति शेषः। ध्वजपटो यष्ट्यग्रे च दण्डाग्रे च प्रान्ते च सममविषममेकप्रकारमित्यर्थः। वेगानिलाद्वेगस्यानिलो वायुस्तस्माद्वेगानिलादिति सर्वत्र सम्बन्धनीयम्॥५॥

---

१. गदो—वि om सा. ए. २. जहणिद्दिट्ठं पदेसं संकमिम्ह—सा.ए.
३. शैलावतरणं नाटयित्वा स्थिताः—सा. ए.

**सहजन्या**—हला, गदो[1] राएसी । ता अम्हे वि जधासंदिट्ठं[2] पदेसं गच्छम्ह । [हला, गतो राजर्षिः । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः]

**मेनका**—सहि, एव्वं करेम्ह । [सखि, एवं कुर्मः]

*(इति हेमकूटशिखरे[3] नाट्येनाधिरोहन्ति)*

---

### प्रकाशिका

यान्त्यनुसरन्ति । जलगुरवोऽपि जलदाश्चक्रधारया पिष्टीकृता मन्दमन्दमग्रतः पांसुवदुपसर्पन्तीत्यर्थः । यद्वा रथस्याग्रेऽश्वखुरैश्चूर्णीभवन्तो मेघा रेणुपदवीं यान्ति । रेणवो यथा अश्वोद्धताः पाश्चात्यवातेनाग्रे नीयमाना अपि रथस्य वेगातिशयेन पश्चाद् भवन्ति, तथैतेऽपि रथस्यान् पश्चाद् गच्छन्तीति भावः । 'रेणुवदमी' इत्यपि क्वचित् पाठः । अरान्तरेषु चक्रावयवीभूतकाष्ठशलाकान्तरालेष्वन्यामरावलीं तनोतीव । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः (१००.३) । रयातिशयाद्धि तादृशं भाति इति भावः । हयशिरस्सु अश्वमस्तकेषु भूषणार्थं बद्धमायामवद्दीर्घं चामरं चित्रे आरम्भो न्यासो यस्य तद्वदिवाचलम् । जातमिति शेषः । 'चित्रन्यस्तमिवाचलम्' इत्यपि पाठः । अतिवेगेन निश्चलतायाः केशगुच्छादीनां प्रत्यक्षदृश्यैव । च: पूर्वसमुच्चये । प्रान्ते । विद्यमान इति शेषः । सार्धजवातेनेत्यर्थात् । ध्वजपटो वेगानिलाद् यष्ट्यग्रे रथमध्यभागे समवस्थितः । अथवा प्रान्ते यन् गच्छन् । आद्यन्तचरणाभ्यां वातादपि रथस्यातिवेगवत्त्वं द्योतितम् ॥५॥

### कोणेश्वरी

Folio missing

### कुमारगिरिराजीया

अग्रे यान्तीत्यादि । चूर्णीभवन्तः कणा सन्तो घना मेघा रथस्याग्रे रेणुवद्रजांसीव यान्ति । चक्रभ्रान्तिश्चक्रस्य रथाङ्गस्य भ्रमणम् अरान्तरेष्वराणां नेम्यवष्टम्भकदण्डाकारचक्रावयवानामन्तरालानि तेष्वन्यामरावलीं जनयतीव । हयशिरसि चामरं प्रकीर्णमायामवद्दैर्घ्यवदचलं निष्कम्पं चित्रन्यस्तमिवालेख्यनिवेशितमिव । स्थितमिति शेषः । ध्वजपटो यष्ट्यग्रे च दण्डाग्रे च प्रान्ते च सममविषममेकप्रकारमित्यर्थः । वेगानिलाद्वेगस्यानिलो वायुस्तस्माद्वेगानिलादिति सर्वत्र सम्बन्धनीयम् ॥५॥

---

१. गदो—वि om सा. ए. २. जहणिद्दिट्ठं पवेसं संकमिम्ह—सा.ए.
३. शैलावतरणं नाटयित्वा स्थिताः—सा. ए.

## प्रकाशिका

इति । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः । **मेनका** । सखि, एवं कुर्मः । **रम्भा** । अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् । अपि नामेति सम्भावनायाम् । **मेनका** । सखि, मा ते संशयो भवतु । **रम्भा** । ननु दुर्जया दानवाः । नूनं नन्विति वा पाठः । **मेनका** । उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात् सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते । संपरायो युद्धम् । 'संप्रहारः' इति वा पाठः । 'संस्फोटः सम्परायश्च संस्फोटः कलहोऽभियाम् ।' इति **रूपचिन्तामणिः** । 'सम्प्रहाराभिसंपातकलिसंस्फोटसंयुगाः' । इति **त्रिकाण्डी** (२.८.१०६) । मध्यमलोको मर्त्यः । 'पुंसि स्मृतौ मध्यमलोकमर्त्यौ' इति **त्रिकाण्डीशेषः** । **रम्भा**—सर्वथा विजयी भवतु । **मेनका**—समाश्वसिहि समाश्वसिहि । एष उल्लसितहरिणकेतनस्तस्य राजर्षेः सोमदत्तो रथो दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि । हरिणकेतनो हरिणः केतने ध्वजे यस्य सः । सोमेन चन्द्रेण दत्तः । चन्द्रीयत्वादेव च हरिणध्वजत्वमपि युक्तम् ॥

## कोणेश्वरी

**रम्भेत्यादि** । (ए)नं (नि)राकृत्य प्रियसखीमानयेदित्यर्थः । **मेनकेत्यादि** । सखि मा ते संशयो भवतु । अवश्यं नः समीहितं भविष्यतीत्यर्थः । **रम्भेत्यादि** । ननु दुर्जया दानवा अतः संशय इत्यर्थः । **मेनकेत्यादि** । ननूपस्थितसंप्रहारो महेन्द्रोऽपि मध्यमलोकात् सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियोजयति । 'णं नन्वर्थे' इत्यनेन नन्वर्थे णमिति निपातः । संप्रह्रियतेऽनेनेति संप्रहारो युद्धम् । घञि साधुः । मध्यमलोकान्मर्त्यलोकादानाय्य तमिति सम्बन्धः । महेन्द्रस्यापि स एव प्रत्याशापात्रमित्यर्थः । **रम्भेत्यादि** । स तथा विजयी भवतु यथा महेन्द्राभिमुखं विजयी भवतीत्यर्थः । यद्वा यथा नः समीहितं सिध्यतीत्यर्थः । यद्वा शतधा शतवारमित्यर्थः । प्रकारशतेनेति वा । **क्षणमिति** । क्षणमात्रस्थितिर्युद्धादिक्रियाभिप्रायेण । हला सखि रम्भे । समाश्वसिहि अत्यन्ता द्विग्नासि । एष उल्लसितहरिणकेतनस्तस्य राजर्षेः सोमदत्तरथो दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्त्स्यत इति । चन्द्रवंशसमुद्भूतत्वेनास्य रथे मृगकेतनत्वम् । सोमेन दत्तः सोमदत्तः । पितामहो हि मन्ये सुचिरं वत्सं ददातीत्युचितमेव । प्रतिनिवृत्तश्चैवैष दृश्यते ततोऽवश्यमनेन तं निराकृत्योर्वश्यानीता भवेदन्यथा न निवर्तेत वेत्यर्थः । **निमित्तमिति** । निमित्तं हरिणकेतनकम्पचिह्नमित्यर्थः ।

*(ततः प्रविशति रथारूढो[1] राजा सूतश्च । भयनिमीलिताक्षी [2]चित्रलेखादक्षिणहस्तावलम्बिता उर्वशी च)*

**चित्रलेखा**–सहि[3] समस्सस समस्सस । [सखि, समाश्वसिहि समाश्वसिहि । ]

**राजा**–सुन्दरि, समाश्वसिहि समाश्वसिहि ।

गतं भयं भीरु सुरारिसम्भवं,
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं,
[4]निशावसाने नलिनीव पङ्कजम् ॥६॥

---

**कोणेश्वरी**

यद्वा वामाक्षिस्पन्दनानि प्रियदर्शने निमित्तं सूचकं सूचयित्वोपलभ्य स्थिता इत्यर्थः ॥

**कुमारगिरिराजीया**

सख्यौ, यथानिर्दिष्टप्रदेशं संक्रामामः । ननूपस्थितसांपरायो महेन्द्रोऽपि मध्यमलोकात् सबहुमानमानीय तमेव विजयसेनामुखे नियोजयति ॥

**प्रकाशिका**

**चित्रलेखा** । सखि, समाश्वसिहि समाश्वसिहि । **गतमिति** । सुरारिसम्भवभयगमने हेतुमाह—हि यतो वज्रिण इन्द्रस्य महिमा त्रिलोकरक्षी । वर्तत इति शेषः । अन्यथाऽस्य त्रिलोकरक्षित्वमेव व्याहन्येतेति भावः ॥ ६ ॥

**कोणेश्वरी**

प्रविशति रङ्गभूमिमिति शेषः । न तु हेमकूटशिखरम् । तत्र गमनस्याग्रे वक्ष्यमाणत्वादिति । **भयमित्यादि** । तेन सममस्याः प्रत्यासत्तिर्न काप्यभूदिति द्योतनाय । प्रत्यासत्तौ हि भयमेव । तथा न तिष्ठतीति भावः । चित्रलेखे-

---

१. राजा रथेन सूतश्च–कु. २. चित्रलेखाहस्तावलम्बिता–सा. ए. ३. समस्ससदु समस्ससदु–सा. ए., कु. ४. महोत्पलं प्रत्युषसीव पद्मिनी–सा. ए., कु.

**चित्रलेखा**–अम्महे, कहं उस्ससिदमेत्त[1]संभाविदजीविदा अज्ज वि एसा सण्णं ण पडिवज्जदि । [अहो कथमुच्छ्वसितमात्रसम्भावितजीविता अद्याप्येषा सञ्ज्ञां न प्रतिपद्यते ।]

**राजा**–बलवदत्र ते सखी परित्रस्ता । तथाहि—

[2]मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥७॥

**चित्रलेखा**–*(सकरुणम्)* हला उव्वसि, पज्जवत्थावेहि अत्ताणं । अणच्छरा विअ पडिभासि । [हला उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।]

---

### कोणेश्वरी

त्यादिना सखीं विहाय कुत्रापि न गतवतीति द्योतितत्वात् पूर्वावस्थाऽस्याः सन्तन्यमानास्तीति दर्शितम् । सुन्दरीति संबोधनमनुरागद्योतनाय । तव सौन्दर्यं यथा मया निरू (पितम् तथा मया दृष्टमिति भावः ।) ॥६॥

### कुमारगिरिराजीया

गतं भयमित्यादि । स्पष्टोऽर्थः ।

### प्रकाशिका

**चित्रलेखा**—अम्महे इत्याश्चर्ये । कथमुच्छ्वसितमात्रसम्भावितजीविता अद्याप्येषा सञ्ज्ञां न प्रतिपद्यते चेतनां न प्राप्नोति । **राजा**—बलवदतिशयेन । मन्दारेति । मन्दाराख्यकल्पवृक्षपुष्पमालया । 'परिणाहो विशालता' इत्यमरः (३-६-११४) ॥७॥

**चित्रलेखा** । सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि । पर्यवस्थापय स्थिरीकुरु । धैर्यं धारयेति भावः । अनप्सरेव । अधैर्यं हि मनुष्याणामुचितम्, न दैवतानामिति भावः । 'आपः सुमनसो वर्षा अप्सरसः सिकताः समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रिकम्' । इति ।

---

१. om-सा. ए. २. om-सा. ए.

राजा–

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
[1]सिचयान्तेन कथंचित् स्तनमध्योच्छ्वासिना कथितः ॥८॥

*(उर्वशी प्रत्यागच्छति)*

राजा–*(सहर्षम्)* [2]चित्रलेखे, दिष्टया वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य,

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रिर्
नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुच्यमाना[3]
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥९॥

---

**प्रकाशिका**

मुञ्चतीति । सिचयो वस्त्रम् । 'वस्त्रं सिचयः पटः पोतः' इति हलायुधः (२-३९३) ॥८॥ दिष्टया वर्धसे इति । उत्सववत्यसीत्यर्थः । हर्षवती वा । 'दिष्टयापूर्वो वर्धतिरुत्सवे' इति सागरः । 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः' । इति विश्वलोचनः । उत्सवे कारणमाह–प्रकृतीति । प्रकृतिं स्वभावम् । आपन्ना प्राप्ता । तत्प्राप्तिमेवाह–आविर्भूत इति । आविर्भूते प्रकटीभूते । रिच्यमाना रिक्तीभवन्ती । निशासम्बन्धिनो हुतभुजोऽग्नेश्छिन्नभूयिष्ठो धूमो यस्या एतादृश्यर्चिर्ज्वालेव । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इति त्रिकाण्डी (१-५-५७) । 'प्रायेणार्चिः स्त्री' इति क्षीरस्वामी । 'ज्वाला भासो नपुंस्यर्चिः' इत्यनेकार्थोऽपि । अन्तर्मध्ये रोधसस्तटस्य पतनेन कलुषा गङ्गेव । अन्तरन्तःकरणे मोहेन मुच्यमाना त्यज्यमानेयं वरतनुः प्रसादं प्रसन्नतां गच्छति प्राप्नोतीवेति लक्ष्यते । 'गृह्णतीव' इत्यपि क्वचित् पाठः ॥९॥

**कोणेश्वरी**

Folio missing

---

१. पश्य हरिचन्दनेन-सा. ए. २. चित्रलेखे–वर्धसे om-सा. ए.
३. मुक्तकल्पा–कु.

**चित्रलेखा**—सहि उव्वसि[1], वीसद्धा होहि[2]। [3]आवण्णाणुकंपिणा महाराएण पडिहदा क्खु दे तिदसपरिपंथिणो हदासा दाणवा[4]। [सखि उर्वशि, विस्रब्धा भव। आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः।]

**उर्वशी**—*(चक्षुषी उन्मील्य)* किं पहावदंसिणा महिंदेण [5]अब्भुववण्णम्हि। [किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि।]

**चित्रलेखा**—ण महिंदेण। महिंदसरिसाणुभावेण [6]राएसिणा पुरूरवसेण।[7] [न महेन्द्रेण। महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा।]

**उर्वशी**—*(राजानमवलोक्य[8] आत्मगतम्)* उवकिदं क्खु [9]दाणवेंदसंरंभेण। [उपकृतं खलु दानवेन्द्रसंरम्भेण।]

कुमारगिरिराजीया

आविर्भूत इत्यादि। शशिनि चन्द्रे आविर्भूते प्रकाशिते गति तमसा तिमिरेण मुच्यमाना रात्रिरिव। नैशस्य निशासम्बन्धिनो हुतभुजोऽग्नेश्छिन्नभूयिष्ठधूमा छिन्नो विच्छिन्नो भूयिष्ठो बहुलो धूमो यस्याः सा तथोक्तार्चिरिव ज्वालेव। रोधःपतनकलुषा रोधसस्तटस्य पतनेन कलुषाविला भूत्वा प्रसादं प्रसन्नतां गृह्णत्युपाददाना गङ्गेवेयं वरतनुरन्तर्हृदये मोहेन मूर्च्छया मुक्तकल्पा मुक्तदेश्या। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (पा. ५-३-६७) इति कल्पप्प्रत्ययः। लक्ष्यते ॥९॥

प्रकाशिका

चित्रलेखा—सखि उर्वशि, विस्रब्धा भव। आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः। विस्रब्धा विश्वास-

१. om.—सा. ए. २. भव—प्र. ३. आवण्णा...महाराएण om.—सा. ए. ४. om.—सा. ए. ५. om.—सा. ए. ६. इसिणा—सा. ए. ७. om.—सा. ए. ८. विलोक्य—सा. ए. ९. दाणवेहिं—सा. ए.

**राजा**—(*उर्वशीं विलोक्य । आत्मगतम्*) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसम्भवामिमां विलोक्य[1] व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि[2] । कुतः[3] ।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः[4]
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन् मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

---

**प्रकाशिका**

युक्ता । आपन्नो विपद्ग्रस्तः 'आपन्न आपत्प्राप्तः स्याद्' इति त्रिकाण्डी (३-१-४२)। अनुकम्पिना दयावता । 'वीसद्धा भव' इत्यत्र 'ईत् सिंहजिह्वयोश्च' (प्रा. प्र. १-१६) इति चकाराद् वेः ईद्भावः । **उर्वशी** । किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि । अभ्युपपत्तिरनुग्रहः । **चित्रलेखा** । न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा । **उर्वशी** । आत्मगतलक्षणं तु 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्' इति साहित्यदर्पणे । 'स्वगतं चात्मगतं स्वयं (?) त्रिपताकेन पाणिना । यः पठेत्तत्र संयोज्यं द्वयमेतत् प्रयोक्तृभिः ।' इति सागरोऽपि । उपकृतं खलु दानवेन्द्रसंरम्भेण । संरम्भस्त्रासः कोपो वा । 'संरम्भः संभ्रमे कोपे' इति विश्वः ।

**कोणेश्वरी**

Folio missing.

**कुमारगिरिराजीया**

प्रभावं माहात्म्यं दर्शयति प्रकाशयतीति स तथोक्तस्तेन महेन्द्रेण । उपकृतं इति—अत्र उर्वश्या अभिलाषो गम्यते । अयमभिलाषः प्रथमावस्थेति मन्तव्यम् । प्रकृतिस्थामुर्वशीं विलोक्यात्मगतमित्यादिना गम्यमानो राजाभिलाषोऽस्मिन्नाटके बीजमित्यनुसन्धेयम् । अयमेवाभिलाषो राज्ञः प्रथमावस्थेत्यनुसन्धेयम् ।

---

१. दृष्ट्वा—सा. ए.　२. भवितुमर्हति—सा. ए.　३. तथाहि—सा. ए.
४. कान्तिप्रभः—कु.

उर्वशी–हला [1]चित्तलेहे, सहीअणो कहिं क्खु भवे। [सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत्।]

---

प्रकाशिका

स्थाने युक्तम्। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः (३–४–२१)। तपस्यतो नारायणस्य प्रलोभनार्थं गता अप्सरसस्तदूरूत्पन्नामिमामालोक्य यस्योरुत एतादृशी सुन्दरी निःसृता किमिदानीमस्माभिरेतादृशस्य प्रलोभनं विधेयमिति लज्जिताः पुनः प्रतिनिवृत्ता इति पौराणिकी कथाप्रथा। अस्या इति। सर्गविधावुत्पादनविधौ। प्रजापतिः स्रष्टा। पुष्पाकरो मासो वसन्तः। जडो मन्दप्रज्ञः। कान्तिप्रदत्वादीनि विशेषणानि हेतुगर्भाणि ॥ १० ॥

कोणेश्वरी

Folio missing.

कुमारगिरिराजीया

अस्याः सर्गेति। अस्या उर्वश्याः सर्गविधौ निर्माणकर्मणि प्रजापतिर्विधाता कान्तिप्रभश्चन्द्रोऽभूत्नु चन्द्र आसीत् किम्। अनेन उर्वश्या लावण्यातिशयो गम्यते। अथवा शृङ्गारैकरसः शृङ्गारो रतिपोष एकः केवलो रसो यस्य स तथोक्तो मदनः कामः स्वयं प्रजापतिरभूत्नु। अनेनास्याः सौभाग्यातिशयो गम्यते। अथवा पुष्पोद्भवस्थानरूपो (पुष्पाकरो मासः) वसन्तः प्रजापतिरभून्नु। अनेनास्याः सौरभ्यसौकुमार्यातिशयो गम्यते। मुख्यस्रष्टारं नारायणमपह्नुत्य किमर्थमेवं वितर्कितमित्याशङ्क्य परिहारार्थमेवंविधरूपनिर्माणे तस्यासामर्थ्यं दर्शयति—वेदाभ्यासेत्यादि। वेदाभ्यासजडो वेदाभ्यासेन जडो मन्दः। मलिन इत्यर्थः। न तु चन्द्रवत् कान्तप्रभः। विषयव्यावृत्तकौतूहलो विषयेभ्यः शब्दादिभ्यः व्यावृत्तं निवृत्तं कौतूहलं यस्य स तथोक्तः। न तु मदनवच्छृङ्गाररसाभिज्ञः। पुराणो जीर्णः सौकुमार्यरहितः। मुनिस्तपस्वी नारायणः। मनोहरं लावण्यादिगुणैर्हृद्यमिदं रूपं निर्मातुं स्रष्टुं कथं नु प्रभवेत्। कथं नु इत्याक्षेपे। न प्रभवेदित्यर्थः। मनोहरमिदं रूपमित्यनेन द्योत्यमानस्य राजाभिलाषस्य बीजस्य विन्यासादुपक्षेपो नाम सन्ध्यङ्गमुक्तं भवति। सन्ध्यङ्गलक्षणान्यपि शाकुन्तलव्याख्याने कथितानि ॥ १० ॥

---

१. चित्तलेहे om–सा. ए.

चित्रलेखा–सहि, अभअप्पदाई महाराओ जाणादि। [सखि, अभयप्रदायी महाराजो जानाति।]

राजा–(*उर्वशीं विलोक्य*) महति विषादे वर्तते सखीजनः।

पश्यतु भवती।

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः।
त्वया विना सोऽपि समुत्सुको भवेत्
सखीजनस्ते किमुतार्द्रसौहृदः ॥११॥

उर्वशी–(*आत्मगतम्*) [1]अमिअं क्खु दे वअणं। अहवा चंदादो अमिअं ति किं[2] अच्चरिअं। (*प्रकाशम्*) अदो एव्व[3] पेक्खिदुं तुवरदि मे हिअअं।

[अमृतं खलु ते वचनम्। अथवा चन्द्रादमृतमिति किमाश्चर्यम्। अत एव प्रेक्षितुं त्वरते मे हृदयम्।]

राजा–(*हस्तेन दर्शयन्*)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः।
[4]उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥१२॥

[5](*उर्वशी साभिलाषं पश्यति*)

---

प्रकाशिका

उर्वशी। सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत्। खल्विति प्रश्ने। चित्रलेखा। सखि, अभयप्रदायी महाराजो जानाति। यदृच्छयेति। यदृच्छया स्वेच्छया। अवन्ध्ययोः सफलयोः। 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः। (२-४-७) नेत्रयोः पथि स्थिता नयनगोचरीभूता। समुत्सुकः सोत्कण्ठः। आर्द्रं निरन्तरसहवासेन सरसं सौहृदं सौहार्दं यस्य सः ॥ ११ ॥

---

१. अभिजातं क्खु से–सा. ए., कु. २. किमेत्थ–सा. ए. ३. णं–सा. ए. ४. प्रत्यागतप्रसादं–सा. ए. ५. om–सा. ए.

**चित्रलेखा**—हला, किं पेक्खसि । [सखि, किं प्रेक्षसे ।]

**उर्वशी**—णं समदुक्खगदो पिवीअदि लोअणेहिं । [ननु समदुःख-गतः पीयते लोचनाभ्याम् ।]

**चित्रलेखा**—(*सस्मितम्*) अइ को । [अयि कः ।]

**उर्वशी**—णं पणइअणो । [ननु प्रणयिजनः ।]

**रम्भा**—(*सहर्षमवलोक्य*) हला चित्तलेहादुदिअं पिअसहिं उव्वसिं गेण्हिअ विसाहासहिदो विअ भअवं सोमो समुवट्ठिदो राएसी । [सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः समुपस्थितो राजर्षिः ।]

---

**प्रकाशिका**

उर्वशी । अमृतं खलु ते वचनम् । क्वचित् 'अभिजातम्' इति पाठः । अभिजातं योग्यम् । अथवा चन्द्रादमृतमिति किमाश्चर्यम् । प्रकाशम् । 'सर्व-श्राव्यं प्रकाशं स्यात्' इति साहित्यदर्पणे (६.६०) । अत एव मे प्रेक्षितुं त्वरते हृदयम् । एता इति । हेमकूटाख्यो गिरिः । उपप्लव उपरागः ॥१२॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

यदृच्छयेत्यादि । त्वया विना सोऽपि समुत्सुको भवेदिति सामान्योक्त्या-त्मनि प्रतीयमानमौत्सुक्यमारम्भो नाम प्रथमावस्थेति मन्तव्यम् । अत्र बीजारम्भयोः समन्वयात् मुखसन्धिरित्यनुसन्धेयम् ॥११॥

अभिजातं खल्वस्य वचनम् । अथवा चन्द्रादमृतमिति किमत्राश्चर्यम् । अत एवैनं सखीजनं द्रष्टुं त्वरते मे हृदयम् ।

एताः सुतनु इत्यादि । स्पष्टोऽर्थः ॥१२॥

**मेनका**–(*सहर्षम्*) हला, दुवे वि णो एत्थ पिआ उवगदा। इअं पच्चाणीदा पिअसही, अअं च अपरिक्खदसरीरो[1] राएसी दीसदि। [सखि, द्वे अपि नोऽत्र प्रिये उपनते। इयं प्रत्यानीता प्रियसखी। अयं चापरिक्षतशरीरो राजर्षिर्दृश्यते।]

**सहजन्या**–सहि जुत्तं भणासि दुज्जओ दाणओ त्ति। [सखि, युक्तं भणसि दुर्जयो दानव इति।]

**राजा**–सूत, इदं तच्छैलशिखरम्। अवतारय[2] रथम्।

**सूतः**–यदाज्ञापयत्यायुष्मान्। (*इति तथा*[3] *करोति*)

### प्रकाशिका

चित्रलेखा—सखि, किं प्रेक्षसे। उर्वशी—ननु समदुःखगतः पीयते लोचनाभ्याम्। चित्रलेखा—अयि कः। उर्वशी—ननु प्रणयिजनः। रम्भा—सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान् सोमः समुपस्थितो राजर्षिः।

मेनका—सखि, द्वे अपि नोऽत्र प्रिये उपनते। इयं प्रत्यानीता प्रियसखी। अयं चापरिक्षतशरीरो राजर्षिर्दृश्यत इति। सहजन्या—सखि, युक्तं भणसि दुर्जयो दानव इति॥

### कोणेश्वरी

Folio missing

### कुमारगिरिराजीया

द्वे अपि नः प्रिये उपनते। इयं प्रत्यानीता प्रियसखी। अयं चापरिक्षतो महाराज इति।

१. अपरिक्खदो महाराओ त्ति।—सा. ए., कु. २. अवतार्यतां रथः—सा. ए. ३. यथोक्तं—सा. ए.

[1] *(उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते)*

**राजा**—*(स्वगतम्)*[2] हन्त सफलो मे विषयावतारः ।

[3]यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।

स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥१३॥

**उर्वशी**—हला, [4]किं वि परदो ओसर । [सखि, किमपि परतोऽपसर ।]

**चित्रलेखा**—णाहं सक्केमि । [नाहं शक्नोमि ।]

**रम्भा**—एत्थ पिअआरिणं संभावेम्ह राएसिं । [अत्र प्रियकारिणं सम्भावयामो राजर्षिम् ।]

*(सर्वा उपसर्पन्ति)*

---

**प्रकाशिका**

यदिदमिति । रथसंक्षोभान्निम्नोन्नतेषु स्यन्दनोपघातात् ॥ उर्वशी सखि, किमपि परतोऽपसर । चित्रलेखा-नाहं शक्नोमि । रम्भा–अत्र प्रियकारिणं सम्भावयामो राजर्षिम् ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

**चक्रोद्घातं चक्रस्य रथाङ्गस्योद्घातं शिखरे प्रतिहतिं कथयित्वाभिनीय । हन्त हर्षे । स्वविषयावतारः स्वदेशावतरणम् । यदयमित्यादि । यद् यस्मात् कारणाद् ममांसो रथसंक्षोभाद्रथस्य पर्वतशिलाप्रतिघातकम्पात् । अञ्चितश्रोण्या अञ्चिता रम्या श्रोणिर्यस्याः सा तथोक्ता । तस्या अंसेन सरोमविक्रियं सरोमाञ्चं यथा भवति तथा स्पृष्टस्तस्माद् सफल इति सम्बन्धः । कीदृशेना-**

---

१. The whole om—सा. ए. २. **(चक्रोद्घातं कथयित्वा) हन्त सफलो मे विषमावतारः**—सा. ए. ३. सा. ए. reads as follows. **यदयं रथसंक्षोभादंसेनांसो रथोपमश्रोण्याः । स्पृष्टः सरोमविक्रियमङ्कुरितं मनोभवेनेव ॥** ४. **किंचि**—सा. ए.

राजा—सूत, उपश्लेषय[1] रथम् ।

यावत् पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति सम्पर्कं लताभिः श्रीरिवार्तवी ॥१४॥

(सूतो[2] रथं स्थापयति)

अप्सरसः—दिट्ठिआ महाराओ विअएण वड्ढदि । [दिष्ट्या महाराजो विजयेन वर्धते ।]

राजा—भवत्यश्च सखीसमागमेन ।

उर्वशी—(चित्रलेखादत्तहस्तावलम्बा[3] रथादवतीर्य) हला,[4] बलिअं परिस्सजध । ण क्खु मे आसी[5] आसासो जधा पुणो वि सहीअणं पेक्खिस्सं ति । [सख्यः, अधिकं परिष्वजध । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।]

[6] (सख्यः परिष्वजन्ते)

---

**कुमारगिरिराजीया**

सेन । अङ्कुरितमनोभवेन इव उदितमन्मथेनेव । अथ सरोमविक्रियं स्पृष्ट इत्यनेन बीजस्य बहुलीकरणात् परिकरो नाम सन्ध्यङ्गमुक्तं भवति ॥१३॥

**प्रकाशिका**

उपश्लेषय स्थापय । यावदिति । सम्पर्कं सम्बन्धम् । आर्तवी ऋतुसम्बन्धिनी ॥ १४ ॥ अप्सरसः । दिष्ट्या महाराजो विजयेन वर्धते । दिष्ट्या- इत्यानन्दे । तथा चागवत् सागरः 'दिष्ट्येत्यानन्दने दिष्ट्यापूर्वो वर्धतिरुत्सवे' इति । उर्वशी–सख्यः, अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।

**कोणेश्वरी**

Folio missing

---

१. स्थापय–सा. ए. २. तथा करोति–सा. ए. ३. चित्रलेखावलम्बहस्ता–सा. ए. ४. एव, पीडिदं मं–सा. ए; कु. ५. आसा आसि भूओ वि सहीअणं पेक्खिस्सं ति—सा. ए. ६. सर्वाः सस्वरं–सा. ए.

[1] **मेनका**–(*साशंसम्*) सव्वहा कप्पसदं[2] महाराओ पुहविं पालअंतो होदु[3] । [सर्वथा कल्पशतं महाराजः पृथिवीं पालयन् भवतु । ]

**सूतः**–आयुष्मन्, पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः ।

अयं च गगनात् कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ॥१५॥

**अप्सरसः**–(*पश्यन्त्यः*[4]) अम्मो, चित्तरहो । [अहो, चित्ररथः । ]

(*ततः प्रविशति चित्ररथः*)

**चित्ररथः**–([5]*राजानं दृष्ट्वा सबहुमानम्*) दिष्ट्या महेन्द्रोपकारपर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

**राजा**–अये गन्धर्वराजः । (*रथादवतीर्य*) स्वागतं प्रियसुहृदे ।

(*परस्परं हस्तौ स्पृशतः*)

---

**कुमारगिरिराजीया**

यावत्पुनरित्यादिः । स्पष्टोऽर्थः । उर्वशी–सख्यः, इतः पीडितं मां गाढं परिष्वजध्वम् । न खलु मे आसीदाशंसा भूयोऽपि सखीजनं द्रक्ष्यामीति ।

**प्रकाशिका**

मेनका—सर्वथा कल्पशतं महाराजः पृथिवीं पालयन् भवतु । अयमिति । गगनादाकाशात् । चामीकरं सुवर्णम् । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः (२-९-९५) । अङ्गदं बाहुभूषणम् । शैलाग्रमधिरोहति । शैलाग्रे आरोहणं करोतीत्यर्थः । 'अवरोहति' इति पाठेऽवतरतीत्यर्थः । तडित्वांस्तडियुक्तः । तोयदोऽम्बुदः ॥१५॥

अप्सरसः—अम्मो इत्याश्चर्ये । तथा च सागरः—'अम्मो अम्मह इत्येतद्विस्मयद्योतनाविधौ' इति । चित्ररथः—पर्याप्तेन समर्थेन । विक्रममहिम्ना

---

१. रम्भा–सा. ए. २. कप्पसदाइं–सा. ए, कु गि. ३. भोदु–सा. ए. ४. om.–सा. ए. ५. राजाभिमुखं स्थित्वा–सा. ए.

चित्ररथः—वयस्य, केशिना दानवेनोर्वशी नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा[1] त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति । महत् खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता । पश्य—

पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
[2]दैत्यहस्तादपाच्छिद्य सुहृदा सम्प्रति त्वया ॥१६॥

राजा—[3]सखे, मैवम् ।

ननु वज्रिण एव वीर्यमेतद्,
विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकन्दराविसर्पी[4]
प्रतिशब्दो हि[5] हरेर्हिनस्ति नागान् ॥१७॥

प्रकाशिका

पराक्रमातिशयेन । स्वागतं प्रियसुहृदे इति 'चतुर्थी चाशिष्य (पा. २-३-७३) इति चतुर्थी ॥

कोणेश्वरी

Folio missing

कुमारगिरिराजीया

अयं चेत्यादिः । स्पष्टोऽर्थः ॥१५॥ आयुष्मन् पूर्वस्यामित्यादिना अम्मो चित्तरहो इत्यन्तेन सूतस्याश्वधारणानन्तरं 'अम्मो चित्तरहो' इति निर्णयस्य प्रतीतेरिदं विमर्शादनु निर्णयकृतं पताकास्थानकमित्यनुसन्धेयम् ॥

प्रकाशिका

केशिना तन्नामकेन दानवेन । जयोदाहरणं यशः । पुरेति । मरुत्वते इन्द्राय । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः (१-१-४)। अतिसृष्टा दत्ता । अपाच्छिद्य

१. उपश्रुत्य—शा. ए. २. अवच्छिद्य—कु. ३. मा मैवम्—शा. ए. ४. वसुधाधरकन्दराभिसर्पी—शा. ए. ५. अपि—शा. ए.

**चित्ररथः**—युक्तमेतत् । अनुत्सेकः खलु विक्रमालङ्कारः ।

**राजा**—सखे, नायमवसरो मम शतक्रतुं द्रष्टुम् । अतस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

**चित्ररथः**—यथा भवान् मन्यते । इत इतो भवत्यः ।

(*सर्वाः प्रस्थिताः*)

**उर्वशी**—(*जनान्तिकम्*) हला चित्तलेहे, उवआरिणं राएसिं ण सक्कणोमि आमंतेदुं । ता तुमं एव्व मे मुहं होहि । [सखि चित्रलेखे उपकारिणं राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत् त्वमेव मे मुखं भव ।]

---

प्रकाशिका

बलाद् गृहीत्वा ॥१६॥ नन्विति । वीर्यं पराक्रमः । पक्षे भवाः पक्ष्याः पार्श्ववर्तिनः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति त्रिकाण्डी । द्विषतः शत्रून् । वसुधाधरः पर्वतः । कन्दरा दरी । विसर्पी प्रसरणशीलः । प्रतिशब्दः प्रतिध्वनिः । हरेः सिंहस्य । नागान् गजान् । हिनस्ति मारयति ॥१७॥

कोणेश्वरी

Folio missing

कुमारगिरिराजीया

पुरा नारायणेनेत्यादि । नारायणेन महर्षिणा मरुत्वते इन्द्रायातिसृष्टा दत्ता । अवच्छिद्याच्छिद्य ॥१६॥ ननु वज्रिण इत्यादिः—स्पष्टोऽर्थः ॥१७॥

प्रकाशिका

अनुत्सेकोऽनभिमानः ॥ उर्वशी—सखि चित्रलेखे, उपकारिणं राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत् त्वमेव मे मुखं भव । जनान्तिकलक्षणं तु—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥

**चित्रलेखा**–(*राजानमुपेत्य*) महाराअ, उव्वसी विण्णवेदि—महाराएण अब्भणुण्णादा इच्छामि पिअसहिं विअ महाराअस्स कित्तिं सुरलोअं णेदुं। [महाराज, उर्वशी विज्ञापयति—महाराजेनाभ्यनुज्ञाता इच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम्।]

*राजा*–गम्यतां पुनर्दर्शनाय।

(*सर्वाः सगन्धर्वा आकाशोत्पतनं रूपयन्ति*)

**उर्वशी**–(*उत्पतनभङ्गं रूपयित्वा*) अम्मो[1], लदाविडवे एसा एआवली वैअअंतिआ मे लग्गा। ([2]*सव्याजमुपसृत्य राजानं पश्यन्ती*) [3]सहि चित्तलेहे, मोआवेहि दाव णं। [अहो, लताविटप एषैकावली वैजयन्तिका मे लग्ना। सखि चित्रलेखे, मोचय तावदेनाम्।]

---

**प्रकाशिका**

इति साहित्यदर्पणावौ (६-१६०)।

अन्यथमित्वैकमन्योन्यं द्वाभ्यां यत् खलु पठ्यते।
जनान्तिकं तु तत् कार्यं त्रिपताकेन पाणिना॥

इति सागरोऽपि। चित्रलेखा—महाराज उर्वशी विज्ञापयति। महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम्॥

उर्वशी–अम्मो इति आश्चर्ये। लताविटप एषैकावली वैजयन्तिका मे लग्ना। सखि चित्रलेखे, मोचय तावदेनाम्। वैजयन्तिकेत्येकावलीनाम।

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

No commentary

---

१. अम्महे–सा. ए. २. परिवृत्य–सा. ए. ३. om.–सा.

**चित्रलेखा**–([1] *विलोक्य विहस्य च*) [2] आम्, दिढं क्खु लग्गा सा। [3] असक्का मोआविदुं। [आम्, दृढं खलु लग्ना सा। अशक्या मोचयितुम्।]

**उर्वशी**–[4] अलं पडिहासेन। मोआवेहि दाव णं। [अलं परिहासेन। मोचय तावदेनाम्।]

**चित्रलेखा**–आम्, दुम्मोआ विअ मे पडिहादि। तहा वि मोआविस्सं दाव। आम्, दुर्मोच्येव मे प्रतिभाति। तथापि मोचयिष्ये तावत्।]

**उर्वशी**–([5] *स्मितं कृत्वा*) [6] पियसहि, सुमरेहि क्खु एदं अत्तणो वअणं। [प्रियसखि, स्मरस्व खल्वेतदात्मनो वचनम्।]

### प्रकाशिका

**चित्रलेखा**–आमित्यङ्गीकारे। दृढं खलु लग्ना सा। अशक्या मोचयितुम्। **उर्वशी**–अलं परिहासेन। मोचय तावदेनाम्। **चित्रलेखा**–आम्, दुर्मोच्येव मे प्रतिभाति। तथापि मोचयिष्ये तावत्। **उर्वशी**–प्रियसखि, स्मरस्व खल्वेतदात्मनो वचनम्।

### कोणेश्वरी

Folio missing

### कुमारगिरिराजीया

सखि, न विस्मरात्मनो वचनम्। दृढं खलु लग्नेत्यनेनोर्वश्या मनःसङ्गो नाम द्वितीयावस्था सूचिता।

---

१. सस्मितम्—सा. ए. २. om.—सा. ए. ३. दुम्मोआ विअ मे पडिहादि। मोदु, अविस्सं दाव—सा. ए. ४. om.—सा. ए; ५, ६. om.—सा. ए.

**राजा**– (*स्वगतम्*)

प्रियमाचरितं लते त्वया मे
गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा
परिवृत्तार्धमुखी मया हि[1] दृष्टा ॥१८॥

(*[2] चित्रलेखा मोचयति । उर्वशी राजानमालोकयन्ती सनिश्वासं सखीजनमुत्पतन्तं पश्यति ।*)

**सूतः**–आयुष्मन्,

अदः सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्यान् लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥१९॥

**राजा**–तेन ह्युपश्लेषय रथम्, यावदारोहामि ।

(*सूतस्तथा करोति । राजा नाटयेन रथमारोहति*[3] ।)

---

**प्रकाशिका**

**प्रियमिति** । आचरितं कृतम् । क्षणमात्रं विघ्नम् । क्षण उत्सवस्तद्रूपं विघ्नमिति वा। परिवृत्तमर्धं मुखं यस्याः। अत एवापाङ्गयुक्ते नेत्रे यस्या एतादृशी दृष्टा । यद्वा अपाङ्गो मदनस्तज्जनके नेत्रे यस्यास्तादृशी ॥१८॥ **अद इति** । वायुर्देवतास्येति वायव्यम् । शरधिं निषङ्गम् । श्वभ्रं रन्ध्रम् । 'रन्ध्रं श्वभ्रं वपा सुषिः' इति **त्रिकाण्डी** ॥१९॥ उपश्लेषय समीपे समानय ॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

**प्रियमाचरितमित्यादिः** । स्पष्टोऽर्थः । अत्र बीजस्य दृढीकरणात् परिन्यास इति सन्ध्यङ्गमुक्तं भवति । अत्रैवार्थानुकूल्येन सुखाप्तेर्गम्यमानत्वात् प्राप्तिर्नाम सन्ध्यङ्गमुक्तं भवति ॥१८॥ **अद इत्यादिः** । स्पष्टोऽर्थः ॥१९॥

---

१. अथ–सा. ए.　२. om.–सा. ए.　३. रथमारूढः–सा. ए.

[1] **उर्वशी**–(*सस्पृहं राजानमवलोकयन्ती*) अवि णाम पुणो वि उअआरिणं एदं पेक्खिस्सं । [अपि नाम पुनरप्युपकारिणमेतं प्रेक्षिष्ये । ]

(*इति सगन्धर्वा सह सखीभिर्निष्क्रान्ता*)

**राजा**–([2]*उर्वशीवर्त्मोन्मुखः*) अहो, दुर्लभाभिलाषी [3] मदनः ।

एषा मनो मे प्रसभं शरीरात्
पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात्
सूत्रं मृणालादिव राजहंसी ॥२०॥

([4]*इति निष्क्रान्तौ*)

इति श्रीमहाकविकालिदासविरचिते विक्रमोर्वशीये
प्रथमोऽङ्कः ॥

---

**प्रकाशिका**

उर्वशी–अपि नाम पुनरप्युपकारिणमेतं प्रेक्षिष्ये । दुर्लभमुर्वशीरूपं वस्त्वभिलषति तच्छीलः । 'दुर्लभाभिनिवेशी' इति पाठे अभिनिवेश आग्रहः । एषेति । पितुर्निजजनकस्य नारायणस्य मध्यमं पदमाकाशम् । 'वियद्विष्णुपदम्' इति त्रिकाण्डी । उत्पतन्ती उद्गच्छन्ती । अत्रैषा सुराङ्गना मन्मनः कर्षतीत्यनेनाग्रिमाङ्कोपवर्ण्यराजोत्कण्ठा तस्याश्च देव्याः परिज्ञानाद्यङ्कावताराख्यार्थोपक्षेपकेनासूचि । अङ्कावतारलक्षणं तु साहित्यदर्पणकृदाह–

'अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।
यत्राङ्कोऽवतरत्यन्योऽङ्कावतार इति स्मृतः ॥ (सा. द. ६-५८)

इति । पात्रैरिति बहुवचनमविवक्षितम् ॥२०॥

निष्क्रान्तौ । राजा सूतश्चेत्यर्थः । बहुवचनान्तपाठे तु तद्दिनीयाभिनयसमाप्तेः सख्यादयोऽपि निष्क्रान्ता इत्यर्थः । प्रथमोऽङ्क इति । अङ्कलक्षणं प्राह साहित्यदर्पणकृत्–

---

१. om.–सा. ए. २. उर्वशीमार्गोन्मुखः–सा. ए. ३. मे मनोरथः–सा. ए. ४. निष्क्रान्ताः सर्वे–सा. ए.

**प्रकाशिका**

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥१॥

विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥२॥

नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥३॥

नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युक्तस्त्रिचतुरैस्तथा ॥४॥

दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥५॥

दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्युपरोधनम् ॥६॥

स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥७॥

प्रत्यक्षचित्रचरितैर्युक्तो भावरसोत्तरैः ।
अन्ते निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥८॥

इति । (सा. द. ६-१२-१९)

इति श्रीमद्बिन्दुवृन्दपुरन्दरयायजूकप्रवरश्रीथिम्बेकरोपनामकमौनिकुलमौलिमण्डनश्रीरङ्गनाथदीक्षितकुक्षिजविबुधवरश्रीबालकृष्णभट्टसूरिसूनुश्रीरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां प्रथमाङ्कोन्मेषः ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

उर्वशीगमनोन्मुखः । अहो नु खलु दुर्लभाभिनिवेशी मदन इत्यत्र बीजस्यानुसन्धानात् समाधानं नाम सन्ध्यङ्गमुक्तं भवति । एषा मन इत्यादि । एषा सुराङ्गना पितुर्नारायणस्य मध्यमं पदमाकाशमुत्पतन्ती उद्गच्छन्ती सती मे शरीरान्मनश्चित्तमाकर्षति । अत्रोपमामाह—राजहंसी खण्डिताग्रान्मृणालाद्बिसात् सूत्रमिव तन्तुमिव ॥२०॥ अत्र राज्ञो वृद्धमनःसङ्गो नाम द्वितीया-

कुमारगिरिराजीया

वस्थेत्यनुसन्धेयम् । अत्रोर्वश्यादिनिर्गमेन वस्तुविच्छेदे सति राज्ञो मनःशङ्क उत्तराङ्कवस्तूपयोगित्वाद्बिन्दुरित्यनुसन्धेयम् । अत्रापक्षेपादिषु सन्ध्यङ्गेषु कतिचिदेव कविनोक्तानि न त्वितराणि, तथापि न दोषः ।

'न्यूनमप्यत्र यैः कैश्चिदङ्गैर्नाट्यं न दुष्यति ।
यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥'

इति वचनात् ।

अत्रोदात्तनायकस्य राजर्षेः पुरूरवसः साधारणनायिकायामुर्वश्यामनुरागो वर्णयितुमनुचितमिति नाशङ्कनीयम् । अस्या दिव्यत्वात् । यथोक्तं वसन्तराजीये-'वेश्या चेन्नायिका राज्ञः सा दिव्या स्यान्न मानुषी' ॥

इति । तथा च भारतीये—

दिव्यवेश्याङ्गनानां हि राज्ञां भवति सङ्गमः ।
दिव्या च वेश्या साप्यत्र यथैव कुलजा तथा ॥१॥

यदा मानुषसंयोगो दिव्यानां योषितां भवेत् ।
तदा सर्वत्र कर्तव्या ये भावा मानुषाश्रयाः ॥२॥

शापभ्रंशात् दिव्यानामङ्गनानां यदा भवेत् ।
मानुषैः सह संयोगस्तदैवमुपसर्पणम् ॥३॥

पुष्पैर्भूषणजैः शब्दैरदृश्या सा विलोभयेत् ।
पुनः सन्दर्शनं दत्त्वा क्षणादन्तर्हिता भवेत् ॥४॥

दिव्याभरणमाल्याद्यैर्लेखसंप्रेषणैरपि ।
ईदृशैरभ्युपगमैः समुन्माद्यस्तु नायकः ॥५॥

उन्मादनात्समुत्पन्नः कामो रतिकरो भवेत् ।
स्वभावोपगतो लोके नास्त्यर्थं भावितस्तथा ॥६॥

ये भावा मानुषाणां तु यद्गतं यच्च चेष्टितम् ।
तत्सर्वं मानुषान् प्राप्य कर्तव्यं दैवतैरपि ॥७॥

इति । (भा. शा. २२-३१४-३२०)

इति काटयवेममूपविरचिते वसन्त(कुमारगिरि)राजीये विक्रमोर्वशीयव्याख्याने प्रथमोऽङ्कः समाप्तः ॥

*(ततः प्रविशति विदूषकः)*

**विदूषकः**—[1]अविद अविद भोः। [2]णिमंतणिओ परमण्णेण विअ राअरहस्सेण फुट्टमाणो ण सक्कणोमि जनाइण्णे अइण्णणेण अत्तणो जीहं धारिदुं। ता जाव सो[3] राआ धम्मासणगदो इदो आअच्छइ दाव इमस्सिं विरलजण-संपादे [4]देवच्छंदअप्पासादे आरुहिअ चिट्ठिस्सं।

[अविदाविद भोः, निमन्त्रणिकः परमान्नेनेव राजरहस्येन [5]स्फुटन्न शक्नोमि जनाकीर्णेऽकीर्तनेनात्मनो जिह्वां धारयितुम्। तद् यावत् स राजा धर्मासनगत इत आयाति तावदेतस्मिन् विरलजनसम्पाते देवच्छन्दकप्रासाद आरुह्य स्थास्ये।]

[6] *(परिक्रम्योपविश्य पाणिभ्यां मुखं पिधाय स्थितः)*

---

**प्रकाशिका**

इदानीं विदूषकमुखेनाग्रिमकथासूचनार्थं विदूषकप्रवेशमाह—तत इति। विदूषकलक्षणं तु—'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः'।

**विश्वनाथकविराजोऽप्याह**—

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः॥ (सा. द. ३-४२)

स्वकर्म [7] भोजनादि।

**सागरोऽप्यगदत्**—

'वयस्यकश्चाटुपटुः स एव च विदूषकः।
अन्तःपुरचरो राज्ञां नर्मामात्यः प्रकीर्तितः॥'

---

१. ही ही—सा. ए; कु. २. णिमंतणोवाअणेण बम्हणो—सा. ए; कु. ३. तत्थभवं-सा. ए; कु. ४. विमाणुच्छंगपरिसरे—सा. ए; कु. ५. उद्घाट्य-मानो—कु. ६. परिक्रम्य स्थितः—सा. ए; कु. ७. हास्यादि—सा. द.।

(*ततः प्रविशति चेटी*)

चेटी—आणत्तम्हि देवीए कासिराअदुहिदाए जधा—हञ्जे णिउणिए जदोपहुदि भअवदो सुज्जस्स उवट्ठाणं कदुअ पडिणिवुत्तो[1] महाराओ तदोपहुदि सुण्णहिअओ विअ लक्खीअदि। [2]ता तुमं वि दाव अज्जमाणवआदो जाणाहि से उक्कंठाकारणं ति। ता कहं सो बम्हबंधू अदिसंधादव्वो। अहवा तणग्गलग्गं विअ ओसाअसलिलं ण तस्सिं राअरहस्सं चिरं चिट्ठदि त्ति तक्केमि। ता जाव णं अण्णेसामि (*परिक्रम्यावलोक्य च*) अम्मो, आलेक्खवाणरो विअ किं पि[3] मंतअंतो णिहुदो अज्जमाणवओ चिट्ठदि।

---

**प्रकाशिका**

इति। विदूषकः—अविदाविद भोः। 'अदृष्टाश्रुतसम्प्राप्तावविदाविद भोः परम्' इति सागरः। निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन्न शक्नोमि जनाकीर्णेऽकीर्तनेनात्मनो जिह्वां धारयितुम्। तद् यावत् स राजा धर्मासनगत इत आयाति तावदेतस्मिन् विरलजनसम्पाते देवच्छन्दकप्रासाद आरुह्य स्थास्ये। 'परमान्नं तु पायसम्' इति त्रिकाण्डी। 'जीअम्' इति पाठे जीवमित्यर्थः। देवच्छन्दक इति प्रासादनाम॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

कविरिदानीमङ्कान्तरमारभमाणः कथासंपुटनार्थं प्रथमं प्रवेशकं नाम अर्थोपक्षेपकं प्रस्तौति—ततः प्रविशतीति। 'ही ही' इति विदूषकहर्षे निपातः। हीही वैदूषक इत्युक्तत्वात्। राजरहस्येनोद्बाध्यमानो न शक्नोम्याकीर्णे जनसंमर्दे आत्मनो जिह्वां रक्षितुम्। तस्माद् यावदत्रभवान् कार्यासनगतस्तिष्ठति तावदस्मिन् विरलजनसम्पाते विमानप्रतिच्छन्दपरिसरे स्थास्यामि। विमानप्रतिच्छन्द इति तस्य प्रासादस्य सञ्ज्ञा॥

---

१. अज्जउत्तो—शा. ए. २. तस्स विअक्खणस्सादो—शा. ए. ३. कुण्डिमूढो—शा. ए.

ता जाव णं उवसप्पामि । (*उपसृत्य*) अज्ज वंदामि । [आज्ञप्ताऽस्मि देव्या काशिराजदुहित्रा यथा हञ्जे निपुणिके, यतःप्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजस्ततःप्रभृति शून्यहृदय इव लक्ष्यते। तत् त्वमपि तावदार्यमाणवकाज्जानीह्यस्योत्कण्ठाकारण-मिति । तत् कथं स ब्रह्मबन्धुरतिसन्धातव्यः । अथवा तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन् राजरहस्यं चिरं तिष्ठतीति तर्कयामि । तद् यावदेनमन्वेषयामि । अहो, आलेख्यवानर इव किमपि मन्त्रयन्निभृत आर्य-माणवकस्तिष्ठति । तद् यावदेनमुपसर्पामि । आर्य, वन्दे । ]

---

**प्रकाशिका**

चेटी—आज्ञप्तास्मि देव्या काशिराजदुहित्रा यथा—हञ्जे चेटि निपुणिके, यतःप्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजस्ततःप्रभृति शून्यहृदय इव लक्ष्यते । तत् त्वमपि तावदार्यमाणकाज्जानीह्यस्योत्कण्ठाकार-णमिति । माणवकेति विदूषकनाम । तत् कथं स ब्रह्मबन्धुरतिसन्धातव्यः । ब्रह्मबन्धुर्दुष्टविप्रः । 'ब्रह्मबन्धुरधिक्षेपे निर्देशेऽपि द्विजोत्तमे' इति **विश्वलोचनः** । अतिसन्धातव्यो वञ्चनीयः । अथवा तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन् राजरहस्यं चिरं तिष्ठतीति तर्कयामि । तद् यावदेनमन्वेषयामि । अवश्यायो नीहारः । 'अवश्यायो हिमे वर्गे सततार्जनकर्मणि' इति **विश्वलोचनः** । अम्मो आश्चर्ये । आलेख्यवानर इव किमपि मन्त्रयन्निभृत आर्यमाणवकस्तिष्ठति । निभृतो निश्चलः । तद्यावदेनमुपसर्पामि । आर्य वन्दे ।

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

No commentary

**विदूषकः**—सोत्थि भोदीए। *(आत्मगतम्)* एदं दुट्ठचेडिअं पेक्खिअ तं राअरहस्सं हिअअं भिंदिअ णिक्कमदि विअ[1]। *([2]किंचिन्मुखं संवृत्य। प्रकाशम्)* भोदि[3] णिउणिए, संगीदवावारं उज्झिअ कहिं पत्थिदासि। [स्वस्ति भवत्यै। एतां दुष्टचेटिकां प्रेक्ष्य तद्राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। भवति निपुणिके, संगीतव्यापारमुज्झित्वा कुत्र प्रस्थिताऽसि।]

**चेटी**—देवीए वअणेण अज्जं एव्व पेक्खिदुं। [देव्या वचनेनार्यमेव प्रेक्षितुम्।]

**विदूषकः**—किं तत्थभोदी आणवेदि। [किं तत्रभवत्याज्ञापयति।]

**चेटी**—[4]देवी भणादि जधा—अज्जस्स मम उअरि अदक्खिण्णं। ण मं अणुइदवेअणं दुक्खिदं अवलोअदि त्ति। [देवी भणति यथा-आर्यस्य ममोपरि अदाक्षिण्यम्। न मामनुचितवेदनां दुःखितामवलोकयतीति।]

---

**प्रकाशिका**

**विदूषकः**—स्वस्ति भवत्यै। 'नमः स्वस्ति' इत्यादिना चतुर्थी। एतां दुष्टचेटिकां प्रेक्ष्य तद्राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। भवति निपुणिके, संगीतव्यापारमुज्झित्वा कुत्र प्रस्थिताऽसि। **चेटी**—देव्या वचनेनार्यमेव प्रेक्षितुम्। **विदूषकः**—किं तत्रभवत्याज्ञापयति। **चेटी**—देवी भणति यथा—आर्यस्य ममोपरि अदाक्षिण्यम्। न मामनुचितवेदनां दुःखितामवलोकयतीति। अदाक्षिण्यमननुकूलता। मन्मुखसंकोचाभाव इति यावत्॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

No commentary

---

१, २, ३. om.—सा. ए. ४. देवी भणादि सदा वि अज्जो मह पक्खवादी ण मं अणुइदवेअणादुक्खिदं उवेक्खदि त्ति—सा. ए.

विदूषकः—णिउणिए, किं वा पिअवअस्सेण तत्थभोदीए पडिऊलं किं वि समाअरिदं। [निपुणिके, किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरिदं।]

चेटी—जंणिमित्तं उण भट्टा उक्कंठिदो, ताए इत्थिआए णामेण भट्टिणा देवी आलविदा। [यन्निमित्तं पुनर्भर्ता उत्कण्ठितः, तस्याः स्त्रिया नाम्ना भर्त्रा देवी आलपिता।]

विदूषकः—(*स्वगतम्*) कहं। सअं एव्व तत्थभोदा वअस्सेण रहस्सभेदो किदो। किं दाणिं अहं बम्हणो जीहं रक्खिदुं समत्थोम्हि। (*प्रकाशम्*) किं तत्थभोदा उव्वसीणामधेएण आमंतिदा। [कथम्। स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः। किमिदानीमहं ब्राह्मणो जिह्वां रक्षितुं समर्थोऽस्मि। किं तत्रभवता उर्वशीनामधेयेनामन्त्रिता।]

चेटी—अज्ज, का सा उव्वसी। [आर्य का सा उर्वशी।]

---

**प्रकाशिका**

**विदूषकः**—निपुणिके। किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरितम्।

**चेटी**—यन्निमित्तं पुनर्भर्ता उत्कण्ठितः, तस्याः स्त्रिया नाम्ना भर्त्रा देवी आलपिता।

**विदूषकः**—कथम्। स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः। किमिदानीमहं ब्राह्मणो जिह्वां रक्षितुं समर्थोऽस्मि। किं तत्रभवता उर्वशीनामधेयेनामन्त्रिता। **चेटी**—का सा उर्वशी॥

**कोणेश्वरी**

**Folio missing**

**कुमारगिरिराजीया**

**विदूषकः**—'ओम्' इत्यभ्युपगमे। तत्रभवती उर्वशी इति किमालपिता॥

**विदूषकः**—अत्थि उव्वसि त्ति अच्छरा। ताए दंसणेण उम्मादिदो ण केवलं तं आआसेदि, मं वि बम्हणं असिदव्वविमुहं दिढं पीडेदि। [अस्त्युर्वशीत्यप्सराः। तस्या दर्शनेनोन्मादितो न केवलं तामायासयति, मामपि ब्राह्मणमशितव्यविमुखं दृढं पीडयति।]

**चेटी**—(*स्वगतम्*) उव्वादिदो मए भेओ भट्टिणो रहस्सदुग्गस्स। ता गदुअ देवीए एदं णिवेदेमि। (*इति प्रस्थिता*) [उत्पादितो मया भेदो भर्तू रहस्यदुर्गस्य। तद् गत्वा देव्यै एतन्निवेदयामि।]

**विदूषकः**—णिउणिए, विण्णावेहि मम वअणेण कासिराअदुहिदरं-परिस्संतम्हि इमाए मिअतिण्हिआए वअस्सं णिअत्तावेदुं। जइ भोदीए मुहकमलं पेक्खिस्सदि तदो णिअत्तिस्सदि त्ति। [निपुणिके, विज्ञापय मम वचनेन काशिराजदुहितरम्—परिश्रान्तोऽस्म्येतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम्। यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यत इति।]

**चेटी**—जं अज्जो आणवेदि। [यदार्य आज्ञापयति।]

(*इति निष्क्रान्ता*)

---

**प्रकाशिका**

**विदूषक**:—अस्त्युर्वशीत्यप्सराः। तस्या दर्शनेनोन्मादितो न केवलं तामायासयति, मामपि ब्राह्मणमशितव्यविमुखं दृढं पीडयति। 'अशितव्यविमुखः' इत्यपि पाठः। **चेटी**—उत्पादितो मया भेदो भर्तू रहस्यदुर्गस्य। तद् गत्वा देव्यै एतन्निवेदयामि। **विदूषकः**—निपुणिके, विज्ञापय मम वचनेन काशिराजदुहितरम्—परिश्रान्तोऽस्म्येतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम्। यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यत इति। **चेटी**—यदार्य आज्ञापयति॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया** No commentary

(नेपथ्ये)

**वैतालिकः**–जयतु जयतु देवः ।

आ लोकान्तात् प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः ।
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥१॥

---

**प्रकाशिका**

**नेपथ्य इति** । 'आलोकान्तात्' इत्यारभ्य 'पासपडिवत्ती होमि' इत्यन्तेन चूलिकया राजागमनरूपार्थसूचनम् । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम्' (द. रू. १–६१) इति दाशरूपकीयादितल्लक्षणात् । **आलोकान्तादिति** । आलोकान्तात् लोकान्तमभिव्याप्यासां प्रजानां प्रतिहततमोवृत्तिर्निरस्तपापाचरणः। यद्वा आलोकान्तादालोकनमात्रादासां प्रजानां प्रतिहततमोवृत्तिः । राज्ञोऽतिधार्मिकत्वात् तेजोवत्त्वाच्च । यदालोकनमात्रेणैव दण्डादिभयेन प्रजाभिः पापाचरणं न क्रियत इति भावः । यदालोकनादपि जनानां पापं नश्यतीति वा । उक्तं च—

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत् सदा बुधः ॥

इति । पक्षे आलोकान्तात् प्रकाशस्वरूपात् । तमोवृत्तिरन्धकारावस्थानम् । 'लोकस्तु भुवने जने' इति **त्रिकाण्डी** । 'स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति **विश्वलोचनः** । एको ज्योतिषामधिपतिः सूर्यः क्षणं व्योममध्ये तिष्ठति । मध्याह्नसमय इत्यर्थात् । अह्नो दिवसस्य षष्ठे काले भागे त्वमपि विश्रान्तिं लभसे विश्रामं प्राप्नोषि । 'षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः' इति नीतिकुलश्चाणक्यादयः ॥१॥

**कोणेश्वरी**

Folio missing.

**कुमारगिरिराजीया**

**आलोकान्तादित्यादि** । आलोकान्ताल्लोकस्यान्तस्तस्मात् । आलोकपर्यन्तमित्यर्थः । आसां प्रजानां प्रतिहततमोवृत्तिः प्रतिहता निरस्ता तमसो

**विदूषकः**--(*कर्णं दत्त्वा*) एसो उण पिअवअस्सो धम्मासणसमुत्थिदो इदो एव्व आअच्छदि । ता जाव पासपडिवत्ती होमि । (*इति निष्क्रान्तः*)

[एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति । तद् यावत् पार्श्वपरिवर्ती भवामि । ]

## प्रवेशकः

---

### कुमारगिरिराजीया

ध्वान्तस्य तमोगुणस्य च वृत्तिर्व्यापारो (प्रसारः) येन स तथोक्तः । तत्रभवतो दिनकृतः सूर्यस्य चाधिकारो नियोगस्तुल्यो भागः समानव्यापारः समानकर्म नोऽस्माकं मतः संमतः । किं च ज्योतिषां त्विषामधिपतिः सूर्यो व्योम्नि मध्ये एकं क्षणं क्षणमात्रकालं तिष्ठत्यास्ते । सूर्यो मध्याह्ने क्षणमात्रं विश्राम्यतीति पौराणिकी प्रसिद्धिः । तथा च स्मृतिकारैरप्युक्तम् --'मध्याह्ने सर्वथा यस्मान्मन्दीभवति भास्करः' इति । त्वमपि दिवसस्य षष्ठे भागेऽष्टधा विभक्तस्य षष्ठांशे आत्मनश्छन्दवर्ती स्वेच्छावर्ती स्वतन्त्रस्तिष्ठसि । तथा चोक्तं वरदराजीये राजधर्मे--

दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं च यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥

दिवसमष्टभागं कृत्वा प्रथमभागमग्निहोत्रार्थं ब्राह्मणतर्पणार्थं च मुक्त्वा अनन्तरं भागत्रयं व्यवहारकाल इति । तथा च मनुः--हुताग्निर्ब्राह्मणानार्च्य प्रविशेत् सुशुभां सभाम्' (म. स्मृ. ७.१४५) इति । अनन्तरकालकर्तव्यमाह याज्ञवल्क्यः--

व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः । इति ।

तदनन्तरकालकर्तव्यमाह मनुः --

भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह (म. स्मृ. ८.२२१) इति ।

### प्रकाशिका

**विदूषकः**- एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति । तद् यावत् पार्श्वपरिवर्ती भवामि ॥

**प्रकाशिका**

प्रवेशकः इति । विदूषकप्रवेशोत्तरमेतावान् संदर्भः प्रवेशकपदेनाभिधीयते ।

द्विधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत् किंचिद् दृश्यश्रव्यमथापरम् ॥ (द. रू. १-५६)

इति पूर्वमुक्त्वा

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ (द. रू. १-५८)

एवं पञ्चभिरभिनेयपात्रप्रवेशं सूचयेदित्यभिहितानां विष्कम्भकादीनां लक्षणानि शुद्धमिश्रादिभेदाश्च सोदाहरणा दशरूपकादौ विस्तरेण प्रतिपादितास्तत एवावगन्तव्याः । विस्तरभयान्नेह प्रपञ्चिताः । संक्षेपतस्तु 'अधमपात्रेण पात्राभ्यां वा प्राकृतभाषिभ्यां सूच्येतिवृत्तसूचनं प्रवेशकः ।' उक्तं च धनिकेन

तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

इति । तद्वदेवेति विष्कम्भकलक्षणोक्तं भूतभविष्यदर्थज्ञापकत्वं संक्षिप्तार्थत्वं चात्रादिश्यते । अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य निषेधः । यद्यपि चात्राङ्कद्वयस्यान्तरित्यविशेषेण प्रथमान्त्याङ्कयोः प्रवेशकनिषेधोऽवगम्यते तथापि शेषाङ्के सर्वत्र तद्दर्शनात् प्रथमाङ्क एव केवलमस्य निषेध एतल्लक्षणकृतामभिप्रेतः । तथा च **देवपाणिविरचितदशरूपटीकायां साहसाङ्कीयटीकासम्मतिरपि—**

'नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यते ।
प्रवेशं सूचयेत् तस्मादमुख्याङ्के प्रवेशकात् ॥

मुख्याङ्कः प्रथमाङ्कः । एतेन मुख्याङ्केतराङ्के प्रवेशको बोद्धव्य इति । वस्तुतस्तु प्रवेशकोत्तरभाविनो ग्रन्थस्याङ्कशब्दवाच्यत्वादन्त्याङ्केऽप्यङ्कद्वयान्तर्वर्तित्वं घटत एवेति युक्तः प्रथमाङ्कमात्रे निषेध इत्यलं पल्लवलीलया ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

No commentary

*(ततः प्रविशत्युत्कण्ठितो राजा विदूषकश्च)*

**राजा—**

आ दर्शनात् प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम्
बाणेन मकरकेतोः कृतमार्गमवन्ध्यपातेन ॥२॥

**विदूषकः**—[1]सपीडा क्खु जादा तत्थभोदी कासिराअदुहिदा ।

[सपीडा खलु जाता तत्रभवती काशिराजदुहिता ।

**राजा**—([2]*निरीक्ष्य*) रक्ष्यते भवता रहस्यनिक्षेपः ।

**विदूषकः**—*(सविषादमात्मगतम्)* [3]वंचिदोम्हि दासीए णिउणिआए । अण्णधा [4]कधं एव्वं पुच्छदि वअस्सो । [वञ्चितोऽस्मि दास्या निपुणिकया । अन्यथा कथमेवं पृच्छति वयस्यः ।]

**प्रकाशिका**

राजा—आ दर्शनादिति । आ दर्शनाद्दर्शनमारभ्य । मकरकेतोर्मदनस्य । अवन्ध्यः सफलः पातः पतनम् । 'वन्ध्योऽफलोऽवकेशी च' इति त्रिकाण्डी । विदूषक :—सपीडा खलु जाता तत्रभवती काशिराजदुहिता । राजा—रहस्यं गोप्योऽर्थः । 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु' इति त्रिकाण्डी ।...

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

ततः प्रविशतीत्यादि । उत्कण्ठित उत्सुकः ।
आ दर्शनादित्यादि । स्पष्टोऽर्थः । अतिसंधितो वञ्चितोऽस्मि दास्याः पुत्र्या, अन्यथा वयस्यो न मामेवं मन्त्रयते ॥

---

१. (आत्मगतम्) संपीडिदा क्खु दाव तवस्सिणी कासिराअपुत्ती—सा. ए. २. om.—सा. ए. ३. अदिसंधिदोम्हि दासीए—सा. ए. ४. ण—सा. ए.

राजा–किं भवांस्तूष्णीमास्ते ।

**विदूषकः**–भो,[1] एव्वं मए जीहा [2]संजंतिदा जेण[3] भवदो वि[4] [5]णत्थि पडिवअणं । [भोः, एवं मया जिह्वा संयन्त्रिता, येन भवतोऽपि नास्ति प्रतिवचनम् । ]

**राजा**–युक्तम् । अथ [6]केनेदानीमात्मानं विनोदयामि[7] ।

**विदूषकः**—भो,[8] महाणसं गच्छम्ह । [भोः, महानसं गच्छावः ।]

**राजा**—किं तत्र ।

**विदूषकः**–तहिं पंचविहस्स अब्भवहारस्स उवणदसंभारस्स जोअणं पेक्खमाणेहिं सक्कं उक्कंठा विणोदेदुं । [तत्र पञ्चविधस्याभ्यवहारस्योपनतसम्भारस्य योजनं प्रेक्षमाणाभ्यां शक्यमुत्कण्ठा विनोदयितुम् ।]

---

**प्रकाशिका**

**राजा**—विनोदयामि प्रीणयामि । **विदूषकः**–महानसं पाकस्थानम् । 'रसवत्यां तु पाकस्थानं महानसम्' इति **त्रिकाण्डी** । प्राकृते द्विवचनाभावाद् द्विवचनस्थाने गच्छम्ह इति बहुवचनम् । **विदूषकः**–तत्र पञ्चविधस्याभ्यवहारस्य योजनं प्रेक्षमाणाभ्यां शक्यं बलवत्युत्कण्ठा विनोदयितुम् । विनोदयितुं दूरीकर्तुम् । 'शक्यं श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्' इति **महाभाष्यप्रयोगा**दुत्कण्ठा विनोदयितुं शक्यमिति साधु । निकृतं समयमनुसृत्य शक्यमित्यत्र शक्या इत्यर्थो वा । 'बलवतीमुत्कण्ठाम्' इत्यपि पाठः ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

**विदूषकः**–अभ्यवहारस्य पञ्चविधत्वं भक्ष्यभोज्यचोष्यलेह्यपानीयभेदेन ॥

---

१. भो om.–सा. ए. २. णिअंतिदा–सा. ए. ३. जं–सा. ए. ४. सहसा–सा. ए. ५. ण देमि–सा. ए. ६. क्व–सा. ए. ७. विनोदयेयम्–सा. ए. ८. om.–सा. ए.

**राजा**—तत्रेप्सितसंनिधानाद् भवान् रंस्यते । मया खलु दुर्लभप्रार्थनः कथमात्मा विनोदयितव्यः ।

**विदूषकः**—णं भवं वि[1] तत्थभोदीए उव्वसीए दंसणपहं गदो । [ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः ।]

**राजा**—ततः किम् ?

**विदूषकः**—ण क्खु दे[2] दुल्लह त्ति तक्केमि[3] [न खलु ते दुर्लभा इति तर्कयामि ।]

**राजा**—[4]पक्षपातोऽपि तस्यां सद्रूपस्यालौकिक एव ।

**विदूषकः**—[5]एव्वं मंतअंतेण मे वड्ढिदं कोदूहलं । किं तत्थभोदी उव्वसी अदुदीया रूवेण, अहं विअ विरूवदाए । [एवं मन्त्रयता मम वर्धितं कौतूहलम् । किं तत्रभवत्युर्वश्यद्वितीया रूपेण, अहमिव विरूपतया ।]

**राजा**—माणवक, प्रत्यवयवमशक्यवर्णनां तामवेहि । तेन हि समासतः श्रूयताम् ।

**विदूषकः**—भो अवहिदोम्हि । [भो अवहितोऽस्मि ।]

---

**प्रकाशिका**

**विदूषकः**—ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः । **विदूषकः**—न खलु ते दुर्लभेति तर्कयामि । यतस्त्वमेतादृशोऽनिर्वचनीयसौन्दर्यस्तद्दृक्पथं गतश्चेदवश्यं त्वयि बद्धभावा सा न दुर्लभेति भावः । **राजा**—पक्षपात इति । सतः समीचीनस्य रूपस्य तस्यामुर्वश्यां पक्षपात आग्रहेणावस्थितिः । अलौकिकोऽतिविलक्षणः । कुत्राप्यदृष्टचर इति यावत् । **विदूषकः**—एवं मन्त्रयता मम वर्धितं कौतूहलम् । किं तत्रभवत्युर्वश्यद्वितीया रूपेण, अहमिव विरूपतया । **राजा**—समासतः संक्षेपतः । विदूषकः—भो अवहितोऽस्मि ॥

**कोणेश्वरी Folio missing**

**कुमारगिरिराजीया**

**विदूषकः**—णं (ननु) इति प्रश्ने ॥

---

१. om.—सा. ए. २. सा—सा. ए. ३. समत्थेमि—सा. ए. ४. पक्षपातोऽप्यवधार्यताम्—सा. ए. ५. एव्वं वड्ढदि मे कोदूहलं—सा. ए.

राजा–

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥३॥

विदूषकः–अदो दाव तुए दिव्वरसाहिलासिणा चादअव्वदं गहिदं। [1]ता दाव तुमं कहिं पत्थिदो। [अतस्तावत् त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम्। तत् तावत् त्वं कुत्र प्रस्थितः।]

राजा–[2]विविक्तादृते नान्यदुत्सुकस्य[3] शरणमस्ति। तद् भवान् प्रमदवनमार्गमादेशयतु।

विदूषकः–*(आत्मगतम्)* का गदी। *(प्रकाशम्)* इदो इदो भवं। [का गतिः। इत इतो भवान्।]

*(इति [4]परिक्रामतः)*

---

**प्रकाशिका**

**राजा–आभरणस्येति**। आभरणस्य कटककुण्डलादेराभरणं भूषणम्। निजवपुषैव परं तच्छोभितं विधीयत इति भावः। प्रसाधनविधेर्यावकहरिद्रादिप्रतिकर्मणः प्रसाधनविशेषः। निरतिशयशोभाजनकमित्यर्थः। 'प्रतिकर्म प्रसाधनम्' इति **त्रिकाण्डी**। उपमानस्य चन्द्रादेः प्रत्युपमानम्। चन्द्रादेः सकाशादाधिक्याच्चन्द्राद्यैवैतस्योपमेयमित्यर्थः। उपमानं ह्यधिकगुणं भवतीत्यालङ्कारिकोद्घोषादिति भावः। अत्यपूर्वसौन्दर्यमिति रहस्यम् ॥३॥

**विदूषकः**—अतस्तावत् त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम्। तत्तावत् त्वं कुत्र प्रस्थितः। 'दार्वाघाटस्तु सारङ्गः स्तोककश्चातकः समाः।' इति **त्रिकाण्डी**। विविक्ताद् विजनात् 'विविक्तौ पूतविजनौ' **इत्यमरः**। 'विविधशिशिरोपचारात्' इत्यपि पाठः। शिशिरोपचारः शीतलवस्तुपरिशीलनम्। शरणं रक्षकम्। 'शरणं गृहरक्षित्रोः' इति **त्रिकाण्डी**। **प्रमदवनमार्गमिति**। 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्।' इति च सा। **विदूषकः**—का गतिः। इत इतो भवान् ॥

---

१. om.—सा.ए. २. वयस्य—सा.ए. ३. मनसः—सा.ए. ४. परिक्रम्य—सा.ए.

**विदूषकः**—[1]एसो पमदवणपरिसरो । आणमिअ पच्चुवगदो भवं आअंतुओ दक्खिणमारुदेण । [एष प्रमदवनपरिसरः । आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन । ]

**राजा**—(*विलोक्य*) उपपन्नं विशेषणमस्य वायोः । अयं हि—

निषिञ्चन् माधवीमेतां लतां कौन्दीं च लासयन् ।
स्नेहदाक्षिण्ययोर्योगात् कामीव प्रतिभाति मे ॥४॥

**विदूषकः**—सरिसो एव्व से अहिणिवेसो । (*इति*[2] *परिक्रामन्*) एदं[3] पमदवणं । पविसदु भवं । [सदृश एवास्याभिनिवेशः । प्रविशतु भवान् । ]

**राजा**—वयस्य[4], प्रविशाग्रतः ।

(*उभौ* [5]*प्रवेशं नाटयतः*)

---

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

**राजा–आभरणस्येत्यादि** । तस्या उर्वश्या वपुराभरणस्य हारकेयूरादेराभरणं मण्डनम् । एतत्सम्बन्धेन (उर्वशीवपुःसम्बन्धेन) आभरणस्यापि शोभातिशयो भवतीत्यर्थः । प्रसाधनविधेश्चन्दनचर्चादेः (चन्दनलेपनादेः) प्रसाधनविशेषः । उपमानस्यापि चन्द्रादेरपि प्रत्युपमानम् । चन्द्रादयः कीदृशा इति जिज्ञासायाम् । उर्वश्या मुखाद्यवयवास्तेषामुपमानानि भवन्तीत्यर्थः । वपुःशब्देनावयवा लक्ष्यन्ते ॥

**प्रकाशिका**

**विदूषकः**—एष प्रमदवनपरिसरः । 'पर्यन्तभूः परिसरः' इत्यपि सैव (त्रिकाण्डी) । आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन । प्रत्युपगतः

---

१. एदेण पमदवणचोदिदेण विअ पच्चुग्गदो भवं आअंतुओ दक्खिणमारुदेण–सा. ए. २. परिक्कामिदकेन ।–सा. ए. ३. पमदवणदुआरं–सा. ए. ४. om.–सा. ए. ५. प्रविष्टाः–सा. ए.

राजा–([1]*त्रासं रूपयित्वा*) वयस्य, [2]साधु मनसा समर्थित आपत्प्रतीकारः किल नामोद्यानप्रवेशः। तच्चान्यथैवोपपन्नम्।

[3]विविक्षोर्यदिदं नूनमुद्यानं [4]नाघशान्तये।
[5]स्रोतसेवोह्यमानस्य प्रतीपतरणं महत् ॥५॥

---

**प्रकाशिका**

कृतप्रत्युद्‌गमनः। दक्षिणदिगागतेन वायुना। अनुकूलेन च। **राजा**–उपपन्नं युक्तम्। विशेषणं दक्षिणेत्युपसर्जनम्। **निषिञ्चन्निति**। माधवीं वासन्तीं लक्ष्मीं शोभां नितरां सिञ्चन्। अतिशयितां कुर्वन्नित्यर्थः। 'एताम्' इति पाठे एतां माधवीं वासन्तीं लतां निषिञ्चन्नतिमधुसंपन्नां कुर्वन्। कौन्दीं च लतां वल्लीं लासन्नर्तयन्। 'वासन्ती माधवी लता' **इत्यमरः**। माध्यं कुन्दम्' इति च सः। स्नेहः प्रेमा। दाक्षिण्यमानुकूल्यम्। माधव्या हि वासन्त्या नववयोविशेषशालिन्या भामिन्या इव निषेको माध्याश्च कौन्द्या भ्रमरविसरापीतायाः प्रगल्भाया इव नर्तनमात्रमित्यहो कामिन इवास्य युक्तकारितेति भावः। एवं च माधवीमाध्योर्ज्येष्ठाकनिष्ठाख्यनायिकाविशेषणत्वं प्राकाशि ॥४॥

**राजा–विविक्षोरिति**। विविक्षोः प्रवेष्टुमिच्छोः। महत्सर्वोत्कर्षशालि। उद्यानमुपवनम्। 'पुमानाक्रीड उद्यानम्' **इत्यमरः**। अघशान्तये दुःखनाशाय। 'दुःखैनोव्यसनेष्वघम्' **इत्यमरः**। स्रोतसा प्रवाहेणोह्यमानस्य प्राप्यमाणस्य प्रतीपतरणं प्रतिकूलप्लवनमिव ॥५॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

**निषिञ्चन्नित्यादि**। माधवीं वासन्तीं निषिञ्चन् प्रसवाधानवतीं कुर्वन्नेतां कौन्दीं लतां च वर्तयन् व्यापारन्। स्नेहदाक्षिण्ययोर्योगान्माधव्यां स्नेहः कौन्द्यां दाक्षिण्यं तयोर्योगात् सम्बन्धादयं वायुः कामीव कामुक इव प्रतिभात्यवभासते ॥४॥

**राजा–विविक्षुरित्यादि**। स्पष्टोऽर्थः ॥५॥

---

१. अग्रतो विलोक्य–सा. ए. २. न मया साधु समर्थितमापत्प्रतीकारः किल प्रमदवनोद्यानप्रवेश इति।–सा. ए. ३. विविक्षुर्यदहं तूर्णं–सा. ए. ४. तापशान्तये–सा. ए. ५. स्रोतोजवोह्यमानस्य–सा. ए.

**विदूषकः**—कहं विअ । [कथमिव । ]

**राजा**—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रै–
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥६॥

**विदूषकः**—अलं भवदो[1] परिदेविदेण । अइरेण [2]इट्ठसंपाद-इत्तओ अणंगो एव्व दे सहाओ भविस्सदि । [अलं भवतः परि-देवितेन । अचिरेणेष्टसंपादयितानङ्ग एव ते सहायो भविष्यति । ]

**राजा**—प्रतिगृहीतं ब्राह्मणवचनम् ।

( *इति परिक्रामतः* )

---

**प्रकाशिका**

विदूषकः—कथमिव । राजा—इदमिति । असुलभमुर्वशीरूपं वस्तु । प्रार्थना अभिलाषः । क्षिणोति कृशीकरोति । सहकारोऽतिसौरभ आम्रविशेषः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इति त्रिकाण्डी ॥६॥ विदूषकः—अलं भवतः परिदेवितेन । 'विलापः परिदेवनम्' इति त्रिकाण्डी । अचिरेणेष्टसंपादयितानङ्ग एव ते सहायो भविष्यति ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

इदमसुलभेत्यादिः । स्पष्टोऽर्थः । अत्र इष्टार्थविषयेहाकथनाद्विलासो नाम सन्ध्यङ्गमुक्तं भवति ।६॥

---

१. om.—सा. ए.　२. इच्छिद—सा. ए.

**विदूषकः**–पेक्खदु भवं वसंदोदारसूइदं [1]से अहिरामत्तणं पमदवणस्स । [प्रेक्षतां भवान् वसन्तावतारसूचितमस्याभिरामत्वं प्रमदवनस्य । ]

**राजा**–ननु प्रतिपदमेव[2] तावदवलोकयामि । अत्र हि

अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयोर्,
[3]बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा[4] चूते नवा मञ्जरी[5],
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥७॥

**विदूषकः**–एसो [6]कसणमणिसिलावट्टसणाहो अदिमुत्तलदामंडओ भमरसंहविहडिदेहिं कुसुमेहिं [7]किदोवआरो विअ अत्थभवदो वट्टदि । ता [8]अणुग्गहीअदु एसो । [एष कृष्णमणिशिलापट्टसनाथोऽतिमुक्तलतामण्डपो भ्रमरसंघविघटितैः कुसुमैः कृतोपचार इवात्रभवतो वर्तते । तदनुगृह्यतामेषः । ]

**राजा**–यदभिरोचते भवते ।

(*इत्युपविशतः*)

---

**प्रकाशिका**

विदूषकः–प्रेक्षतां भवान् वसन्तावतारसूचितमस्याभिरामत्वं प्रमदवनस्य । अग्र इति । अग्रेऽग्रभागे स्त्रीनखवत्पाटलं श्वेतरक्तं कुरबकं शोणं कुरण्टककुसुमं द्वयोर्भागयोरुभयतः श्यामम् । 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः' इति त्रिकाण्डी । बालाशोकं नूतनमशोककुसुममुपोढरागसुभगमुत्कृष्टारक्ततासुन्दरं

---

१. से om.–सा. ए. २. प्रतिपादपमेवालोकयामि–सा. ए. ३. रक्ताशोक–कु. गि. ४. कलिका–कु. गि. ५. वल्लरी–कु. गि. ६. कसण om.–सा. ए. ७. सअं विअ किदोवआरो भवंतं पडिच्छदि–सा. ए. ८ अणुगेण्हीअदु दाव–सा. ए.

**विदूषकः**—दाणिं[1] इहासीणो ललिदलदालो[2]हीअमाणलोअणो उव्वसीगदं उक्कंठं विणोदेदु भवं[3] । [इदानीमिहासीनो ललितलतालोभ्यमानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भवान् । ]

**राजा**—(*निःश्वस्य*)

[4]बहुकुसुमितास्वपि मध्ये नोपवनलतासु नम्रविटपासु ।
चक्षुर्बध्नाति धृतिं [5]तदङ्गनालोकदुर्ललितम् ॥८॥
तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम् ।

---

**प्रकाशिका**

भेदोन्मुखं विकासोन्मुखम् । अनेन विशेषणद्वयेन मुग्धदशाप्राप्त उक्तः । 'ऊरुद्वन्द्व' इत्यादिना यौवनारम्भो वर्णितः ॥७॥ विदूषक—एष मणिशिलापट्टकसनाथो-ऽतिमुक्तलतामण्डपो भ्रमरसंघविघटितैः कुसुमैः कृतोपचार इवात्रभवन्तो वर्तते । तदनुगृह्यतामेषः । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इति त्रिकाण्डी ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

अग्रे स्त्रीनखेत्यादि । कुरबकं कुरबककुसुमम् । अग्र उपरिभागे । स्त्रीनखपाटलं स्त्रीनखवदीषद्रक्तम् । द्वयोर्भागयोः प्रदेशयोः श्यामं नीलम् । रक्ताशोकं रक्ताशोककुसुमम् । उपोढरागसुभगं प्राप्तरागं प्राप्तो रागो रक्तिमा येन तत् तथोक्तम् । तच्च तत् सुभगं रम्यं च भेदोन्मुखं विकासोन्मुखं तिष्ठति । चूते नवा नूतना वल्लरी मञ्जरी । ईषद्बद्धरजःकणाग्रकलिका ईषद्बद्धा रजःकणाः परागा यासां तास्ता अग्रकलिकाः प्रथमकोरका यस्याः । मधुश्रीर्वसन्तलक्ष्मीः मुग्धत्वस्य बालत्वस्य यौवनस्य चान्तरेण स्थिता ॥७॥

---

१. om.—सा. ए. २. विलोहीअमाणणअणो—सा. ए. ३. om.—सा. ए. ४. मम कुसुमितास्वपि—सा. ए. ५. तद्रूपा—सा. ए.

## प्रकाशिका

**विदूषकः**—इदानीमिहासीनो ललितलतालोभ्यमानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भवान् । **बहुकुसुमितास्विति** । बहुकुसुमितास्वित्यनेनात्यन्तं सौगन्ध्यनिर्भरत्वं लोचनलोभनीयत्वं च व्यज्यते । उपवनेत्यनेनादूरवर्तितयानायासलभ्यत्वम् । नम्रविटपास्वित्यनेनातिविनतया प्रच्छायशीतलत्वं द्योत्यते । अपिशब्दो बह्वित्यादिनम्रेत्यन्तविशेषणान्तेषु योज्यः । तेन चैतादृशीष्वपि चक्षुषोऽननुरागे को हेतुः । तत्र हेतुगर्भं विशेषणमाह—**तदङ्गनेति** । आलोकनमालोकस्तत्र तेन वा दुर्ललितं दुराग्रहग्रस्तम् । बहुकुसुमितास्वित्यादिभिर्विशेषणैरत्यन्तार्तववतीषु । 'अतिपरिचयादवज्ञा' इत्युक्तरीत्योपवनस्थितया सर्वदासन्नवर्तित्वेनानादरविषयीभूतासु । नम्राः सौन्दर्यातिशयाद्विलोकनावनता विटपाः खिङ्गा यासु । नम्रान् विटान् पान्तीति वा । परपुरुषलोचनादिगोचरास्वित्यर्थः प्रासूचि । तदङ्गनेत्यनेन च सा प्रसिद्धा सौन्दर्यादिगुणगणशालिनी देवीभावाच्च निखिलमर्त्यदोषाभाववती याङ्गना तस्यां मनोऽभिरतम् । बहुदोषदूषितासु च लतासु चक्षुर्न सक्तमिति साम्प्रतमेवैतदिति रहस्यम् । 'मम कुसुमिता' इत्यपि पाठः । मम दृष्टिरिति सम्बन्धः । 'विटपः पल्लवे खिङ्गे' इति **विश्वः** (७६-२) ॥८॥

## कोणेश्वरी

Folio missing

## कुमारगिरिराजीया

**मम कुसुमितास्वित्यादि**—सखे वयस्य तद्रूपालोकदुर्ललितमुर्वशीरूपावलोकनदृप्तं मम चक्षुः कुसुमितास्वपि संजातकुसुमास्वपि नम्रविटपासु नम्रा नता विटपाः क्षुद्रशाखा यासां ताः । तासूपवनलतासूद्यानवल्लीषु धृतिं प्रीतिं न बध्नाति न संयच्छति । अत्र कुसुमान्याभरणस्थानीयानि । विटपा बाहुस्थानीयाः । लता त्वङ्गयष्टिस्थानीया । तस्मादासां लतानामुर्वशीरूपसादृश्ये विद्यमानेऽपि तथाविधसौभाग्याभावात् प्रीत्यभाव इत्यभिप्रायः ॥८॥

**अत्रारतेर्गम्यमानत्वाद्विधुतं नाम सन्ध्यङ्गमुक्तं भवति । तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयमित्यत्र प्रयत्नो नाम द्वितीयावस्था सूचिता । बिन्दुप्रयत्नयोः साम्यात् प्रतिमुखसन्धिरित्यनुसन्धेयम् ॥**

**विदूषकः**–(*विहस्य*) भो, अहल्लाकामुअस्स इंदस्स[1] वज्जो [2]सचिवो, [3]उव्वसीपज्जुस्सुअस्स भवदो वि अहं। दुवे वि एत्थ उम्मत्तआ। [भो, अहल्याकामुकस्येन्द्रस्य वज्रः सचिवः, उर्वशीपर्युत्सुकस्य भवतोऽप्यहम्। द्वावप्यत्रोन्मत्तौ।]

**राजा**–[4]न खलु चिन्तयति भवान्।

**विदूषकः**–(*चिन्तयति*) एसो चिंतेमि। मा उण परिदेविदेहिं समाधिं [5]भंजिस्ससि। ([6]*निमित्तं सूचयित्वा आत्मगतम्*) अहो अहं कज्जदंसी। [एष चिन्तयामि। मा पुनः परिदेवितैः समाधिं भङ्क्ष्यसि। अहो, अहं कार्यदर्शी।]

**राजा**–

असुलभा सकलेन्दुमुखी च सा
किमपि चेदमनङ्गविचेष्टितम्।
अभिमुखीष्विव वाञ्छितसिद्धिषु
व्रजति निर्वृतिमेकपदे मनः ॥९॥

([7]*इति मदनोत्सुकस्तिष्ठति*)

प्रकाशिका

विदूषकः–भोः, अहल्याकामुकस्येन्द्रस्य वज्रः सचिवः, उर्वशीपर्युत्सुकस्य भवतोऽप्यहम्। द्वावप्यत्रोन्मत्तौ। विदूषकः–एष चिन्तयामि। मा पुनः परिदेवितैः समाधिं भङ्क्ष्यसि। अहो, अहं कार्यदर्शी। असुलभेति। निर्वृतिः सन्तोषम्। 'तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते' इति हलायुधः (४-६७) ॥९॥

कोणेश्वरी Folio missing

कुमारगिरिराजीया

निमित्तं दक्षिणाक्षिस्पन्दनम्। न सुलभेत्यादिः। स्पष्टोऽर्थः। अत्र अरतिशान्तेः शम इति सन्ध्यङ्गं भवति ॥९॥

१. महिंदस्स–सा. ए. २. om.–सा. ए. ३. उव्वसीपज्जुस्सुअस्स–सा. ए. ४. अतिस्नेहः खलु कार्यदर्शी–सा. ए. ५. भिंधि–सा. ए. ६. सा. ए. takes below with the king. ७. आत्मगतः–सा. ए.

*(ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च)*

**चित्रलेखा**— [1]सहि उव्वसि, कहिं क्खु [2]अणिद्दिट्ठकारणं गच्छीअदि। [सखि उर्वशि, कुत्र खल्वनिर्दिष्टकारणं गम्यते।]

**उर्वशी**—( [3]*मदनवेदनामभिनीय*) सहि[4], हेमऊडसिहरे लदाविडवांदरे लग्गा वेअअंतिआ मोआवेहि त्ति मए भणिदा उपहसिअ मं भणासि दिढं क्खु लग्गा ण सक्का मोआविदुं। दाणिं पुच्छसि कहिं अणिदिट्ठकारणं गच्छीअदि त्ति। [सखि, हेमकूटशिखरे लताविटपान्तरे लग्ना वैजयन्तिका मोचयेति मया भणिता उपहस्य मां भणसि दृढं खलु लग्ना न शक्या मोचयितुम्। इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति।]

**चित्रलेखा**—किं णु तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि। किं नु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि।]

**उर्वशी**—[5]एसो मे अवहत्थिदलज्जो ववसाओ। [एष मेऽपहस्तितलज्जो व्यवसायः।]

---

**प्रकाशिका**

**चित्रलेखा**—सखि उर्वशि, कुत्र खल्वनिर्दिष्टकारणं गम्यते। **उर्वशी**-सखि, हेमकूटशिखरे लताविटपान्तरे लग्ना वैजयन्तिका मोचयेति मया भणिता उपहस्य मां भणसि, दृढं खलु लग्ना न शक्या मोचयितुम्। इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति। **चित्रलेखा**—किं नु तस्य राजर्षेः सकाशं प्रस्थितासि। **उर्वशी**—एष मेऽपहस्तितलज्जो व्यवसायः। अपहस्तिता दूरीकृता।

---

१. हला, कहिं ... ...सा. ए. २. om.—सा. ए. ३. om.—सा. ए. ४. सहि तदा हेमकडसिहरे लदाविडवेण खणविग्घिदाआसगमणं मं ओहसिअ किं दाणिं पुच्छसि—सा.—ए ५. अत्रं—सा. ए.

चित्रलेखा— [1]सहि, तथा वि संपधारीअदु दाव। को उण सहीए तहिं पढमं पेसिदो। [सखि तथापि संप्रधार्यतां तावत्। कः पुनः सख्या तत्र प्रथमं प्रेषितः।]

उर्वशी—णं [2]हिअअं। [ननु हृदयम्।]

[3]चित्रलेखा—को णु तुमं णिओजेदि। [को नु त्वां नियोजयति।]

उर्वशी—मअणो क्खु मं णिओजेदि। [मदनः खलु मां नियोजयति।]

चित्रलेखा—अदो अवरं णत्थि मे [4]वअणं। [अतोऽपरं नास्ति मे वचनम्।]

उर्वशी—तेण आदिसदु मे सही मग्गं, जेण तहिं गच्छंतीए ण अंतराओ भवे। [तेन आदिशतु मे सखी मार्गं येन तत्र गच्छन्त्या न अन्तरायो भवेत्।]

**कुमारगिरिराजीया**

अपहृस्तितलज्जो निरस्तत्रपः॥

**प्रकाशिका**

चित्रलेखा—सखि, तथापि संप्रधार्यतां तावत्। कः पुनः सख्या तत्र प्रथमं प्रेषितः। उर्वशी—ननु हृदयम्। चित्रलेखा—को नु त्वां नियोजयति। उर्वशी-मदनः खलु मां नियोजयति। चित्रलेखा—अतोऽपरं नास्ति मे वचनम्। उर्वशी-तेनादिशतु मे सखी मार्गं येन तत्र गच्छन्त्या नान्तरायो भवेत्॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

उर्वशी—हिअअं हृदयं प्रेषितमिति सम्बन्धः। चित्रलेखा—संप्रधार्यताम् समर्थ्यताम्। निवेद्य गमनं युज्यते वा न वेति निश्चीयतामित्यर्थः॥

---

१ सहि—दाव om.—सा. ए. २. om.-सा. ए. ३. This and the next sentence om.— सा. ए. ४. उत्तरं—सा. ए.

**चित्रलेखा**—सहि, वीसद्धा होहि । णं भअवदा देवगुरुणा अवराइदं णाम सिहाबंधणं विज्जं उवदिसंतेण तिदसपडिवक्खस्स अलंघणीआ कदम्ह । [ननु भगवता देवगुरुणा अपराजितां नाम शिखाबन्धिनीं विद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः ।]

**उर्वशी**—[1]*(सलज्जम्)* ताए पओअं सव्वं सुमरेसि । [सखि, तस्याः प्रयोगं सर्वं स्मरसि ।]

**चित्रलेखा**—[2]सहि, हिअअं एदं सव्वं जानादि । [सखि, हृदयमेतत्सर्वं जानाति ।]

[3]*(उभे भ्रमणं रूपयतः)*

**चित्रलेखा**—सहि, पेक्ख[4] पेक्ख । एदं भअवदीए भाईरहीए जमुणासंगपावणेसु सलिलेसु [5]पुण्णेसु ओलोअंतस्स विअ अत्ताणअं पइट्ठाणस्स सिहाभरणभूदं विअ[6] तस्स राएसिणो भवणं उवगदम्ह । [सखि, प्रेक्षस्व प्रेक्षस्व । एतद् भगवत्या भागीरथ्या यमुनासंगपावनेषु सलिलेषु पुण्येष्ववलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः ।]

---

प्रकाशिका।

**चित्रलेखा**—सखि विश्रब्धा भव । ननु भगवता देवगुरुणापराजितां नाम शिखाबन्धिनीं विद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः । देवगुरुणा गीष्पतिना । **उर्वशी**—तस्याः प्रयोगं सर्वं स्मरसि । **चित्रलेखा**—सखि, हृदयमेतत् सर्वं जानाति । **चित्रलेखा**—सखि, प्रेक्षस्व प्रेक्षस्व । एतद् भगवत्या भागीरथ्या यमुनासङ्गपावनेषु सलिलेषु पुण्येष्ववलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः । प्रतिष्ठानस्य प्रयागपूर्वतीरस्थितझूसीसंज्ञकनगरस्य ॥

---

१. सहि सव्वं सुमरेमि—सा. ए. २. om.—सा. ए. ३. सिद्धमार्गमासाद्य—सा. ए. ४. om.—सा. ए. ५. om.—सा. ए. ६. om.—सा. ए.

**उर्वशी**–( [1]*सस्पृहमालोक्य*) णं वत्तव्वं ठाणंतरगदो सग्गो त्ति । (*विचार्य*) हला, कहिं [2]क्खु सो आवण्णाणुकंपी भवे । [ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । सखि कुत्र खलु स आपन्नानुकम्पी भवेत् ।]

**चित्रलेखा**–एदस्सिं णंदणवणेक्कपदेसे विअ पमदवणे ओदरिअ जाणिस्सामो । [एतस्मिन् नन्दनवनैकप्रदेश इव प्रमदवनेऽवतीर्य ज्ञास्यावः ।]

(*उभे अवतरतः*)

**चित्रलेखा**–(*राजानं दृष्ट्वा, सहर्षम्*) सहि[3] एसो पढमोदिदो विअ [4]भअवं चंदो कोमुदिं विअ अवेक्खदि[5] तुमं । [सखि, एष प्रथमोदित इव भगवांश्चन्द्रः कौमुदीमिवावेक्षते त्वाम् ।]

---

प्रकाशिका

उर्वशी—ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । सखि, कुत्र खलु स आपन्नानुकम्पी भवेत् । चित्रलेखा—एतस्मिन्नन्दनैकप्रदेश इव प्रमदवनेऽवतीर्य ज्ञास्यावः । चित्रलेखा—सखि, एष प्रथमोदित इव भगवांश्चन्द्रः कौमुदीमिवावेक्षते त्वाम् ॥

कोणेश्वरी

Folio missing

कुमारगिरिराजीया

उर्वशी–'सखि क्व नु खलु' । अत्र दृष्टनष्टानुसर्पणात् परिसर्पो नाम सन्ध्यङ्गमुक्तं भवति ।

---

१. विलोक्य–सा. ए. २. णु क्खु–सा. ए. ३. हला–सा. ए. ४. om.–सा. ए. ५. पडिच्छदि–सा. ए.

**उर्वशी**—(*विलोक्य*) हला, दाणिं पढमदंसणादो वि[1] सविसेसं पिअदंसणो मे महाराओ पडिभादि। [हला, इदानीं प्रथमदर्शनादपि सविशेषं प्रियदर्शनो मे महाराजः प्रतिभाति।]

**चित्रलेखा**—जुज्जदि। ता एहि, उवसप्पम्ह। [युज्यते। तदेहि, उपसर्पावः।]

**उर्वशी**–[2]ण दाव उवसप्पिस्सं। तिरक्खरिणीपडिच्छण्णा पास्सवत्तिणी[3] भविअ सुणिस्सं दाव। पास्सवत्तिणा[4] वअस्सेण सह विअणे किं[5] मंतअंतो चिट्ठदि [6]त्ति। [न तावदुपसर्पिष्ये। तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा श्रोष्ये तावत्। पार्श्ववर्तिना वयस्येन सह विजने किं मन्त्रयमाणस्तिष्ठतीति।]

**चित्रलेखा**–जहा दे रोअदि। [यथा ते रोचते।]

(*उभे यथोक्तमनुतिष्ठतः।*)

**विदूषकः**–भो, चिन्तिदो मए [7]दुल्लहप्पणइजणस्स समाअमोवाओ। [भो, चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः।]

---

**प्रकाशिका**

**उर्वशी**—सखि, इदानीं प्रथमदर्शनादपि सविशेषं प्रियदर्शनो मे महाराजः प्रतिभाति। **चित्रलेखा**—युज्यते। तदेहि। उपसर्पावः। **उर्वशी**—न तावदुपसर्पिष्ये। तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा श्रोष्ये तावत् पार्श्ववर्तिना वयस्येन सह विजने किं मन्त्रयन् (मन्त्रयमाणः) तिष्ठतीति। तिरस्करिणी

---

१. om.—सा. ए. २. This sentence om.—सा. ए. ३. पासगदा सै—सा. ए. ४. पासपडिवत्तिणा—सा. ए. ५. पि—सा. ए. ६. om.—सा. ए. ७. दुल्लहप्पणइणीसमाअमोवाओ—सा. ए.

(*राजा तूष्णीमास्ते ।*)

**उर्वशी**–का उण धण्णा[1] इत्थिआ जा[2] इमिणा पडिमुग्गमाणा अत्ताणअं विणोदेदि । [का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणात्मानं विनोदयति । ]

**चित्रलेखा**–[3]झाणस्स किं विलंबीअदि । [ध्यानाय[4] किं विलम्ब्यते । ]

**उर्वशी**–सहि, भीआमि[5] सहसा पहावादो विण्णादुं । [सखि, बिभेमि सहसा प्रभावाद्विज्ञातुम् । ]

**विदूषकः**–भो, णं भणामि चिंतिदो मए [6]दुल्लहपणइअणसमाअमोवाओ । [भो, ननु भणामि चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः । ]

**राजा**–वयस्य, कथ्यताम् ।

**विदूषकः**–सिविणसमाअमआरिणिं णिद्दं सेवदु भवं । अहवा तत्थभोदीए उव्वसीए पडिकिदिं चित्तफलए [7]अहिलिहिअ आलोअंतो [8]अत्ताअणं विणोदेहि । [स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् । अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यालोकयन्नात्मानं विनोदय । ]

---

**प्रकाशिका**

अन्तर्धानविद्या । चित्रलेखा–यथा ते रोचते । विदूषकः–भोः चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः ॥

**कोणेश्वरी**

(समागमो) पायः केतम् (तः) । (?)

**कुमारगिरिराजीया** No commentary

---

१. एसा–सा. ए. २. इमिणा पत्थीयमाणा अत्ताणअं विकत्थेदि–सा. ए. ३. किं उण माणुस्सअं विडंबीअदि–सा. ए. ४. ध्यानस्य–को. ५. भाआमि–सा. ए. ६. समाअमोवाओ सि–सा. ए. ७. आलिहिअ–सा. ए. ८. चिट्ठ–सा. ए.

उर्वशी–(*सहर्षम्*) हीणसत्त हिअअ, समस्सस समस्सस। [हीन-सत्त्व हृदय, समाश्वसिहि समाश्वसिहि।]

### प्रकाशिका

उर्वशी–का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणाऽऽत्मानं विनोदयति। धन्या अत्युत्कटपुण्यातिशयशालिनी, प्रलोभिका वा। 'रामा त्रिवर्गहेतुः स्त्री धन्या योषित् प्रलोभिका' इति त्रिकाण्डशेषः। परिमृग्यमाणा अन्विष्यमाणा। **चित्रलेखा**–ध्यानाय किं विलम्ब्यते। **उर्वशी**–सखि, बिभेमि सहसा प्रभावतो विज्ञातुम्। **विदूषकः**–भोः ननु भणामि चिन्तितो मया दुर्लभप्रार्थितजन-समागमोपायः। **विदूषकः**–स्वप्नसमागमकारिणीं निद्रां सेवतां भवान्। अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यावलोकयन्नात्मानं विनोदय। **उर्वशी**–हीनसत्त्व हृदय, समाश्वसिहि समाश्वसिहि॥

### कोणेश्वरी

का पुनर्धन्या स्त्री यामुना परिमृग्य (मृग्य) मानात्मानं विनोदयति। याममयमेवं चिन्तयति न तत्परं धन्यतमास्तीत्यर्थः। **हलेति**–सखि ध्यानस्य किं विलम्ब्यते। ध्यानं कृत्वा जानीहीत्यर्थः। **सहीति**। बिभेमि खलु प्रभावाद्वि-ज्ञातुम्। यद्यन्यैव काचित् स्यात् तदा प्रत्याशालम्बनमपोह्य न्युदभवीति भावः। **भो इति**। ननु भणामि चिन्तितो मया दुर्लभजनसमागमोपायः। वारंवारं कथयाम्यवधानं किं न क्रियत इत्यर्थः। **सिवीति**। स्वप्नसमागमकारिणीं निद्रां सेवतां भवान् अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रपटकेऽभिलिख्य आलोकयान आत्मानं विनोदय। हीणसत्त निःसत्त्व हृदय, समाश्वसिहि। नाम-मात्रश्रवणमत्र समाश्वासनमित्यर्थः॥

### कुमारगिरिराजीया

यानेन प्रार्थ्यमानात्मानं विकत्थयति बहुमानपात्रं सम्भावयते। किं पुनर्मानुष्यकं मनुष्यभावोऽवलम्ब्यते। 'योपधाद् गुरूपोत्तमाद् वुञ्' (पा. ५-१-१३२) इति वुञ् प्रत्ययः। बिभेमि सहसा प्रभावतो ज्ञातुम्। अत्र भयकारणं राजप्रार्थिताप्या भवेदिति शङ्का॥

राजा– [1]तदुभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तः सशल्यमिदं [2]सदा,
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १०॥

चित्रलेखा– [3]सहि सुदं तुए वअणं। [सखि, श्रुतं त्वया वचनम्।]

उर्वशी–सुदं, ण उण पज्जत्तं हिअअस्स। [श्रुतं, न पुनः पर्याप्तं हृदयस्य।]

विदूषकः–एत्तिओ मे मदिविहओ। [एतवान् [4] मे मतिविभवः।]

---

### प्रकाशिका

राजा–निद्रासेवनचित्रफलकयोरनुपपत्तिमेवाह—**हृदयमिति** । शोभनास्यां प्रियामुर्वशीमालेख्ये चित्रेऽप्यसमाप्य संपूर्णमनालिख्येत्यर्थः । नेत्रयोरुद्गतबाष्पत्वं च न भविष्यतीति न, अपितु भविष्यत्येव । न हि सव्यथान्तःकरणस्य निद्रागमनमश्रुसमावृतनेत्रस्य लिखनं वा क्वचिद् घटत इति भावः ॥ १० ॥ **चित्रलेखा**–सखि, श्रुतं त्वया वचनम् । **उर्वशी**–श्रुतं । न पुनः पर्याप्तं हृदयस्य । **विदूषकः**–एतावान् मम मतिविभवः ॥

### कोणेश्वरी

तद् **हृदयमिति** । निद्राप्रतिकृतिदर्शनमित्यर्थः । कथमनुपपन्नमित्याह–**हृदयमिति** । निद्रामहं कथमुपलभे प्राप्नुयाम् । कुतो नोपलप्स्यस इत्याह–यत इदं हृदयं कामस्येषुभिरन्तः सशल्यं तथा च निद्रारूप उपायस्तावन्न संभवतीत्यर्थः । मनःस्वास्थ्यं हि निद्राहेतुरिति भावः । तथा महाभारते विदुरवाक्यम्—

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चैव प्रविशन्ति प्रजागराः ॥

---

१. तद्. om.–सा. ए. २. यतः–कृ. गि; को. ३. सुदं तुए–सा. ए. ४. एतावत्को–को.

**राजा**–( [1]सनिःश्वासम् )

नितान्तकठिनां रुजं मम न वेद सा[2] मानसीं,
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसं[3] मम विधाय तस्मिञ्जने,
[4]समागममनोरथं भवतु पञ्चबाणः कृती ।। ११ ।।

---

**कोणेश्वरी**

इति । तां प्रियामालेख्येऽपि समवाप्योपलभ्य हे सखे मम नयनयोरुद्वाष्पत्वं न भविष्यतीत्यपि न । बाष्पार्द्रं भविष्यत्येवेत्यर्थः । यद्वा उन्मनस्कतया विशिष्यार्थोऽवगन्तुं न पारित इत्यर्थः । यद्वा श्रवणोपक्रम एव मम जडता जातेति विशिष्यार्थविगतिर्नाभूदित्यभिप्रायः । अत एव वक्ष्यति-असमर्थोऽस्मीत्यादि ।।१०।। **विदू०** **इति** । एतावत्को मे मतिविभवः । अतः परं चिन्तयितुमपि न शक्नोमीत्यर्थः ।।

**कुमारगिरिराजीया**

**हृदयमित्यादि** । यतो यस्मादिदं हृदयं मनः कामस्येषुभिर्बाणैरन्तः अन्तरे सशल्यं शल्यसहितम् । अतः स्वप्ने समागमकारिणीं निद्रां कथमुपलभे प्राप्नोमि । कथमित्याक्षेपे । नोपलभे इत्यर्थः । किं चालेख्येऽपि चित्रेऽपि सुवदनां तां प्रियामुर्वशीमसमाप्य स्थितवतो मम नयनयोरुद्वाष्पत्वमुदश्रुत्वं न भविष्यतीति न । भविष्यत्येवेत्यर्थः । तस्मादुभयमप्यनुपपन्नमिति सम्बन्धः ।।१०।।

**प्रकाशिका**

**नितान्तेति** । सा नितान्तमतिशयेन कठिनां दुःसहां मानसीं रुजं पीडां न वेद न जानाति । अन्यथावश्यं मां संभावयेदिति भावः । वेति पक्षान्तरे । प्रभावेण निजदैवशक्त्या ज्ञातानुरागमपि मामवमन्यतेऽवगणयति । कथं वा अमर्त्या मया मानुषे मनो निवेशनीयमित्याशयेनेति भावः । पञ्चबाणो मदनो मम मनोरथमभिलाषं तस्मिञ्जनेऽलब्धमप्राप्तं यत् फलं तेन नीरसं निःसारं विधाय कृती कुशलो भवतु । 'अबद्धफलनीरसम्' इत्यपि पाठः । न बद्धं संपादितं फलं येन स चासौ नीरसश्च । फलाभावे तु मरणमेव वैरस्ये निदानम् । तेन च तस्य बाणपञ्चकाङ्गीकारः सफलः स्यादिति फलव्यक्तिः ।। ११ ।।

---

१. निःश्वस्य–को. २. यो–कु. गि. ३. अलब्धफलनीरसान्–सा. ए.; कु गि. अबद्धफलनीरसम्–को. ४. समागममनोरथान्–सा. ए.

**चित्रलेखा**–सुदं तुए । [श्रुतं त्वया ।]

**उर्वशी**–हद्धी हद्धी । मं [१]वि एव्वं अवगच्छदि । सहि[२] असमत्थम्हि अग्गदो भविअ अत्ताणअं[३] दंसिदुं । ता पहावणिभ्मिदेण भुज्जवत्तेण लेहं[४] संपादिअ अंतरा खिविदुं इच्छामि । [हा धिक् हा धिक् । मामप्येवमवगच्छति । सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत् प्रभावनिर्मितेन भूर्जपत्रेण लेखं सम्पाद्यान्तरा क्षेप्तुमिच्छामि ।]

**चित्रलेखा**–अणुमदं मे । [अनुमतं मे ।]

(*उर्वशी नाट्येनाभिलिख्य क्षिपति* ।)

**विदूषकः**–[५]अविद अविद भो । किं णु एदं । भुअंगनिम्मोओ किं मं खादिदुं णिवदिदो । [अविदाविद भोः । किन्वेतत् । भुजङ्गनिर्मोकः किं मां खादितुं निपतितः । ]

**राजा**–[६] (*दृष्ट्वा*) नायं भुजङ्गनिर्मोकः । भूर्जपत्रगतोऽयमक्षरविन्यासः ।

---

**कोणेश्वरी**

निःश्वस्येति । प्रकृतादधिकमिति शेषः । सुस्थस्यापुण्यस्योपायस्यास्फुरणादुपायाभावनिर्धारणं तथा निःश्वासे हेतुरिति । अत एवाशंसामात्रशरणः साशंसमाह–नितान्तेति । अत्यन्तखेदजनिकां मानसीं पीडां मम न या वेद जानाति । मामवमन्यते च विजानात्यपि । एतादृशं त्वामजानामायाः कथमवशा शक्यतेऽत्र

---

१. om.–सा. ए. २. हला–सा. ए. ३. से पडिक्कमणस्स–सा. ए. ४. संपादिदुत्तरा होदुं इच्छामि–सा. ए. ५. (दृष्ट्वा) अविहा अविहा । भो किं णु क्खु एदं भुअंगणिम्मोअअं विअ संमुहे णो णिवडिदं–सा. ए. ६. (विलोक्य) । नायं–निर्मोकः om.–सा. ए.

### कोणेश्वरी

आह–प्रभावेणानुभावेण विदितोऽनुरागो यस्यैवमित्यर्थः। तस्मिंस्तादृशे जने समागममनोरथं प्रतिविधाय पञ्चबाणः कृती कृतिमान् भवतु। अबद्धफलत्वान्नीरसम्। फले रस उपलभ्यत इति भावः। प्रतिविधानं च तस्य फलसंपादनमेव। तथा च बाणैस्तामपि मामिव प्रतिभिद्य संगमयत्विति भावः। अत एव पञ्चबाणत्वेनोपन्यासः ॥११॥

### कुमारगिरिराजीया

**नितान्तकठिनामित्यादि।** यो जनो नितान्तकठिनां मानसीं पीडां न वेद न जानाति। अथवा प्रभावविदितानुरागं प्रभावेण स्वकीयेन महिम्ना आत्मनो विदितोऽनुरागो यस्य स तथोक्तस्तं मामप्यवमन्यते वाऽपि नाद्रियते। अपिशब्दः शङ्कायाम्। तस्मिञ्जने उर्वश्यां ममालब्धफलनीरसान् अलब्धानि फलानि यैस्ते तथोक्तास्ते च नीरसाश्च तान् समागममनोरथान् विधाय पञ्चबाणः कृती कृतार्थो भवतु ॥११॥

अत्र प्रथमार्धे यथोत्तरवचनकरणात् प्रगमनं नाम सन्ध्यङ्गमुक्तं भवति ॥

### प्रकाशिका

**चित्रलेखा**–श्रुतं त्वया। **उर्वशी**–हा धिक् हा धिक्। मामप्येवमवगच्छति। सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम्। तत् प्रभावनिर्मितेन भूर्जपत्रेण लेखं सम्पाद्यान्तरा क्षेप्तुमिच्छामि। **चित्रलेखा**–अनुमतं मे। **विदूषकः**–अविदाविद इत्यदृष्टाश्रुतप्राप्तौ। किन्वेतत्। भुजङ्गनिर्मोकः किं मां खादितुं निपतितः। 'समौ कञ्चुकनिर्मोकौ' इति **त्रिकाण्डी** ॥

### कोणेश्वरी

**एवमिति**–एवमवगच्छति मयाऽस्यावज्ञा क्रियते इत्यसौ जानातीत्यर्थः। **हलेति।** हला, असमर्थाऽस्म्यग्रतो भूत्वात्मानं दर्शयितुम्। तस्मात् प्रभावनिर्मितेन भूर्जपत्रेण लेखं सम्पाद्यान्तराऽस्य क्षेप्तुमिच्छामि। यावदहमग्रतो भूत्वा स्वं दर्शयामि तन्मध्ये लेखं क्षिपामीत्यर्थः। **चित्रलेखा**–अनुमतं मे। क्रियतां तथेत्यर्थः। **नाट्येनेति।** लेखसंपादनतत्प्रक्षेपणे नाटयतीत्यर्थः। **अविदेति।** आश्चर्यमाश्चर्यमित्यर्थः। ससंभ्रमं सभयमित्यर्थः।

संभ्रमं त्रयमिच्छन्ति भयमुद्वेगमादरम्।

इति। **भो इति।** भोः किमयं भुजङ्गनिर्मोको मां खादितुं निपतितः। किं णेदं इत्यत्र 'अन्त्याद्धिदेति मो ण' इति कमो मकारात्परो णकारागमः ॥

**विदूषकः**–णं क्खु अदिट्ठाए उव्वसीए भवदो परिदेविदं सुणिअ[1] भुज्जवत्ते अणुराअसूअआ अक्खरा अहिलिहिअ विसज्जिदाइं भवे। [ननु खल्वदृष्टयोर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः।]

**राजा**–नास्त्यगतिर्मनोरथानाम्। (*गृहीत्वानुवाच्य च सहर्षम्*) सखे, प्रसन्नस्ते तर्कः।

---

**कुमारगिरिराजीया**

एवमवगच्छतीत्यनेन प्रभावेणानुरागं विदित्वाऽपि मामवमन्यमानां जानातीत्ययमर्थः प्रतिपाद्यते। अविधेत्याक्रोशे ॥

**प्रकाशिका**

**विदूषकः**–ननु खल्वदृष्टयोर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः। अत्र 'अक्खरा' इति पुंस्त्वम्, 'भवे' इत्यत्र बहुवचने एकवचनं च 'प्राकृते लिङ्गवचनमतन्त्रम्' इति प्राकृतकृतसमयतो बोद्धव्यम्। यद्वा विसर्जिता भवेत् पत्रिका इति शेषः। नन्विति सम्बोधने। खल्विति वितर्के निश्चये वा। 'सुणिअ' इत्यत्र 'मुणिअ' इत्यपि पाठः। मुणिअ ज्ञात्वेत्यर्थः। अगतिरविषयः ॥

**कोणेश्वरी**

**विदूषक** इति। न खल्वदृश्ययोर्वश्या भवत्परिदेवितं श्रुत्वा भूर्जपत्रे महानुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः। नास्तीति। एवमपि मनोरथः क्रियत एव यत इति भावः। उपपन्न इति। यदेव त्वया तर्कितं तदेव सम्पन्नमित्यर्थः ॥

**कुमारगिरिराजीया**

No commentary

---

१. समाणाणुराअसूअआइं अक्खराइं विसज्जिदाइं होंति।—सा. ए. भुज्जवत्ते महाणुराअ—को.

**विदूषकः**–जं एत्थ अहिलिहिदं तं सुणिदुं इच्छामि । [यदत्राभिलिखितं तं श्रोतुमिच्छामि ।]

**उर्वशी**–साहु साहु । अज्ज, णाअरोसि । [साधु साधु, आर्य नागरोऽसि ।]

**राजा**–श्रूयताम् । (*वाचयति*)

सामिअ संभाविअआ जह अहं तुए अमुणिआ
तह अ अणुरत्तस्स[1] सुहअ एअमेअ तुह ।
[2]णवरि अ मे ललिअपारिआअसअणिज्जम्मि
[3]होंति सुहा णंदणवणवाआ वि सिहिव्व सरीरे ॥ १२ ॥
[स्वामिन् संभाविता यथाहं त्वयाज्ञात्री
तथाचानुरक्तस्य सुभग एवमेव तव ।
अनन्तरं च मे ललितपारिजातशयनीये
भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ १२ ॥]

---

प्रकाशिका

**विदूषकः**–यदत्राभिलिखितं तच्छ्रोतुमिच्छामि । **उर्वशी**-साधु साधु । आर्य, नागरोसि । **सामिअ इति** । स्वामिन् संभाविता यथाहं त्वयाज्ञात्री तथा चानुरक्तस्य सुभग एवमेव तव । अनन्तरं च मे ललितपारिजातशयनीये भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ स्वामिन्, यथाहं त्वया नितान्तकठिनामित्यादिनाज्ञात्री निजपीडामजानाना संभाविता, तथा च हे सुभग, अनुरक्तस्य तवैव मे यथा त्वया संभावितं तथैव त्वदनुरागाज्ञानवत्येवास्मि । अन्यथा तदैव मयागतं स्यादित्यर्थः । 'तथैव' इति पाठे 'तथैव' एवमेव इत्येकार्थकमपि पदद्वयमादरातिशयद्योतनार्थम् । तथा च यत्त्वया संभावितं तत्तथैवेत्यर्थः ।

---

१. जइ णाम तुज्झ उवरि होमि–सा. ए. २. किं मे...ज्जअंमि सुहा–सा. ए. ३. णंदणवणवादा अवि अच्चुण्हा सरीरए–सा. ए.

## प्रकाशिका

अनन्तरं च तवैतादृगवस्थाज्ञानोत्तरं तु मे ललितं शीतलतादिनातिरमणीयं पारिजातस्येमानि कुसुमपल्लवानि तदीयं यच्छनीयं तस्मिन् सुखाः सुखरूपा अपि नन्दनवनवाताः शरीरे शिखीव अग्निसमा भवन्ति। णवरिणवरी केवलानन्तर्ययोर्निपातितौ ॥१२॥

## कोणेश्वरी

**विदूषकः**—यदत्राभिलिखितं तच्छ्रोतुमिच्छामि। अज्जेति। आर्य, नागरोऽसि। सा दिव्याङ्गना एतादृशं भाविनं प्रियं प्रति किं लिखतीति श्रवणे रागवत्त्वेन नागरत्वम्। यद्वा तादृक्प्रियाप्रेषितलिखनवाचने का कावस्थास्य भवतीति दर्शकत्वेनास्य नागरतामाह। अत एवाग्रे तस्यावस्थामेव वक्ष्यति। किं णु भणिदमित्यादिना।

**सामिअ** इति। स्वामिन् संभाविता यथाहं त्वयाकर्णिता तथैवाननुरक्तस्य सुभग एवमेव तव। केवलं न मे ललितपारिजातशयनीये भवन्ति सुखा नन्दनवनवाता अपि तु शिखिन इव निजशरीरे ॥ हे स्वामिन्, यथा संभाविता त्वयाहमाकलिता तथैवाननुरक्तत्वेन संभावितस्य तवाप्येवमेवाकलयामि। त्वमपि मदीयां रुजं न जानासि ज्ञात्वाप्यवमन्यस एव वा मामित्यर्थः। आवयोरयं पुनर्विशेषोऽस्ति यथा ललितपारिजातविरचितशयनेऽपि नन्दनवनसम्बन्धिनो वाताः शिखिन इव दुःखदा भवन्तीति। एतावता त्वमतिदुःखं लभसे, अहं वा लभे इति स्वयमेव विनिगमनां विधेहीति भावः ॥१२॥

## कुमारगिरिराजीया

स्वामिन् नाथ यथाहं त्वया अज्ञाता इयं कीदृगवस्थेत्यपरामृष्टा असंभाविता असंमानिता च। अहं चानुरक्तस्य तवोपरि तथा तादृशी यदि नामाज्ञात्री असंभावयित्री चेन्नामेत्यर्थः। लुलितपारिजातशयनीयके लुलितं तापलुण्ठनाद् व्याकीर्णं पारिजातानां पारिजातकुसुमानां शयनीयं यस्य तत् तथोक्तं तस्मिन् मम शरीरे नन्दनवनवाता अपि अत्युष्णा भवन्ति किम्? न भवन्तीत्यर्थः। अतादृशत्वान् मम अत्युष्णा भवन्तीति भावः। अत्र स्वानुरागप्रकाशकस्य वाक्यस्योपपत्तिमत्त्वाद् उपन्यास इति सन्ध्यङ्गमुक्तं भवति ॥ १२ ॥

**उर्वशी**–किं णु संपदं भणिस्सदि। [किं नु सांप्रतं भणिष्यति।]

**चित्रलेखा**–किं [1]णु। भणिदं[2] एव्व एदेण मिलाणकमलणालोवमेहिं अंगेहिं। [किं नु। भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः।]

**विदूषकः**–दिट्ठिआ मए क्खु बुभुक्खिदेण[3] सोत्थिवाअणिअं विअ लद्धं भवदो [4]समस्सासणकारणं। [दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम्।]

---

**प्रकाशिका**

उर्वशी–किं नु साम्प्रतं भणिष्यति। **चित्रलेखा**–किं नु। भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः। **विदूषकः**–दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम्॥

**कोणेश्वरी**

**उर्वशी–किं इति**। किं न सांप्रतं भणति। लिखनं पठित्वा राजा किमपि न कथयति किं निमित्तमत्रेत्यर्थः। **चित्रलेखा**–किं न भणितममुना आम्लानकमलनलिनायमानैरङ्गैः। त्वद्विरहादेतादृगवस्थायास्तव जीवनसंशयाच्चास्याङ्गानि म्लायन्ति शुष्यन्ति इवेति किं न पश्यसीति भावः। **विदूषकः–दिट्ठिआ इति**। दिष्ट्या मयाप्यखण्डितस्वस्तिवाचनकं लब्धं भवतः समाश्वासकारणम्। न खण्डितं स्वस्तिवाचनकं कल्याणवचनं यत्र तत्तथा। स्वार्थे काणौ। यद्वा न खण्डितं स्वस्तिवाचनकं यत्र। वा एनम् इति लोकप्रसिद्धमित्यर्थः। समाश्वासनमिति संश्लेष इवोच्यतामिति भावः॥

**कुमारगिरिराजीया**

कमलनालायमानैः कमलनालवदाचरद्भिः। कण्टकितैरित्यर्थः। अनेन रोमाञ्चेन राज्ञो हृष्टत्वमुक्तं भवति। समाश्वासनं समाश्वासनकारणं पत्रमित्यर्थः॥

---

१. om.–सा. ए. २. भणिदं एव्व कमलणालाअमाणेहिं अंगेहिं–सा. ए. ३. अखंडिअ–को. ४. समासासणं–सा. ए.

राजा–समाश्वासनमिति किमुच्यते ।

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
[1]उत्पक्ष्मलं मम सखे मदिरेक्षणायाः
तस्याः समागतमिवाननमाननेन ॥ १३ ॥

---

### प्रकाशिका

तुल्येति । तुल्यानुरागस्य पिशुनं सूचकम् । 'पिशुनौ खलसूचकौ' इति **त्रिकाण्डी** । ललितोऽर्थस्य बन्धो यत्र । ललितार्थबन्धावभिधेयरचनाविशेषौ यत्रेति वा । 'ललितोपबन्धम्' इति पाठे ललित उपबन्धो रचनाविशेषो यत्रेत्यर्थः । उदाहरणमुक्तिः । पत्रे तदुक्तिमात्रनिवेशनमात्रेणैव ममाननं तस्याननेन समागतं मिलितमिवेत्युत्प्रेक्षा ॥ १३ ॥

### कोणेश्वरी

तथैव प्रतिपादयन्नाह–तुल्येति । हे सखे पत्रे निवेशितं प्रियायास्तदुदाहरणं वचनं ममाननेन संगतं संबद्धं तस्या आननमिव । तुल्यः समानो य आवयोरनुरागस्तत्पिशुनं तद्बोधकम् । मुखपक्षे तद्बोधकशब्दोच्चारणम् । ललितो मनोज्ञो बन्धो घटना अक्षरविन्यासो यत्र तत्तथा । पक्षे ललितो विलसितोऽनुबन्धः प्रेमा यस्मिन् विषय इत्यर्थः । उत्कृष्टानि पक्ष्मल इत्येवंरूपाण्यक्षराणि यत्र । यद्वा उत्पक्ष्मडात्थे तदनलो न (?) इति वर्णौ यत्र । पक्षे उत्कृष्टाक्षिपक्ष्मयुक्तमित्यर्थः ॥ १३ ॥

### कुमारगिरिराजीया

तुल्यानुरागेति । तुल्यानुरागपिशुनं प्रेमसूचकं लसितार्थबन्धं ललितो मधुरोऽर्थस्य वस्तुनो बन्धः संसर्गो यस्य तत् तथोक्तं पत्रे निवेशितं विन्यस्तं प्रियाया उदाहरणं वाचिकं, हे सखे, उत्पक्ष्मणो ममाननेन समागतं तस्या मदिरेक्षणाया आननमिव भवति ॥ १३ ॥

अत्र विशेषप्रतिपादनात् पुष्पं नाम सन्ध्यङ्गमुक्तं भवति ॥

---

1. उत्पक्ष्मणो मम सखे मदिरेक्षणायाः–सा. ए.

**उर्वशी**—एत्थ णो समभाआ मदी । [अत्र नौ समभागा मतिः । ]

**राजा**—वयस्य, अङ्गुलीस्वेदेन [1]मे लुप्यन्तेऽक्षराणि । धार्यतामयं [2]स्वहस्ते निक्षेपः प्रियायाः ।

**विदूषकः**—(*गृहीत्वा*) [3]तदो किं तत्थभोदी उव्वसी भवदो [4]मणोरहतरुकुसुमं दंसिअ फले विसंवदिस्सदि[5] । [ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति । ]

**उर्वशी**—हला, जाव [6]उवत्थाणकादरं अत्ताणअं समवत्थावेमि, ताव तुमं अत्ताणअं दंसिअ जं मे [7]अणुमदं तं भणाहि । [सखि, यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत् त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद् भण । ]

**चित्रलेखा**—तह । (*इति तिरस्करिणीमपनीय [8]राजानमुपसृत्य*) जेदु जेदु महाराओ । [तथा । जयतु जयतु महाराजः ।]

---

**प्रकाशिका**

**उर्वशी**—अत्रावयोः समभागा मतिः । **विदूषकः**—ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति । **उर्वशी**—यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत् त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद् भण । **चित्रलेखा**—तथा । जयतु जयतु महाराजः ॥

**कोणेश्वरी**

**उर्वशी**—एत्थ इति । अत्र नौ समविभागा मतिः । ममापि तद्वदाहृतं वाक्यमेतादृशे वेत्यर्थः । **विदूषकः**—तदो इति । ततः किमिदानीं तत्रभवत्युर्वशी मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदति । पुष्पानन्तरमन्यत्र तरौ फलं जायते । अयं पुनर्मनोरथतरुः पुष्पितोऽपि किं न फलति । उर्वशीसमागमरूपं फलमत्र किं न

---

१. लुप्यन्तेऽक्षराणि—सा. ए. २. प्रियायाः स्वहस्तलेखः—सा. ए. ३. किं दाणिं । —सा. ए. ४. मणोरहाणं—सा. ए. ५. विसंवददि—सा. ए. ६. अहिगमणकादरं हिअअं पज्जवत्थावेमि—सा. ए. ७. खमं—सा. ए. ८. उपेत्य—सा. ए; अवलोक्य—को.

**राजा**-(*ससंभ्रमादरगर्भम्*) स्वागतं भवत्यै । ([1]*पार्श्वमवलोक्य*) भद्रे,

न तथा नन्दयसि मां सख्या विरहिता तया ।
सङ्गमे दृष्टपूर्वेव यमुना गङ्गया यथा[2] ॥१४॥

**चित्रलेखा**-णं पढमं मेहराई दीसदि । पच्छा [3]विज्जुल्लदा ।

[ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युल्लता ।]

**विदूषकः**-(*अपवार्य*) कहं ण एसा उव्वसी [4]उवगदा । [5]तत्थ-भोदीए उव्वसीए सहअरीए एदाए होदव्वं ।

[कथं नैषोर्वशी उपगता । तत्रभवत्या उर्वश्या सहचर्यैतया भवितव्यम् ।]

---

**कोणेश्वरी**

दृश्यत इति भावः । **हलेति** । हला यावदुत्थानकातरमात्मानं समर्थयामि तावत् त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद् भण । समस्तादिना (?) गमनप्रत्यूहेन कालातिपातो भवन्नास्ति (भवेत् ?) यदि राज्ञः कातरतरैव काचिदवस्था स्यात् तदा महदनिष्टमापद्येत इति । त्वं मनाक् प्रत्याशाकुसुममस्य (भव) इति भावः ॥

**प्रकाशिका**

**न तथेति** । नन्दयसि सन्तोषयसि । पूर्वं दृष्टा दृष्टपूर्वा ॥ १४ ॥ **चित्रलेखा**-ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद् विद्युल्लता । **विदूषकः**-अपवार्य । परावृत्यान्यं प्रति रहस्यकथनमपवारितम् । लक्षणं त्वाह **विश्वनाथकविराजः**- 'तद्भवेदपवारितं रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।' इति । **विदूषकः**- कथं नैषोर्वशी उपगता । तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम् ॥

**कोणेश्वरी**

**अवलोक्येति** । उर्वशीमदृष्ट्वेति शेषः । **न तथेति** । सख्या संगमे दृष्टपूर्वा पूर्वं दृष्टा त्वं यथा मामनन्दयः न तथा संप्रति नन्दयसि तया विरहिता यतः । अनुरूपं दृष्टान्तमाह-**यमुनेति** । सङ्गता पूर्वदृष्टा ततः केवला दृश्यमाना या पूर्वमिव न नन्दयतीत्यर्थः ॥१४॥

**चित्रलेखा**-ननु प्रथमं मेघराजिर्दृश्यते पश्चाद् विद्युत् । यथा मेघराजिं विना विद्युन्न तिष्ठति तथा सापि मां विना न तत्र स्थास्यतीत्याशयः । **अपवार्येति** ।

---

१. om.-सा. ए. २. विना-सा. ए. ३. विज्जुल्लदा-सा. ए. ४. om.-सा. ए. ५. तत्थभोदीए अहिमदा सहअरी ।-सा. ए.

**राजा**–[1]एतदासनमास्यताम् ।

**चित्रलेखा**–[2]उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि ।
[उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति ।]

**राजा**–किमाज्ञापयति ।

**चित्रलेखा**–[3]मह तस्सिं सुरारिसंभवे दुण्णए महाराओ एव्व सरणं आसी । [4]संपदं सा अहं तुह दंसणसमुत्थेण [5]आआसिणा बलिअं बाहीअमाणा मअणेण [6]पुणो वि महाराअस्स अणुकंपणीआ होमि । [मम तस्मिन् सुरारिसंभवे दुर्नये महाराज एव शरणमासीत् । सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद् बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि ।]

---

**कोणेश्वरी**

अन्यतः संगोप्येत्यर्थः । **विदूषकः**–कहं इति । कथं नैषोर्वश्युपगता । ममोर्वशीभ्रमोऽत्रजात इत्यर्थः । तर्कयति । तत्थेति । तत्रभवत्याः सहचर्या एतया भवितव्यम् । अन्यथा कथमिव पश्चाद् विद्युदितीयमाहेति भावः ॥

**कुमारगिरिराजीया**

न तथेत्यादि । स्पष्टोऽर्थः ॥

**प्रकाशिका**

**चित्रलेखा**–उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति । **चित्रलेखा**–मम तस्मिन् सुरारिसम्भवे दुर्नये महाराज एव शरणमासीत् । सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद् बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि ॥

---

१. om–सा. ए. २. उपविश्य–को. ३. मह्ह सुरारिसंभवे दुज्जाते–सा. ए. ४. om –सा. ए. ५. om–सा. ए. ६. भूओ वि महाराएण अणुकंपणीय त्ति–सा. ए.

**राजा**– [1]अयि सखि,

पर्युत्सुकां कथयसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसस्तदर्थाम् ।
साधारणोऽयमुभयोः प्रणयो यतस्व[2]
तां कौमुदीमिव समागमयेन्दुबिम्बे ॥ १५ ॥

---

**कोणेश्वरी**

**उपविश्येति**–कथयतीति शेषः । **उर्वशीति** । उर्वशी महाराजं शिरसा प्रणिपत्य विज्ञापयति । सभयगौरवमाह—यामिच्छामननुपालयन्नेषितुर्विभेति सा आज्ञा । अतस्तस्या ईप्सितमहमवश्यंकारीति भावः । **ममेति** । मम तस्मिन् सुरारिसम्भवे दुर्जाते महाराज एव शरणमासीत् । सांप्रतं साऽहं तव दर्शनसमुत्थेन आगामिना बलिकं बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि । सुरारेः सम्भव उद्भवो यस्य एवंभूते दुर्जाते दुःखे तदानीमेव तावत्तथाभूदिदानीं पुनस्त्वद्दर्शनात् सभुद्भवो यस्य तेन मदनेन बाध्यमानाया भवान् शरणं भवतीत्युचितमेवेति हृदयम् । आगामिना आगन्तुनेत्यर्थः ॥

**कुमारगिरिराजीया**

No commentary

**प्रकाशिका**

**पर्युत्सुकामिति** । आर्तिं पीडाम् । अयमुभयोरावयोः प्रणयः स्नेहः साधारणः । यथा मम तस्याम्, तथा तस्या अपि मयीत्यर्थः । अतो यतस्व प्रयत्नं कुरुष्व । कौमुदीं ज्योत्स्नामिन्दुबिम्ब इव ताम् । मयीत्यर्थात् । समागमय । 'प्रणयः स्मरस्य तप्तेन तप्तमयसा घटनाय योग्यम्' इति पाठे स्मरस्य प्रणयः सोत्कण्ठभाषितेन पीडाप्रदानरूपः । अत इत्यर्थात् । तप्तेनायसा घटनाय तप्तमेव योग्यमिति लोकोक्तिः । अतो झटिति मिलनप्रयत्नो विधेय इति भावः ॥ १५ ॥

**कोणेश्वरी**

**पर्युत्सुकामिति** । तां प्रियदर्शनां पर्युत्सुकां कथयसि । अपि तु मामपि पश्येति हृदयम् । तथा चायं प्रणय आवयोः साधारणः समान इत्यर्थः । ततः

---

१. भद्रमुखि–सा. ए. २. स्मरस्य, तप्तेन तप्तमयसा घटनाय योग्यम्–सा. ए. तप्तेन तप्तमिव संघटनाय योक्तुः–कु. गि.

**चित्रलेखा**-(*उर्वशीमुपेत्य*) हला, इदो[1] एहि । [2]णिहुअदरं भीसणं मअणं पेक्खिअ पिअदमस्स दे दूदिम्हि संवुत्ता । [सखि, इत एहि । निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता ।]

---

### कोणेश्वरी

किमिदानीं क्रियतामत आह-यतस्व । कुत्र यत्नं करोमीत्यत आह । तामिति । तामिन्दुबिम्बे समागमय । इन्दुबिम्ब इवेत्यर्थः । कौमुदीमिव । यथेन्दुबिम्बे कौमुदी सम्बध्यते तथा मयि तां संबद्धां विधेहीत्यर्थः ॥ १५ ॥

### कुमारगिरिराजीया

**पर्युत्सुकामित्यादि** । प्रियदर्शनां तामुर्वशीं पर्युत्सुकामुत्कण्ठितां कथयसि । तदर्थं तत्कृते । 'अर्थे कृते च तादर्थ्ये' इत्युक्तत्वात् । आर्तं संतप्तं पुरूरवसं न पश्यसि न जानासि । उभयोरावयोः साधारणः समानोऽयं प्रणयः प्रेम स्मरस्य मन्मथस्य संघटनाय द्वयोः संयोजनाय भवति । अत्रोपमामाह । योक्तुर्योजकस्य कर्तुः । तप्तेन लोहेन तप्तं लोहमिव । अत्र तप्तशब्दावौचित्या-ल्लोहपरौ मन्तव्यौ ॥ १५ ॥

### प्रकाशिका

**चित्रलेखा**-सखि इत एहि । निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता । 'युष्मत्तोऽपि निर्दयतरं मदनं प्रेक्ष्य वयस्यस्य ते दूती संवृत्ता' इति क्वचित् पाठः ॥

### कोणेश्वरी

**चित्रलेखा-हलेति** । हला, इत एहि । अनेन पथा आगच्छेत्यर्थः । कुत्र मां नयसीत्यत आह-**णिहुएति** । निभृततरं भीषणं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता । तदीयां सुगुप्तां भीषणदशां भविष्यन्तीमनुमायेत्यर्थः । अत्र च निभृतं वस्त्रादिपिहितं भीषणं त्रासजनकं किंचित् तदीयं प्रेक्ष्येत्युपमा ॥

**कुमारगिरिराजीया** No commentary

---

१. om.-सा. ए. २. तुवत्तो वि णिहुअदरं मअणं-सा. ए.

**उर्वशी** —(*तिरस्करिणीमपनीय*) [1]अयि अणवत्थिदे, लहु एव्व तुए परिच्चत्तम्हि ।[अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि ।]

**चित्रलेखा**–(*सस्मितम्*) [2]एदस्सिं मुहुत्ते जाणिस्सामो को कं तजिस्सदि त्ति। आआरं दाव पडिवज्ज । [एतस्मिन् मुहूर्ते ज्ञास्यामः कः कं त्यक्ष्यतीति । आचारं तावत् प्रतिपद्यस्व ।]

**उर्वशी**-([3]*ससाध्वसमुपसृत्य, सव्रीडम्* ।) जेदु जेदु महाराओ । [जयतु जयतु महाराजः ।]

---

**प्रकाशिका**

**उर्वशी**–अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि । **चित्रलेखा**–एतस्मिन् मुहूर्ते ज्ञास्यामः कः कं त्यक्ष्यतीति । आचारं तावत् प्रतिपद्यस्व । **उर्वशी**–ससाध्वसं सभयम् । राज्ञस्तेजोऽतिशयादित्यर्थः । सव्रीडं सलज्जम् । जयतु जयतु महाराजः ॥

**कोणेश्वरी**

**सोत्कम्पेति** । सहोत्कम्पसाध्वसाभ्यां वर्तते सा तथा । तदीयतादृग्दशा वृत्तकम्पा । ततोऽग्रे किं स्यादित्युत्कम्पसाध्वसौ । अथ च भावात्तौ जातावस्या इत्यर्थः । **अयीति**। अयि अनवस्थिते लघ्वेव त्वया परित्यक्तास्मि । मम सखी त्वमासीरिदानीमतिशीघ्रं मां परित्यज्य तस्य वृत्तासि । अत एव त्वमनवस्थिता चञ्चलेत्यर्थः। **एदस्सिं इति** । एतस्मिन् मुहूर्ते ज्ञास्यामः कां का परित्यजतीति । आचारं तावत् प्रतिपद्यस्व । त्वं तावदाचारं परिगृहाण तदनन्तरं तत्र गते सति त्वं मां त्यक्ष्यसि अहं वा त्वां त्यक्ष्यामि तद् विदितमेव भविष्यतीत्यर्थः ॥

**कुमारगिरिराजीया**

No commentary

---

१. अम्महे, लहुअं तुए उज्झिदम्हि ।–सा. ए. २. अदो मुहुत्तादो जाणिस्सं का कं परिच्चइस्सदि त्ति ।–सा. ए. ३. om –सा. ए.

**राजा**–(*सहर्षम्*) सुन्दरि,

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादगतः पुरुषान्तरम् ॥१६॥

(*हस्ते गृहीत्वा आसन*[1] *उपवेशयति*)

**विदूषकः**– [2]कीदिसी त्थिदी भोदीए रज्जे । [3]पिअवअस्सो बम्हणो किं ण वंदीअदि । [कीदृशी स्थितिर्भवदीये राज्ये । प्रियवयस्यो ब्राह्मणः किं न वन्द्यते ।]

(*उर्वशी सस्मितं प्रणमति* ।)

**विदूषकः**– सोत्थि भोदीए । [स्वस्ति भवत्यै ।]

---

**प्रकाशिका**

**मया नामेति** । जितं सर्वोत्कर्षशालिना जातम् । जयशब्द उत्कर्षसूचकः शब्दः । सहस्राक्षादिन्द्रात् । पूर्वं त्वदुक्तोऽयं शब्दस्तस्मिन्नेवासीत् । इदानीं मल्लक्षणे पुरुषान्तरेऽपि जात इत्यर्थः । अत्र च 'उर्वशी–जयतु' इत्यारभ्य 'आगतः पुरुषान्तरम्' इत्यन्तमुत्तरोत्तरं वाक्ययोजनं प्रगमनाख्यं प्रतिमुख-सन्ध्यङ्गमिदम् । 'प्रगमनं वाक्यं स्यादुत्तरोत्तरम्' इति **विश्वनाथकविराजोक्त-**तल्लक्षणात् ॥१६॥ **विदूषकः**– कीदृशी स्थितिर्भवदीये राज्ये । प्रियवयस्यो ब्राह्मणो न वन्द्यते । **विदूषकः**–स्वस्ति भवत्यै । 'नमःस्वस्ति' इत्यादिना चतुर्थी ॥

**कोणेश्वरी**

**मयेति** । नाम संभावनायाम् । मया जितम् । कथं जितमत आह–**यस्येति** । यस्यायं जयशब्दस्त्वया समुदीर्यते सहस्राक्षात् पुरुषान्तरमागतः प्राप्तः । त्वद्गदितो जयशब्दः सहस्रनेत्रं परमन्वेति । इदानीं मद्भाग्यपरिणतिवशाच्च ममाप्यन्वेति । ततो मम जयः सर्वत्र सम्भावित इत्यर्थः ॥१६॥

**कीदिसीति** । कीदृशी स्थितिस्तत्रभवत्याः । राज्ञः प्रियवयस्यो ब्राह्मणो न वन्द्यते । चेतनानामियममर्यादा भवितुमर्हतीति यद्राजप्रियसखवन्दना न क्रियत इति । ननु राजप्रियसखोऽपि यदि जात्या हीन एव स्यात् कथं वन्द्यतामत आह–

---

१. एनां–सा. ए. २. भोदि–सा. ए. ३. रण्णो–सा. ए.

*(नेपथ्ये)*

**देवदूतः**–चित्रलेखे, त्वरयोर्वशीम् ।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो निबद्धः[1] ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥१७॥

*(सर्व आकर्णयन्ति । उर्वशी विषादं रूपयति[2])*

---

### कोणेश्वरी

**बंभणो** इति । समस्तं नमस्करणीयताप्रयोजकमेव समरूपमस्ति तथापि कथमहं त्वया न वन्द्य इत्यर्थः । **सोऽत्थि** इति । स्वस्ति भवतु कल्याणं भवतादित्यर्थः ॥

### कुमारगिरिराजीया

**मयेत्यादि** । सहस्राक्षादिन्द्रात् पुरुषान्तरमन्यपुरुषमप्राप्तो जयशब्दो जयेति शब्दो यद् यस्माद् यस्य मम उदीर्यत उच्चार्यते तस्मात् तेन मया जितमजायि । सर्वोत्तरेणाभावीत्यर्थः ॥१६॥ किं न वन्द्यते । अत्र परिहासस्य गम्यमानत्वान्नर्मेति सन्ध्यङ्गमुक्तं भवति ॥

### प्रकाशिका

'नेपथ्ये' इत्यत आरभ्योर्वश्याकाररूपार्थोपक्षेपश्चूलिकया विहितः । चूलिका-लक्षणमुक्तं प्राक् । **मुनिनेति** । प्रयुज्यते इति प्रयोगो लक्ष्मीस्वयंवराभिधानं रूपकम् । शृङ्गाराद्यष्टरसाश्रयः । निबद्धो रचितः । ललितोऽतिसुन्दरोऽभिनयोऽर्थव्यञ्जनं यत्र । मरुतां देवानाम् ॥१७॥

### कोणेश्वरी

किमर्थं त्वरयामीत्यत आह–**मुनिनेति** । भरतनाम्ना मुनिना यः प्रयोगो भवतीषु निबद्धो बोधितः । इष्ट ईप्सितो यो रसः तस्याश्रयः । तमद्य मरुतां भर्ता सुरपतिर्लोकपालैः सह द्रष्टुमना अवतिष्ठत इति शेषः । ललितोऽभिनयो यत्र तम् । इयमेव तत्र परमपात्रमितीमां सोऽपेक्षते । अतस्त्वरयेत्यर्थः ॥१७॥

---

१. नियुक्तः–सा. ए. इष्टरसाश्रयः–को. २. नाटयति–सा. ए.

**चित्रलेखा**–सुदं तुए देवदूदस्स वअणम् । [1]ता अणुजाणाहि महाराअं । [श्रुतं त्वया देवदूतस्य वचनम् । तदनुजानीहि महाराजम् । ]

---

### कुमारगिरिराजीया

**मुनिना भरतेनेत्यादि** । भरतेन भरताख्येन मुनिना । अष्टरसाश्रयोऽष्टानां रसानां शृङ्गारवीरबीभत्सरौद्रहास्याद्भुतभयानककरुणानामाश्रय आस्पदं यः प्रयोगो नाटयप्रयोगो भवतीषु युष्मासु । अप्सरःस्त्रीष्वित्यर्थः । नियुक्तो निहितः। प्रतिष्ठापित इत्यर्थः। अद्येदानीं सलोकपालसहितो मरुतां देवानां भर्ता स्वामी इन्द्रः । ललिताभिनयं ललितः सुकुमारोऽभिनयो यस्य स तथोक्तः । तं प्रयोगं द्रष्टुमना द्रष्टुं निरीक्षितुं मनो यस्य स तथोक्तः । अत्र 'तुं काममनसोरपि' इति मकारस्य लोपः । अत्राष्टरसाश्रयो ललिताभिनय इत्यनेन शृङ्गाररसप्रधानमुपसृष्टान्यरसं किमपि नाटकं सूच्यते । तथा चोक्तं **वसन्तराजीये**–

एको रसो भवेदङ्गी वीरशृङ्गारयोर्द्वयोः ।
अङ्गमन्ये रसाः सर्वे भवेन्निर्वहणेऽद्भुतः ॥

इति ॥१७॥ एतदेव नाटकं नामतो वक्ष्यति सरस्सईकिअकव्वबंधे लच्छीसअंवरे इति ॥

### प्रकाशिका

**चित्रलेखा**–श्रुतं त्वया देवदूतस्य वचनम् । तदनुजानीहि महाराजम् । अनुजानीहि आपृच्छस्व । 'प्रश्नोऽनुयोगः पृच्छा' **इत्यमरः** ।

### कोणेश्वरी

**सुदं इति**–श्रुतं त्वया देवदूतस्य वचनं तस्मादनुजानीहि तावन् महाराजम् । संगोपनेनागतयोरिदानीं तदादेशो विलम्बितुं न योग्यमित्यर्थः ॥

### कुमारगिरिराजीया

**'अणुमाणीअदु महाराओ'** गमनायेति शेषः ॥

---

१. **अणुमाणीअदु महाराओ**–सा. ए.

**उर्वशी**–(*निःश्वस्य* [1]) णत्थि मे वाआविहवो। [नास्ति मे वाचाविभवः।]

**चित्रलेखा**–महाराअ, [2] उव्वस्सी विण्णवेदि–परवसो अअं जणो। महाराएण अब्भणुण्णादा [3] इच्छामि देअदेअस्स अणवरद्धं अत्ताअणं कादुं। [महाराज उर्वशी विज्ञापयति-परवशोऽयं जनः। महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम्।]

**राजा**–([4] *कथंकथमपि वचनं संस्थाप्य*) नास्मि भवत्योरीश्वरनियोगपरिपन्थी [5]। स्मर्तव्यस्त्वयं जनः।

---

### प्रकाशिका

**उर्वशी**–नास्ति मे वाचाविभवः। **चित्रलेखा**–महाराज, उर्वशी विज्ञापयति। 'परवशोऽयं जनः। महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम्।' संस्थाप्य स्थिरीकृत्य। ईश्वरनियोगपरिन्थी प्रभ्वाज्ञाविरोधी ॥

### कोणेश्वरी

**नत्थीति**। नास्ति मे वाग्राजानमर्थं ज्ञापयितुमिति शेषः। उर्वश्यनादिष्टापि तत्सखीत्वात् तदनपराधतामाशंसन्ती चित्रलेखाह–**महेति**। महाराज, उर्वशी विज्ञापयति परवशोऽयं जनः। महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम्। परवशत्वादस्यात्रावस्थानं न स्वाधीनमतोऽनुजानीह्येनं येन देवदेवस्य सापराधोऽयं जनो न भवतीत्यर्थः। **नास्मीति**। युवयोरीश्वराज्ञायां प्रतिबन्धो मया न युज्यत इत्यर्थः। **किन्त्विति**। किं पुनस्तत्र गतोऽप्यहं स्मरणीय इत्यर्थः। एतावता नर्तनसमये मन्नाम भ्रमेण ग्रहीतव्यमिति सूचितम् ॥

### कुमारगिरिराजीया

No commentary

---

१. om.–सा. ए. २. om.–सा. ए. ३. इच्छदि देवेसु–सा. ए. ४. कथंचिद् वाचं व्यवस्थाप्य–सा. ए. ५. प्रत्यर्थी–सा. ए.

(*उर्वशी वियोगदुःखं रूपयित्वा*[1] *राजानं पश्यन्ती सह सख्या निष्क्रान्ता*)

**राजा**–(*सनिःश्वासम्*)[2] वैयर्थ्यमिव चक्षुषः संप्रति ।

**विदूषकः**–(*पत्रं दर्शयितुकामः*) णं[3] भुज्जा (*इत्यर्धोक्तेनात्मगतम्*) अविद[4], अविद भो, उव्वसीदंसणविम्हिदेण मए तं भुज्जवत्तं पब्भट्टं वि हत्थादो ण विण्णादं । [ननु भूर्ज—। हा धिक्, हा धिक् भोः, उर्वशीदर्शनविस्मितेन मया तद् भूर्जपत्रं प्रभ्रष्टमपि हस्तान्न विज्ञातम् ।]

**राजा**–किमसि वक्तुकामः ।

**विदूषकः**–[5]वअस्स, एदम्हि वत्तुकामो । मा भवं अंगाइं विमुंचदु । दिढं क्खु तुइ बद्धभावा उव्वसी । ण सा इदो गदुअ एदं अणुबंधं सिढिलीकरेदि । [वयस्य, एतदस्मि वक्तुकामः । मा भवानङ्गानि विमुञ्चतु । दृढं खलु त्वयि बद्धभावा उर्वशी । न सा इतो गत्वा एनमनुबन्धं शिथिलीकरोति ।]

---

**प्रकाशिका**

**विदूषकः**—'ननु भूर्ज-इत्यर्धोक्तेन । 'अविद' इत्यदृष्टाश्रुतप्राप्तौ । 'हद्धी' इत्यपि पाठः । हा धिक् हा धिक्, उर्वशीदर्शनविस्मितेन मया तद् भूर्जपत्रं प्रभ्रष्टमपि हस्तान्न विज्ञातम् । **विदूषकः**–वयस्य, एतदस्मि वक्तुकामः । मा भवानङ्गानि विमुञ्चतु । दृढं खलु त्वयि बद्धभावा उर्वशी । न सा इतो गत्वा एनमनुबन्धं शिथिलीकरोति ॥

**कोणेश्वरी**

**णं इति** । ननु भूर्ज-इत्यर्धोक्ते मौनं नाटयित्वेति शेषः । 'अविद' इत्याश्चर्ये । भो इति निरवनत्वं संबोध्य । उर्वशीदर्शनविस्मितेन तन्मया भूर्जपत्रं

---

१. रूपयन्ती सख्या सह–सा. ए. २. सखे–सा. ए. ३. एदं–सा. ए. ४ हद्धी, हद्धी–सा. ए. ५ पमादेण–सा. ए. ५. om.–सा. ए. ६. इदोगद अणुराअं सिढिलेदि–सा. ए.

राजा–[1]ममाप्येदेव मनसि वर्तते । तया खलु प्रस्थाने

अनीशया शरीरस्य हृदयं [2]स्ववशं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥१८॥

विदूषकः–(*स्वगतम्*) वेवदि मे हिअअं [3]कत्तिए वेलाए तस्स भुज्जवत्तस्स अत्थभवदा वअस्सेण णामं गेण्हिदव्वं [4]त्ति। [वेपते मे हृदयं कस्यां वेलायां तस्य भूर्जपत्रस्यात्रभवता वयस्येन नाम ग्राह्यमिति ।]

राजा–[5]वयस्य, केनेदानीमुन्मनसमात्मानं विनोदयामि । (*स्मृत्वा*) [6] उपनय भूर्जपत्रम् ।

---

**कोणेश्वरी**

प्रभ्रष्टमपि हस्तान्न ज्ञातम् । एवं ममेदानीं विस्मयोऽभूत् । विस्मयाविष्टचेतसा मया कराद् भ्रंशमानं तन्नावगतमित्याश्चर्यहेतुः ।

अन्यद्वक्तुकामो भवानन्यद् बोधयति । वअस्सेति । वयस्य इदमस्मि वक्तुकामो मा भवानङ्गानि मुञ्चतु । कुतो न मुञ्चाम्यत आह–**दृढमिति** । दृढं खलु त्वयि बद्धभावा उर्वशी । न सा इतो गत्वा इममनुबन्धं शिथिलीकरिष्यति । तथा चानेनानुबन्धेनावश्यं तया पुनरागन्तव्यमिति भावः । एतावता तत्राप्यनुबन्धो व्यक्तो भविष्यतीति सूचितम् ॥

**कुमारगिरिराजीया**

No commentary

**प्रकाशिका**

**अनीशयेति** । शरीरस्यानीशया । इन्द्राधीनत्वादित्यर्थः । **स्ववशं** निजायत्तम् ॥१८॥ **विदूषकः**—वेपते मे हृदयं कस्यां वेलायां तस्य भूर्जपत्रस्यात्रभवता वयस्येन नाम ग्राह्यमिति । **राजा**—उन्मनसमुत्कण्ठितम् ॥

---

१. ममाप्येतदाशंसि मनः—सा. ए. २. विवशं—कु. गि. ३. इमं वेलं—सा. ए. ४. भविस्सदि—सा. ए. ५. केनेदानीं दृष्टिं विलोभयामि—सा. ए. ६. आः—सा. ए.

**विदूषकः**–( [1]*सर्वतो दृष्ट्वा सविषादम्* ) हा कहं ण दिस्सदि । भो [2]दिव्वं क्खु तं भुज्जवत्तं गदं उव्वसीमग्गेण । [हा कथं न दृश्यते । भोः, दिव्यं खलु तद् भूर्जपत्रं गतमुर्वशीमार्गेण ।]

**राजा**–( [3]*सासूयम्* ) सर्वत्र प्रमादी वैधेयः ।[4]

**विदूषकः**–[5]णं विचिणोमि । (*उत्थाय*) इदो भवे । एत्थ वा भवे ।

(*इति विचेतव्यं नाटयति*)

[ननु विचिनोमि । इतो भवेत् । अत्र वा भवेत् ।]

---

**कोणेश्वरी**

कथं वर्तनेऽत आह-तयेति । किं तदित्याह—**अनीशयेति**। तया हृदयं मयि मनो मयि न्यस्तं समर्पितमित्यर्थः । तथा च हृदयं चेदत्र तया न्यासीकृतं तद्विना तत्रावस्थातुमशक्तयावश्यमागन्तव्यमिति भावः । तर्हि शरीरमपि कुतो न तथा धृतमत आह—**अनीति** । शरीरस्यानीशया अप्रभवन्त्या । शरीरं न तदायत्तमित्यर्थः । तर्हि मनोऽपि कथं धृतवतीत्यत आह—**स्ववशमिति** । तत्स्वायत्तमित्यर्थः । तदत्र तया न्यस्तमिति कथमवगतमत आह—**स्तनेति** । यदि तस्या हृदयं मयि न प्रस्थितं तदा तत्स्थयोः स्तनयोः कथं कम्पोऽभूत् तदेति भावः । आन्तरं तत्कथं बहिरागतमत आह—**निःश्वसितै रिति** । एवमहमुत्प्रेक्षे यत्तदानीं यत्तयाधिकं निःश्वसितं तदान्तरस्थे ...

**कुमारगिरिराजीया**

**अनीशयेत्यादि** । शरीरस्यानीशयानीश्वरया उर्वश्या प्रस्थानेऽपि प्रयाणेऽपि विवशं परवशं हृदयं स्तनकम्पक्रियालक्ष्यैर्निश्वसितैर्मयि न्यस्तमिव निक्षिप्तमिव ॥१८॥

**प्रकाशिका**

**विदूषकः**—हा कथं न दृश्यते । भोः,दिव्यं खलु तद् भूर्जपत्रं गतमुर्वशीमार्गेण । सासूयम् सक्रोधम् । प्रमादी असावधानः । 'प्रमादोऽनवधानता' इति **त्रिकाण्डी** (१-६-३) । वैधेयो मूर्खः । 'मूर्खवैधेय बालिशाः' इति सा एव (**त्रिकाण्डी** ३-१-४८) **विदूषकः**—ननु विचिनोमि । इतो भवेत्, अत्र वा भवेत् ॥

---

१. विषादं नाटयति । हंत ण दीसदि—सा. ए. २. गदं उव्वसीमग्गेण—सा. ए. ३. om.—सा. ए. ४. ननु विचिनोतु भवान्—सा. ए. ५. om.—सा. ए.

[1] (ततः प्रविशत्यौशीनरी चेटी च विभवतश्च परिवारः)

**औशीनरी**–हञ्जे णिउणिए, [2] सच्चं कि लदाघरं विसंतो अज्ज-माणवअसहाओ [3] दिट्ठो तुए महाराओ। [हञ्जे निपुणिके, सत्यं किं लतागृहं विशन्नार्यमाणवकसहायो दृष्टस्त्वया महाराजः।]

**चेटी**– [4] अलीअं किं मए भट्टिणी विण्णविदपुव्वा। [अलीकं किं मया भट्टिनी विज्ञापितपूर्वा।]

**देवी**–तेण [5] लदाविडवंतरिदा सुणिस्सं दाव [6] वीसंभमंति-दाइं जं तुए कधिदं सच्चं ण व त्ति। [तेन हि लता-विटपान्तरिता श्रोष्ये तावद् विश्रम्भमन्त्रितानि यत्त्वया कथितं सत्यं न वेति।]

**चेटी**–जं देवीए रुच्चदि। [यद् देव्यै रोचते।]

---

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

वैधेयो मूर्खः। 'मूर्खवैधेयबालिशाः' इत्यमरः (३–१–४८)

**प्रकाशिका**

औशीनरी काशिराजपुत्री। **औशीनरी**–हञ्जे इति चेटीं प्रत्यामन्त्रणम्। निपुणिके, सत्यं किं लतागृहं विशन्नार्यमाणवकसहायो दृष्टस्त्वया महाराजः। **चेटी**–अलीकं किं मया भट्टिनी विज्ञापितपूर्वा। भट्टिनी राजमहिषी। **देवी**–तेन हि लताविटपान्तरिता श्रोष्ये तावद् विश्रम्भमन्त्रितानि यत्त्वया कथितं सत्यं न वेति। **चेटी**–यद् देव्यै रोचते॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया** No Commentary

---

१. ततः प्रविशति काशिराजपुत्री सपरिवारा–सा. ए. २. सच्चं तुए भणिदं–इमं सा. ए. ३. अज्जउत्तो दिट्ठो त्ति–सा. ए. ४. किं अण्णहा–सा. ए. ५. लदंतरिदा–सा. ए. ६. से वीसद्धमंतिदाइं–सा. ए.

**देवी**–(*परिक्रम्य पुरस्तादवलोक्य च*) णिउणिए, किं णु एदं पत्तं [1]णवचीअरं विअ इदो दक्खिणमारुदेण आणीअदि। [निपुणिके, किं न्वेतत्पत्रं नवचीवरमिवेतो दक्षिण-मारुतेनानीयते।]

**चेटी**–(*विभाव्य*) भट्टिणि, पडिवत्तणविभाविदक्खरं भुज्जवत्तं क्खु एदं। हंत, कहं देवीए [2]एव्व णेउरकोडिलग्गं। (*गृहीत्वा*) कहं वाचीअदु एदं। [भट्टिनि, परिवर्तन-विभाविताक्षरं भूर्जपत्रं खल्वेतत्। हन्त, कथं देव्या एव नूपुरकोटिलग्नम्। कथं वाच्यतामेतत्।]

**देवी**–[3]अवलोएहि दाव एदं। जदि अविरुद्धं तदो सुणिस्सं। [अवलोकय तावदेतत्। यद्यविरुद्धं ततः श्रोष्ये।]

**चेटी**–(*तथा कृत्वा*) भट्टिणि, तं एदं[4] कोलीणं विअंभदि। भट्टारअं उद्दिसिअ [5]उव्वसीअक्खरो कव्वबंधो त्ति तक्केमि। अज्जमाणवअप्पमादादो[6] अम्हाणं हत्थं [7]आगदं। [भट्टिनि तदेतत् कौलीनं विजृम्भते। भट्टा-रकमुद्दिश्योर्वश्यक्षरः काव्यबन्ध इति तर्कयामि। आर्य-माणवकप्रमादादावयोर्हस्तमागतम्।]

**देवी**–[8]णं गिहीदत्था होहि। [ननु गृहीतार्था भव।]

[9](*चेटी वाचयति*)

---

**प्रकाशिका**

**देवी**–निपुणिके, किं न्वेतत् पत्रं नवचीवरमिवेतो दक्षिणमारुतेनानीयते। पत्तं इति पदरहितो वा पाठः।

---

१. जिण्णचीरं विअ इदोमुहं–सा. ए. २. भट्टिणीए एव्व णेउरकोडीए लग्गं–सा. ए. ३. अणुवाचेहि दाव णं–सा. ए. ४. एव्व कोलीणं विअ पडिहादि–सा. ए. ५. उव्वसीए–सा. ए. ६. प्पमादेण–सा. ए. ७. गदो त्ति–सा. ए ८. तेण हि से गहिदत्था होमि–सा. ए. ९. निपुणिका राज्ञा पूर्ववाचितं वाचयति–सा. ए.

**देवी**–एदेण[1] एव्व उवआरेण तं अच्छराकामुअं [2]पेक्खम्ह ।
[एतेनैवोपचारेण तमप्सरःकामुकं प्रेक्षावहे ।]

[3]**चेटी**–जं देवी आणवेदि । [यद् देव्याज्ञापयति ।]

(*इति परिजनसहिते*[4] *लतागृहं परिक्रामतः*)

**विदूषकः**—भो वअस्स, किं एदं पवणवसगामि पमदवणसमीव-[5]गदक्कीडापव्वदपज्जंते दीसदि । [भो वयस्य, किमेतत् पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ।]

---

**प्रकाशिका**

**चेटी**–भट्टिनि, परिवर्तनविभाविताक्षरं भूर्जपत्रं खल्वेतत् । हन्त, कथं देव्या एव नूपरकोटिलग्नम् । कथं वाच्यतामेतत् । **देवी**–अवलोकय तावदेतत् । यद्यविरुद्धं तदा श्रोष्ये । **चेटी**–देवि, तदेतत् कौलीनं विजृम्भते । 'स्यात् कौलीनं लोकवादः' इति **त्रिकाण्डी** । भट्टारकमुद्दिश्योर्वश्यक्षरः काव्यबन्ध इति तर्कयामि । 'राजा भट्टारको देवः' **इत्यमरः** । आर्यमाणवकप्रमादादस्माकं हस्तमागतम् । **देवी**–ननु गृहीतार्था भव ॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

**चेटी**–कथं वाच्यताम् । कथमिति प्रश्ने ॥

**प्रकाशिका**

**देवी**–एतेनैवोपकारेण उपचारेण वा, तमप्सरःकामुकं प्रेक्षावहे । **चेटी**–यद् देव्याज्ञापयति । **विदूषकः**–भो वयस्य, किमेतत् पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

No Commentary

---

१. इमिणा एव्व उवाअणेण–सा. ए. २. पेक्खामि–सा. ए. ३. om.–सा. ए. ४. परिजनसहिता लतागृहं परिक्रामति–सा ए. ५. कीलापव्वद-पेरंते–सा. ए

**राजा**–(*उत्थाय*) भगवन्, [1]वसन्तसख मलयानिल,
वासार्थं हर सम्भृतं सुरभि[2] यत् पौष्पं रजो वीरुधां,
किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे।
जानीते हि भवान् [3]विनोदनशतैरेवंविधैर्धारितं,
कामार्तं जन[4]मञ्जसाभिभवितुं नालम्बितप्रार्थनम् ॥१९॥

**निपुणिका**–भट्टिणि, एदस्स एव्व[5] अण्णेसणं वट्टदि। [भट्टिनि, एतस्यैवान्वेषणं वर्तते।]

**देवी**–पेक्खामि। [प्रेक्षे।]

**विदूषकः**–भो, मिलाअमाणकेसरच्छविणा मोरपिच्छेण विप्पलद्धो म्हि। [भोः, म्लायमानकेसरच्छविना मायूरपिच्छेन विप्रलब्धोऽस्मि।]

**राजा**–सर्वथा हतोऽस्मि [6]मन्दभाग्यः।

**देवी**–([7]*सहसोपसृत्य*) अज्जउत्त, अलं आवेएण। एदं एव्व तं[8] भुज्जवत्तं। [आर्यपुत्र, अलमावेगेन। एतदेव तद् भूर्जपत्रम्।]

**राजा**–(*ससंभ्रममात्मगतम्*) अये इयं देवी। (*प्रकाशम्*) स्वागतं देव्यै।

---

**प्रकाशिका**

**वासार्थमिति**। सुरभि सुगन्धि यत् पौष्पं पुष्पसम्बन्धि संभृतं धृतं संचितं वा वीरुधां लतानां रजः परागं वासार्थं सौगन्ध्यार्थं हर नय। मिथ्याहृतेन निरर्थकं नीतेन मे मम दयितायाः प्रियायाः स्नेहस्वहस्तेन स्नेहसूचको यः स्वहस्तो लक्षणया स्वहस्तलेखस्तेन भवतस्तव किम्? किं प्रयोजनमित्यर्थः।

---

१. वसन्तप्रिय दक्षिणवायो–सा. ए. २. सुरभिणा पौष्पं–सा. ए. ३. मनोविनोदनफलै–सा. ए. ४. मञ्जनांप्रति भवानालक्षितप्रार्थनः–सा. ए. ५. भुज्जवत्तस्स अण्णेसणा–सा. ए. ६. om.–सा. ए. ७. उपेत्य–सा. ए. ८. om.–सा. ए.

### प्रकाशिका

वीरुत्पुष्परजोहरणे हि ते सौगन्ध्यलाभोऽपि भविष्यति। लेखहरणे तु ते न केवलं न लाभः प्रत्युत मादृग्विप्रवधाधर्मोऽपि प्रसज्येतेति न त्वयैतादृशं विधेयमिति भावः। हि यतः भवानेवंविधैर्विनोदनशतैर्हस्तलेखचित्रफलकादिभिर्धारितं विहित-जीवनम्। आलम्बिता अङ्गीकृता प्रार्थना येन तं कामार्तं जनमञ्जसा तत्त्वतोऽभिभवितुं पराभवितुं न जानीते। अभिभवितुं न जानीत इदमञ्जसा सत्यमिति वा। अतश्चावश्यं लेखो न नेय इति भावः। निजदाक्षिण्यरक्षणायापि नैतादृग्विविधेयमिति रहस्यम्। 'अञ्जसा तत्त्वतूर्णयोः' इति मेदिनी (पृ. १८५-८१) ॥१९॥

**निपुणिका**—भट्टिनि, एतस्यैवान्वेषणं वर्तते। **देवी**—प्रेक्षे। **विदूषकः**—भोः, म्लायमानकेसरच्छविना मायूरपिच्छेन विप्रलब्धोऽस्मि। **देवी**—आर्यपुत्र, अलमावेगेन। एतदेव तद् भूर्जपत्रम्। 'आर्यपुत्र' इति पतिं प्रति पत्न्याः सम्बुद्धिः।

ऊढायां देवि दयिते पुमानाह प्रियां प्रति।
आर्यपुत्र च जीवेश नाथ साप्याह वल्लभम् ॥

इति सागरोक्तेः ॥

### कोणेश्वरी

**अज्जेति**। आर्यपुत्र, अलमावेगेन। एतत्तद् भूर्जपत्रम्। एतदर्थमावेगो न कर्तव्यः ॥

### कुमारगिरिराजीया

**वासार्थमित्यादि**। सुरभिणा वसन्तेन संभृतं संपादितं वीरुधां लतानां पौष्पं पुष्पसम्बन्धि रजः परागं वासार्थं हर गृहाण। मिथ्या वृथा ह्रुतेनापह्नुतेन मे दयितास्नेहस्वहस्तेन दयितायाः प्रियायाः स्नेहेन कृतः स्वहस्तः। स्वहस्तशब्देन स्वहस्तलिखितं लक्ष्यते। तथा चोक्तं स्मृतिकारेण—

'राजस्वहस्तसंशुद्धं शुद्धिमायाति शासनम्।'

इति। तेन भवतस्तव किं किं प्रयोजनम्? न किंचित् प्रयोजनमित्यर्थः। अञ्जनामञ्जनां देवीं प्रति आलक्षितप्रार्थनो दृष्टाभिलाषो भवान् कामार्तं जनं मनोविनोदनफलैर्मनोविनोदनं चेतोविश्रान्तिः फलं प्रयोजनं येषां तानि तैरेवंविधैरीदृशैर्लिखितादिभिर्धारितमवलम्बितं धृतप्राणं जानीते हि अवगच्छति खलु ॥१९॥

**विदूषकः**—अत्र केसरशब्दः केसरपुष्पवाची ॥

**देवी**– [1]दुरागदं दाणिं संवुत्तम् । [दुरागतमिदानीं संवृत्तम् ।]

**राजा**–(*जनान्तिकम्*) वयस्य, किमत्र प्रतिविधानम् ।

**विदूषकः**–([2]*जनान्तिकम्*) लोत्तेण [3]सूइदस्य कुंभिलअस्स अत्थि वा पडिवअणं । [लोप्त्रेण सूचितस्य कुम्भीरकस्यास्ति वा प्रतिवचनम् ।]

**राजा**–(*अपवार्य*) मूढ, नायं परिहासकालः । (*प्रकाशम्*) नेदं पत्रं मया मृग्यते । तत् खलु मन्त्रपत्रं यदन्वेषणाय ममायमारम्भः ।

---

प्रकाशिका

**देवी**–दुरागतमिदानीं संवृत्तम् । प्रतिविधानं प्रतीकारः । **विदूषकः**- लोप्त्रेण सूचितस्य कुम्भीलकस्यास्ति वा प्रतिवचनम् । लोप्त्रं चोरितद्रव्यांशभूतं वस्तु । 'दसी' इति भाषायां प्रसिद्धम् । 'स्तेयं लोप्त्रं च तद्धनम्' इति **त्रिकाण्डी** (२-१०-२६) । कुम्भीरकश्चोरः । 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति कोषः । मृग्यतेऽन्विष्यते । आरम्भ उद्योगः ।

कोणेश्वरी

**दूरमिति** । दूरं गतमिदानीं मे संवृत्तम् । त्वया यस्य स्वागतं पृच्छयते तस्य तावता स्वागतमित्यर्थः । अथ च सकोपमाह-यस्य मम कृते परिदेवनं विधत्से तस्याः कथं न स्वागतमित्यर्थः । जनान्तिकमिति हस्तसंज्ञयेत्यर्थः । यदाह—

हस्तेन त्रिपताकेन सञ्ज्ञया यदुदीर्यते ।
बहूनां पुरतो वाक्यं तज्जनान्तिकमुच्यते ॥

कथमिति कोऽत्र प्रतीकार इत्यर्थः । **वअस्सेति** । वयस्य लोप्त्रेण सूचितस्यापि कुम्भीलकस्यात्र नास्ति वाक्प्रतिविधानम् । चोरितप्रतिलम्भसूचकेन ज्ञातस्यापि चौरस्य मिथ्योत्तरमेव प्रतिविधानम् । मिथ्योत्तरे हि कस्यापि कथमपि यदि संशयः स्यादन्यथा सर्वेषां निर्णय एव भवेदिति । चौराणामियं रीतिर्यत् प्राणात्ययेऽपि चौरिका नाङ्गीक्रियत इति भावः । 'नष्टाप्तिसूते लोप्त्रं स्यात्' इति **हारावली** । 'बन्दी चौरो मोचनः स्यात् कुम्भीलः सन्धिहारकः ।' इत्यपि ।

**कुमारगिरिराजीया** No Commentary

---

१. विदूषकः—अपवार्य—सा. ए. २ om.—सा. ए. ३. गहिदस्स—सा. ए.

**देवी**–जुज्जदि अत्तणो सोहग्गं पच्छादेदुं । [युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् । ]

**विदूषकः**–भोदि, तुवरेहि से भोअणं । [1]पित्तोवसमणेन सुत्थो होदु । [भवति, त्वरयस्वास्य भोजनम् । पित्तोपशमनेन स्वस्थो भवतु । ]

**देवी**–णिउणिए, सोहणं खु बम्हणेण आसासिदो वअस्सो । [निपुणिके, शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः । ]

**विदूषकः**–[2]णं पेक्ख । आसासिदो [3]वअस्सो चित्तभोअणेण । [ननु प्रेक्षस्व । आश्वासितो वयस्यश्चित्रभोजनेन । ]

**राजा**–मूर्ख, बलादपराधिनं मामापादयसि ।

**देवी**–णत्थि भवदो अवराहो । [4]अहं एव्व अवरद्धा जा पडिऊलदंसणा भविअ अग्गदो[5] चिट्ठामि । [6]इदो गमिस्सं ।

(*इति कोपं नाटयित्वा प्रस्थिता*)

---

**प्रकाशिका**

**देवी**–युज्यते आत्मनः सौभाग्यं प्रच्छादयितुम् । **विदूषकः**–भवति त्वरयस्वास्य भोजनम् । पित्तोपशमनेन स्वस्थो भवतु ॥ **देवी**–निपुणिके, शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः । वयस्यः सखा । **विदूषकः**–ननु प्रेक्षस्व । आश्वासितो वयस्यश्चित्रभोजनेन । **देवी**–नास्ति भवतोऽपराधः । अहमेवापराद्धा या प्रतिकूलदर्शना भूत्वा अग्रतस्तिष्ठामि । इतो गमिष्यामि ॥

**कोणेश्वरी**

युज्यते आत्मनः सौभाग्यं निगूहितुम् । सुगोपना सौभाग्यगोपना च युक्तैवेत्यर्थः । **विदूषकः–भोदीति** । भवति, त्वरयास्य भोजनं येन पित्तप्रशमनेन सुस्थो भवति । बुभुक्षितत्वेन पित्तमूर्च्छितभावोऽयं यत् तावदु...नं विधते । नत्वन्यः कश्चिद् विशेषोऽस्तीति । अथ चेदानीं मस्तकप्राप्तपित्तोऽयमतोऽस्य परिदेवनमुचितमिति सोपहासम् । **देवी–णिउणिए इति** । निपुणिके शोभनं

---

१. जं पित्तोवसमणसमत्थं भोदि–सा. ए. २. भोदि–सा. ए. ३. सव्वो–सा. ए. ४. एत्थ–सा. ए. । ५. दे–सा. ए. । ६. णिउणिए एहि गच्छम्ह–सा. ए.

**राजा**—

अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात् ।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥२०॥

(*इति पादयोः पतति*)

---

**कोणेश्वरी**

खल्वर्थं शासितः प्रियवयस्यो ब्राह्मणेन । यतः पित्तमूर्च्छित एवायमिति भावः । **णत्थि** इति । नास्ति प्रभवतोऽपराधोऽहमेवात्रापराद्धा या प्रतिकूलदर्शना भूत्वा अग्रतो भवामि । भवान् प्रभुः कथमपराधी स्यात् । प्रभुर्नापराध्यत इति । मम दर्शनमिदानीं तव प्रतिकूलं तथा च प्रतिकूलमाचरन्त्या ममैवापराध इति व्यज्यत इति भावः ॥

**कुमारगिरिराजीया**

**विदूषकः**—भोजनेनाश्वासितः पिशाचोऽपि उज्झति किं पुनरेतत् पित्तमिति सम्बन्धः ॥

**प्रकाशिका**

**अपराधी नामेति** । संरम्भात् क्रोधात् । स्वापराधमेव द्रढयति—सेव्यः सेवार्हो जनः कुपितः । कोपः सञ्जातोऽस्येति कुपितः क्रोधवान् । 'तदस्य सञ्जातम्' इति इतच्प्रत्ययः । दासश्च निरपराधः कथं नु । तथा च प्रभुक्रोधान्यथानुपपत्त्यैव दासापराधो निश्चीयत इति भावः ॥२०॥

**कोणेश्वरी**

**अपराधीति** । अपराधी अहं नो न अपि त्वपराध्येव । द्वौ निषेधौ प्रकृतमर्थं गमयत इति व्युत्पत्त्या । संरम्भात् क्रोधात् । विरम क्रोधमपनयेत्यर्थः । न केवलं क्रोधापनयने मम प्रयोजनं किन्तु प्रसीदानुग्रहं कुरु । यदि त्वं तथा सापराधः कथमिव त्वयि प्रसन्ना भवेयमत आह सेव्य इति । उपास्यो जनश्चेत् कुपितो दासः कथं निरपराधः । चो यद्यर्थे । ययैव क्रियया प्रभुः कुप्यति तत्क्रियाकरणमेव दासस्यापराधः न तु तत्र क्रियायाः सम्यक्त्वासम्यक्त्वे प्रयोजके । तथा च वस्तुगत्या तादृशी न क्रिया तथापि त्वं चेत् कुपितासि एतावताहमपराधवानेवेति भावः । अथ चापरस्याधीन आयत्तो नाहं किन्तु त्वय्येव परवानतः प्रसीद । शेषं पूर्ववत् ॥२०॥

**देवी**–(*आत्मगतम्*) मा खु लहुहिअआ अणुणअं बहु मण्णे किं दु दक्खिण्णकिदपच्छादावस्स भाएमि। [मा खलु लघुहृदया अनुनयं बहु मन्ये। किं तु दाक्षिण्यकृतपश्चात्तापस्य बिभेमि।]

(*इति राजानमपहाय सपरिवारा निष्क्रान्ता।*)

**विदूषकः**–पाउसणदी विअ अप्पसण्णा गदा देवी। णं उट्ठेहि। [प्रावृण्नदीवाप्रसन्ना गता देवी। ननूत्तिष्ठ।]

**राजा**–(*उत्थाय*) [1]वयस्य, नेदमुपपन्नम्। पश्य–

प्रियवचनकृतोऽपि[2] योषितां,
दयितजनानुनयो रसादृते।
प्रविशति हृदयं न तद्विदां
मणिरिव कृत्रिमरागयोजितः[3] ॥२१॥

---

कुमारगिरिराजीया

अपराधीत्यादि। रम्भोरु। 'ऊरूत्तरपदादौपम्ये' (पा ४.१.६९) इति उत्वम्। अहमपराधी नाम अपराध्येव। प्रसीद प्रसन्ना भव। संरम्भाद्रोषाद् विरता भव। स्वस्यापराधित्वं प्रतिपादयति। सेव्यजनश्चेत्यादि। सेव्यजनः स्वामी कुपितश्चेद्रुष्टो यदि दासः सेवकजनः कथं नु निरपराधः, अपराधरहितः। कथं नु इत्याक्षेपे। अपराधी एव भवतीत्यर्थः। अत्र स्त्रीणां मानापनयनोपायेषु साम प्रयुक्तमित्यनुसन्धेयम्। यथोक्तं वसन्तराजीये–

साम्ना भेदेन दानेन नत्युपेक्षारसान्तरैः।
मानापनयनं तासामुपायैः षड्भिराचरेत् ॥

अत्रैव सान्त्वनात् पर्युपासनमिति सन्ध्यङ्गमुक्तं भवति। पादयोः पततीत्यत्र पूर्वप्रयुक्ते सामनीत्यर्थे सति नतिर्नामोपायः प्रयुक्त इत्यनुसन्धेयम्। यथोक्तम्– 'नतिः पादप्रणामः स्यात्' इति ॥

प्रकाशिका

देवी–मा खलु लघुहृदया अनुनयं बहु मन्ये। किं तु दाक्षिण्यकृतपश्चात्तापाद् बिभेमि। विदूषकः–प्रावृण्नदीवाप्रसन्ना गता देवी। ननूत्तिष्ठ। राजा–

---

१. om.–सा.ए. २. वाचोऽपि–सा.ए. ३. कपिशः–कु.गि.

### प्रकाशिका

प्रियवचनकृत इति। प्रियैर्वचनैः कृतः संपादितो दयितजनानुनयः प्रियजनकृतं प्रसादनं रसादनुरागादृते योषितां हृदयं न प्रविशति हृदयंगमो न भवति। कृत्रिमरागेणाहार्यलोहितादिना वर्णेन योजितो रञ्जितो मणिः स्फटिकादिस्तद्विदां मणिपरीक्षकाणां यथा मनोहरो न भवति ॥२१॥

### कोणेश्वरी

कितव लघुहृदया खल्वहमनुनयं न गृह्णामि। खलु यदित्यर्थे। नकारः शिरश्चालनार्थे। अहमनुनयं न गृह्णाम्यपि तु गृह्णाम्येव। अतिलघुकहृदया यतः। गभीराशयानां कोपः स्थिरो भवति। यद्यहं तथा गभीरा स्यां तदा त्वमेव निर्भयो न भवतीति भावः। किमपरं बिभेम्यपीति सोत्कण्ठमाह—किं त्विति। किं तु दक्षिणस्य ते कृतपश्चात्तापस्य बिभेमीत्यर्थः।

अनुरागं भयं प्रेम न त्यजेत् पूर्वयोषिति।
अन्यया हृतचित्तोऽपि दक्षिणो नायको मतः॥

विदूषकः—पाउसेति। प्रावृण्नदीवाप्रसन्ना तत्रभवती गता, तदुत्तिष्ठोत्तिष्ठ। चेदियमेतावत् प्रणिपातेनापि न प्रसन्ना तर्हि यातु किमनया गतयेति भावः। कुतो न युक्तमत आह—पश्येति। प्रियेति। रसादृतेऽनुरागं विना दयितजने योऽनुनयः प्रियवचनेनापि कृतो योषितां हृदयं न प्रविशति तासां मनसि न पततीत्यर्थः। कुत इत्याकाङ्क्षायां हेतुगर्भं विशेषणमाह—तद्विदामिति। रसज्ञानां यथा मणिपरीक्षकाणां कृत्रिमरागयोजितो मणिः रागान्तरेणामणिरेव मणीकृतो मनसि न पततीत्यर्थः। तथा चेयं परमविज्ञा जानात्येव यन् मया प्रेम विनेवानायत्या चरणपातो विधीयते। अतोऽप्रसादोऽस्या नानौचित्यमिति भावः ॥२१॥

### कुमारगिरिराजीया

पश्चात्तापाद् बिभेमि। अत्र प्राकृते पञ्चम्यर्थे षष्ठी क्वचिद्दंसादेः इत्युक्तत्वात्। अत्र देव्याः पश्चात्तापभीतिरुत्तराङ्कोपयोगित्वाद्बिन्दुरित्यनुसन्धेयम्। वयस्य, नेदमनुपपन्नम्। उपपन्नमेवेत्यर्थः। इदंशब्देनाप्रसादगमनं परामृश्यते। प्रियवचनेति। दयितजनानुनयो दयितजनस्य प्रियजनस्यानुनयः प्रार्थना प्रियवचनशतोऽपि प्रियाणि वचनशतानि यत्र स तथोक्तस्तादृशोऽपि रसादृते प्रेम्णा विना प्रेमरहित इत्यर्थः। तद्विदां रसविदां योषितां हृदयं मनो न प्रविशति न संक्रामति। अत्रोपमामाह—तद्विदां मणिपरीक्षकाणां हृदयं कृत्रिमरागरूषितः कृत्रिमेण कृतकेन रागेण वर्णोत्कर्षेण रूषितो रञ्जितो मणिरिव रत्नमिव ॥२१॥

**विदूषकः**—अणुऊलं एव्व एदं भवदो । ण हु [1]अक्खिदुक्खिदस्स पमुहे दीवसिहा सहेदि । [अनुकूलमेतद् भवतः । न खल्व-क्षिदुःखितस्य प्रमुखे दीपशिखा सहते ।]

**राजा**—मैवम् । उर्वशीगतमनसोऽपि मम देव्यां स एव बहुमानः । किं तु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये ।

**विदूषकः**—[2]चिट्ठदु दाव [3]धीरदा । बुभुक्खिदबम्हणस्स जीविदं अवलंबदु भवं । समओ खु ण्हाणभोअणं सेविदुं ।

[तिष्ठतु तावद्धीरता । बुभुक्षितब्राह्मणस्य जीवितमव-लम्बतां भवान् । समयः खलु स्नानभोजने[4] सेवितुम् । ]

---

### प्रकाशिका

**विदूषकः**—अनुकूलमेवं तद् भवतः । न खलु अक्षिदुःखितस्य प्रमुखे दीपशिखा सहते । अक्षिदुःखितस्य इत्यत्र प्राकृते पूर्वनिपातानियमाद् दुःखिताक्षस्येति विधेयम् । **विदूषकः**— तिष्ठतु तावद् धीरता । बुभुक्षितब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजने सेवितुम् ॥

### कोणश्वरी

उपहसति । **अण्विति** । अनुकूलमेव भवत एतद् यदियमितो गतेत्यर्थः । कथमनुकूलमत आह—**ण हीति** । न हि अक्षिदुःखितः संमुखे दीपशिखां सहते । हिशब्दो हेतौ । चक्षूरोगवतो यथा संमुखस्थिता दीपशिखा दुःखदा तथा उर्वशीविरहविधुरस्य तव संमुखस्थितेयमपि दुःखजनिकेत्यर्थः । **राजेति**—उर्वशीहृतचित्तत्वेऽपि महादेव्यां पूर्ववदादरवत्त्वेनात्मनो दक्षिणनायकत्वं प्रकटयति—**किं त्विति** तया चेत् प्रणामलङ्घनापि कृता तदा सा मयि न मानिनी परं किं तु गमितप्रेमा । तस्य चरणप्रणिपातान्तत्वात् । तथा च तस्यामहमपि प्रेम त्यक्ष्यामीत्यर्थः । **विदूषकः**— भो इति । भोः तिष्ठतु तावद् देवीकथा । बुभुक्षितस्य मे जीवितमवलम्बतां भवान् । कथमिदानीमेव ते बुभुक्षा अत आह— **समओ इति** । समयः खलु ते स्नानभोजनं सेवितुम् । तथा च त्वं स्नानादिक्रियां कुरुष्वेत्यर्थः ॥

---

१. ण हु अक्खिदुक्खिदो अहिमुहे दीवसिहं सहेदि—सा. ए. २. भोः—को. ३. भवदो धीरदा—सा. ए. ४. स्नानभोजनं—को.

**राजा**–(*ऊर्ध्वमवलोक्य*) [1]कथमर्धं गतं दिवसस्य । अतः खलु–

उष्णार्तः[2] शिशिरे निषीदति तरोर्मूलालवाले शिखी,
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते[3] षट्पदाः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥२२॥

(*इति निष्क्रान्तौ*)

इति महाकविकालिदासविरचिते विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

**कुमारगिरिराजीया**

प्रणिपातलङ्घनात् प्रणामानङ्गीकारादहमप्यस्यां देव्यां धैर्यं धृतिमवलम्बिष्ये । अत्र प्रणामोपायेऽपि व्यर्थे उपेक्षा नाम उपायः प्रयुक्त इत्यनुसन्धेयम् । 'उपेक्षा धैर्यधारणम्' इति ॥

**प्रकाशिका**

मध्याह्नमेवाह–**उष्णार्त** इति । उष्णार्तो घर्मपीडितः । शिशिरे शीतले । मूलालवाले मूलकृतजलाधारे । 'स्यादालवालमावापः' इति **त्रिकाण्डी** । शिखी मयूरः । 'शिखावलः शिखी केकी' इति **सैव** । निषीदत्युपविशति । कर्णिकारमुकुलानि परिव्याधाख्यवृक्षकलिकाः । अथ 'द्रुमोत्पलः । कर्णिकारः परिव्याधः' इति **त्रिकाण्डी** । निर्भिद्य विदार्य । षट्पदा भ्रमराः । 'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः ।' इति **हलायुधः** (२.१००) । कारण्डवाह्वः पक्षिविशेषः । 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इति **त्रिकाण्डी** ॥२३॥

इति श्रीमद्बिन्दुवृन्दपुरन्दरयायजूकप्रवरश्रीश्रिम्बेकरोपनामकमौनिकुलमौलिमण्डनश्रीरङ्गनाथदीक्षितकुक्षिजविबुधवरश्रीबालकृष्णदीक्षिताङ्गजरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां द्वितीयाङ्कोन्मेषः ॥

---

१. कथं om.–सा. ए. २. उष्णालुः–सा. ए. ३. आलीयते षट्पदः–सा. ए.

**राजा**–(*ऊर्ध्वमवलोक्य*) [1]कथमर्धं गतं दिवसस्य । अतः खलु–

उष्णार्तः[2] शिशिरे निषीदति तरोर्मूलालवाले शिखी,
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते[3] षट्पदाः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥२२॥

(*इति निष्क्रान्तौ*)

इति महाकविकालिदासविरचिते विक्रमोर्वशीये द्वितीयोऽङ्कः ।

---

**कुमारगिरिराजीया**

प्रणिपातलङ्घनात् प्रणामानङ्गीकारादहमप्यस्यां देव्यां धैर्यं धृतिमवलम्बिष्ये । अत्र प्रणामोपायेऽपि व्यर्थे उपेक्षा नाम उपायः प्रयुक्त इत्यनुसन्धेयम् । 'उपेक्षा धैर्यधारणम्' इति ॥

**प्रकाशिका**

मध्याह्नमेवाह–**उष्णार्त** इति । उष्णार्तो घर्मपीडितः । शिशिरे शीतले । मूलालवाले मूलकृतजलाधारे । 'स्यादालवालमावापः' इति **त्रिकाण्डी** । शिखी मयूरः । 'शिखावलः शिखी केकी' इति **सैव** । निषीदत्युपविशति । कर्णिकारमुकुलानि परिव्याधाख्यवृक्षकलिकाः । अथ 'द्रुमोत्पलः । कर्णिकारः परिव्याधः' इति **त्रिकाण्डी** । निर्भिद्य विदार्य । षट्पदा भ्रमराः । 'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः ।' इति **हलायुधः** (२.१००) । कारण्डवाह्वः पक्षिविशेषः । 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इति **त्रिकाण्डी** ॥२३॥

इति श्रीमद्विन्दुवृन्दपुरन्दरयायजूकप्रवरश्रीश्रिम्बेकरोपनामकमौनिकुलमौलिमण्डनश्रीरङ्गनाथदीक्षितकुक्षिजविबुधवरश्रीबालकृष्णदीक्षिताङ्गज**रङ्गनाथविरचितायां** विक्रमोर्वशीप्रकाशिकायां द्वितीयाङ्कोन्मेषः ॥

---

१. **कथं om.**–सा. ए. २. उष्णालुः–सा. ए. ३. आलीयते षट्पदः–सा. ए.

## तृतीयोऽङ्कः

*(ततः प्रविशतो भरतशिष्यौ)*

**प्रथमः**—सखे [1] पेलव, [2] अग्निशरणाद् गच्छता महेन्द्रमान्दरमुपाध्यायेन त्वमासनं ग्राहितः। अहमग्निशरणरक्षार्थं स्थापितः। [3] ततः पृच्छामि गुरोः प्रयोगेण [4] देवपरिषदाराधिता न वेति।

**द्वितीयः**—गालव, ण आणे [5] कहं आराहिदा भोदि। तस्सिं उण सरस्सदीकिदकव्वबंधे लच्छीसअंवरे उव्वसी तेसु तेसु रसंतरेसु [6] उम्माइदा आसि। [गालव, न जाने कथमाराधिता भवति। तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषून्मादितासीत्।]

---

**प्रकाशिका**

इदानीं पेलवगालवाख्यभरतमुनिशिष्यमुखेन राज्ञः पुनरुर्वशीसमागमसूचनाय तत्प्रवेशं तावदाह—**ततः प्रविशत इति**। **प्रथमः**—शरणं गृहम्। 'शरणं गृहरक्षित्रोः शरणं रक्षणे वधे।' इति **विश्वलोचनः**। प्रयोगेण लक्ष्मीस्वयंवराख्यरूपकेण। परिषत् सभा। 'समज्या परिषत्' **इत्यमरः** (२–७–१५)। **द्वितीयः**—गालव, न जाने कथमाराधिता भवति। तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषून्मादितासीत्॥

**कोणेश्वरी**

**तत इति**। एतयोर्निष्क्रमानन्तरमित्यर्थः। **प्रथम इति**। तयोर्मध्ये मुख्य इत्यर्थः। **अग्नीति**। अग्न्यागारान्महेन्द्रागारं गच्छतेति योजना। गुरोरिति भरतस्येत्यर्थः। **द्वितीय इति**। तयोरपरस्तस्मादपकृष्ट इत्यर्थः। वचनरचनाक्रमेणैवैतद् व्यक्तीभविष्यति। **णेति**। न जाने कथमाराधिता भवति। तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषून्मत्ता आसीत्॥

**कुमारगिरिराजीया**

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं मिश्रविष्कम्भकं नाम अर्थोपक्षेपकं प्रस्तौति। ततः प्रविशतीत्यादि॥

---

१. पल्लव.—सा. ए. २. om.—सा. ए. ३. अतः—सा. ए. ४. दिव्य—सा. ए. ५. आराहिदा ण व त्ति—सा. ए. ६. उम्मदा—को; तम्मआ—सा. ए

**प्रथमः**–सदोषावकाश इव वाक्यशेषः ।

**द्वितीयः**–आम् । ताए[1] वअणं पमादक्खलिदं आसि । [आम् । तस्या वचनं प्रमादस्खलितमासीत् ।]

**प्रथमः**–किमिव ।

**द्वितीयः**–लच्छीभूमिआए वट्टमाणा उव्वसी वारुणीभूमिआए वट्टमाणाए मेणआए पुच्छिदा । समाअदा तेल्लोक्कपुरिसा सकेसवा लोअवाला । कदमस्सिं दे[2] हिअआहिणिवेसो त्ति । [लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेनकया पृष्टा । समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाः । कतमस्मिंस्ते हृदयाभिनिवेश इति ।]

---

**प्रकाशिका**

द्वितीयः—'आम्' इति स्मरणे । 'आमानुगुण्ये स्मरणे' इति **त्रिकाण्डी** । तस्या वचनं प्रमादस्खलितमासीत् । **द्वितीयः**—लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेनकया पृष्टा । समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाः । कतमस्मिंस्ते हृदयाभिनिवेश इति । भूमिका वेषपरिग्रहः । 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे' इति **विश्वः** (४.१५७) ॥

**कोणेश्वरी**

**स इति** । आसीदित्यनन्तरं सदोषविकाश इति शेषं दत्त्वा तव वाक्यं योजनीयमित्यर्थः । तेन उर्वशी तावदुन्मत्ता स दोषविकाश आसीदित्यर्थः । आमिति स्मृत्यभिनये । तस्या वचनं स्खलितमासीत् । **किमिति** कीदृगित्यर्थः । **लच्छीति** । लक्ष्मीभूमिकायां वर्तमाना उर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा । प्रश्नस्वरूपमाह—**समेति** । समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाश्च । कतमस्मिंस्ते हृदयाभिनिवेश इति ॥

**कुमारगिरिराजीया**

किन्तु आम् इत्यङ्गीकारे ॥

---

१. तहिं उव्वसीए—सा. ए. २. भावाहिणिवेसो—सा. ए.

**प्रथमः**–ततस्ततः ।

**द्वितीयः**–[1]ताए पुरिसोत्तमे त्ति भणिदव्वे पुरूरवसि त्ति णिग्गदा वाणी । [तस्याः पुरुषोत्तमे इति भणितव्ये पुरूरवसि इति निर्गता वाणी ।]

**प्रथमः**–भवितव्यतानुविधायीनि [2]बुद्धीन्द्रियाणि । न [3]तामभिक्रुद्धो मुनिः ।

**द्वितीयः**–सत्ता उवज्झाएण । महिंदेण उण [4]अणुगिहीदा । [शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुहीता ।]

---

प्रकाशिका

द्वितीयः तस्याः 'पुरुषोत्तमे' इति भणितव्ये 'पुरूरवसि' इति निर्गता वाणी । प्रथमः—भवितव्यतानुविधायीनि भाव्यनुसारीणि । द्वितीयः—शप्ता उपाध्यायेन महेन्द्रेण पुनरनुगृहीता ॥

कोणेश्वरी

ततस्तत इति । अनन्तरं किमभूत् तत् कथयेत्यर्थः । तत्रेति । तस्याः पुरुषोत्तम इति वक्तव्ये पुरूरवसीति निर्गता वाणी । भवितव्यतानुरूपं मानसादि चेष्टत इत्यर्थः ।

'कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियमिति' । (अमर १-४-८) । सत्तेति । शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुगृहीता । तदीयः शापोऽपि महेन्द्रस्य कृते तस्या अनुग्रह एवाभूदिति भावः ॥

कुमारगिरिराजीया

No commentary

---

१. तदो—सा. ए. २. इन्द्रियाणि—सा. ए. ३. खलु—गुरुः—सा. ए. ४. अणुग्गहिदा—सा. ए.

**प्रथमः**—कथमिव ।

**द्वितीयः**—जेण मम [1]तुए उवदेसो लंघिदो तेण ण दे दिव्वं ठाणं भविस्सदि त्ति उवज्झाअस्स सआसादो सावो । पुरंदरेण उण लज्जावणदमुहिं उव्वसिं पेक्खिअ एव्वं भणिदं । 'जस्सिं बद्धभावा सि तुमं तस्स मे रणसहाअस्स राएसिणो पिअं करणीअं । [2]ता दाव तुमं पुरूरवसं जहाकामं उवचिट्ठ जाव सो पडिदिट्ठसंताणो भोदि' त्ति । [येन मम त्वयोपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीत्युपाध्यायस्य सकाशाच्छापः । पुरन्दरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम्—'यस्मिन् बद्धभावासि त्वं तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयम् । तत् तावत्त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत् स परिदृष्टसन्तानो भवति' इति ।]

प्रकाशिका

**द्वितीयः**—'येन मम त्वयोपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यति' इत्युपाध्यायस्य सकाशाच्छापः । पुरन्दरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम्—'यस्मिन् बद्धभावासि त्वं तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयम् । तत् तावत् त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत् स परिदृष्टसन्तानो भवति' इति ॥

कोणेश्वरी

**प्रथमः**—कथमिव । शापः कीदृग् महेन्द्रानुग्रहो वा कीदृगित्यर्थः । **जेण** इति । येन मम त्वया उपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यति इत्युपाध्यायसकाशाच्छापो निर्गत इति शेषः । अनुग्रहमाह—**पुरंदरेणेति** । पुरन्दरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम् । किं तदित्यत आह—**जस्सिं इति** । यस्मिन् बद्धभावासि त्वं तस्य मे रणसहायस्य राजर्षेः प्रियं **करणीयमास्त इति शेषः** । तस्मात्त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत् स परिस्थितसन्तानो भवतीति । यावत् पुरूरवास्त्वयि सन्तानवान् भवति तावत् त्वं तत्स्थाने तिष्ठेत्यर्थः ॥

कुमारगिरिराजीया No Commentary

१. om.—सा. ए. २. सा—सा. ए.

**प्रथमः**—सदृशं पुरुषान्तरवेदिनो महेन्द्रस्य ।

**द्वितीयः**—*(सूर्यमवलोक्य)* कधापसंगेण अवरद्धा अहिसेअवेला । ता उवज्झाअस्स पासवत्तिणो होम्ह । [कथाप्रसङ्गेनापराद्धाभिषेकवेला । तदुपाध्यायस्य पार्श्ववर्तिनौ भवावः ।]

*(इति निष्क्रान्तौ)*

[1]विष्कम्भकः ।

---

**प्रकाशिका**

**द्वितीयः**—कथाप्रसङ्गेनापराद्धाभिषेकवेला । तदुपाध्यायस्य पार्श्ववर्तिनौ भवावः ॥

**विष्कम्भक इति** । तल्लक्षणं चाभणद् विश्वनाथकविराजः—

'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य कीर्तितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात् स तु संकीर्णो नीचमध्यप्रकल्पितः ॥'

(सा. द. ६-५५- ५६) इति ॥

**कोणेश्वरी**

**सदृशमिति** । पुरुषविशेषज्ञ एतदुचितमित्यर्थः । यद्वा पुरुषशब्देनात्र जनमात्रमाह । तेन जनस्योर्वश्या अन्तरं यन्मनस्तज्ज्ञस्य । तथा च वैवानुभावात्पुरूरवसो मनोज्ञतास्यामिति तज्ज्ञानादस्येदमेवोचितमित्यर्थः । **कधा इति** । कथायाः प्रसङ्गेनापराद्धा अभिषेकवेला तस्मादुपाध्यायपार्श्वपरिवर्तिनौ भवावः । अपराद्धा अतिक्रमितुमुद्यतेत्यर्थः । आदिकर्मणि क्तः । **विष्कम्भक इति** । तल्लक्षणं यथा—

कुतश्चित् स्वेच्छया प्राप्तः सम्बद्ध उभयोरपि ।
शुद्धविष्कम्भको ज्ञेयः कथांशस्यापि सूचकः ॥ इति ॥

**कुमारगिरिराजीया**

No commentary

---

१. मिश्र—सा. ए.

*(ततः प्रविशति कञ्चुकी)*

**कञ्चुकी—**

सर्वः कल्पे[1] वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात् पुत्रैरपहृतभरः कल्पते विश्रमाय ।
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां[2]
[3]सेवा कारापरिणतिरभूत् स्त्रीषु कष्टोऽधिकारः ॥१॥

(*परिक्रम्य*) आदिष्टोऽस्मि सनियमया काशिराजपुत्र्या [4]यथा-व्रतसंपादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः । तदेव मद्वचनाद् विज्ञापयेति" । [5]यावदहमवसितसन्ध्याकार्यं महाराजं पश्यामि । (*परिक्रम्यावलोक्य च*) रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि ।[6]

---

**प्रकाशिका**

कञ्चुकीति—कञ्चुकिलक्षणं दशरूपकादौ—

अन्तःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः ।
उक्तिप्रत्युक्तिकुशलः कञ्चुकीत्यभिधीयते ॥

इति । सर्वः कल्पे इति । सर्वः कुटुम्बी । कल्पे समर्थे । कॢपू सामर्थ्ये (धा. पा. ७६२) इति धातुः । वयसि तारुण्ये । अर्थान् द्रव्याणि विषयान् वा लब्धुं प्राप्तुं यतते प्रयत्नवान् भवति । 'अर्थः प्रयोजने वित्ते हेत्वभिप्रायवस्तुषु । शब्दाभिधेयविषये स्यान्निवृत्तिप्रकारयोः ॥' इति विश्वलोचनः । पश्चात्तारुण्योत्तरे वयसि पुत्रैरपहृतभरो गृहीतकुटुम्बभारो विश्रमाय विश्रान्त्यै कल्पते भवति । अस्माकं त्वियं सेवा प्रतिष्ठां, प्रकर्षेण स्था स्थितिः प्रतिष्ठा, विश्रमावस्थानं सादयन्ती नाशयन्ती । 'सादयन्ती

---

१. कल्ये—सा. ए. २. शरीरं—सा. ए. ३. सेवाकारा परिणतिरहो—सा. ए. ४. om.—सा. ए. ५. यावदिदानीमवसितसन्ध्याजाप्यं—सा. ए. ६. इह हि—सा. ए.

(*ततः प्रविशति कञ्चुकी*)

**कञ्चुकी—**

सर्वः कल्पे[1] वयसि यतते लब्धुमर्थान् कुटुम्बी
पश्चात् पुत्रैरपहृतभरः कल्पते विश्रमाय ।
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां[2]
[3]सेवा कारापरिणतिरभूत् स्त्रीषु कष्टोऽधिकारः ॥१॥

(*परिक्रम्य*) आदिष्टोऽस्मि सनियमया काशिराजपुत्र्या [4]यथा-व्रतसंपादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः । तदेव मद्वचनाद् विज्ञापयेति[5] । यावदहमवसितसन्ध्याकार्यं महाराजं पश्यामि । (*परिक्रम्यावलोक्य च*) रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि ।[6]

---

**प्रकाशिका**

कञ्चुकीति—कञ्चुकिलक्षणं दशरूपकादौ—
अन्तःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः ।
उक्तिप्रत्युक्तिकुशलः कञ्चुकीत्यभिधीयते ॥

इति । सर्वः कल्पे इति । सर्वः कुटुम्बी । कल्पे समर्थे । क्लृपू सामर्थ्ये (धा. पा. ७६२) इति धातुः । वयसि तारुण्ये । अर्थान् द्रव्याणि विषयान् वा लब्धुं प्राप्तुं यतते प्रयत्नवान् भवति । 'अर्थः प्रयोजने वित्ते हेत्वभिप्रायवस्तुषु । शब्दाभिधेयविषये स्यान्निवृत्तिप्रकारयोः ॥' इति विश्वलोचनः । पश्चात्तारुण्योत्तरे वयसि पुत्रैरपहृतभरो गृहीतकुटुम्बभारो विश्रमाय विश्रान्त्यै कल्पते भवति । अस्माकं त्वियं सेवा प्रतिष्ठा, प्रकर्षेण स्था स्थितिः प्रतिष्ठा, विश्रमावस्थानं सादयन्ती नाशयन्ती । 'सादयन्ती

---

१. कल्ये—सा. ए. २. शरीरं—सा. ए. ३. सेवाकारा परिणतिरहो—सा. ए. ४. om.—सा. ए. ५. यावदिदानीमवसितसन्ध्याकार्यं—सा. ए. ६. इह हि—सा. ए.

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः संदिग्धपारावताः ।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो[1] जनः ॥२॥

(*नेपथ्याभिमुखं दृष्ट्वा*) अये, इत एव प्रस्थितो देवः ।

परिजनवनिताकरार्पिताभिः
परिवृत एष विभाति दीपिकाभिः ।
गिरिरिव गतिमानपक्षसादाद्[2]
अनुतटपुष्पितकर्णिकारयष्टिः ॥३॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि ।

(*ततः प्रविशति यथानिर्दिष्टः सपरिजनो[3] राजा विदूषकश्च*)

**राजा**—(*आत्मगतम्*)

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं तु रात्रिर्गमयितव्या ॥४॥

---

**प्रकाशिका**

**उत्कीर्णा इति ।** उत्कीर्णाष्टङ्कव्यक्तीकृतस्वरूपाः । वासयष्टिषु पक्षिनिवासार्थं निखातच्छन्नाकारवंशेषु । बर्हिणो मयूराः । 'मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्' इत्यमरः (२-५-३१) । जालेभ्यो गवाक्षेभ्यो निःसृतैरगुर्वादिधूपैर्वलभयश्चन्द्रशालाख्यानि शिरोगृहाणि । सन्दिग्धाः संशयिताः पारावताः कपोता यत्र । 'जालं तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति **विश्वलोचनः** । 'वलभी चन्द्रशालिका' इति **त्रिकाण्डशेषः** । 'पारावतः कलरवः कपोतः' इति **त्रिकाण्डी** (२-५-१५)। आचारे प्रयतस्तत्परः, सदाचारपवित्रो वा । 'पवित्रः प्रयतः पूतः' इति **त्रिकाण्डी** (२-७-४५)। सपुष्पबलिषु सकुसुमोपहारेषु । 'बलिः पूजोपहारयोः' इति च सा (३-३-१९५) । 'शुद्धान्तश्चावरोधश्च' इति च (२-१-१२) ॥२॥ **परिजनेति ।** पक्षसादः पक्षच्छेदः । पश्चात्तत्त्वम् । कर्णिकारयष्टयो वृक्षोत्पलाख्यवृक्षशाखाः ॥३॥

---

१. वृद्धाजनः—कु. २. लोपाद्—सा. ए. ३. om.—सा. ए.

## प्रकाशिका

**कार्यान्तरितेति**। कार्यै राजकृत्यैरन्तरिता स्थगिता उत्कण्ठा यस्मिन्। 'उत्कण्ठोत्कलिके समे' इत्यमरः (१-६-२९)। अनतिकृच्छ्रेणेषत्कष्टेन। 'स्यात् कृच्छ्रं काष्टमाभीलम्' इति सः (१-८-४)। अविनोदोऽसन्तोषः ॥४॥

## कोणेश्वरी

**उत्कीर्णा** इति। निशासम्बन्धिनिद्रालसा बर्हिणो मयूरा वसतियष्टिषूत्कीर्णा इव उत्तम्भिता इव प्रतिभान्तीत्यर्थः। गवाक्षविनिःसृतैर्धूपैर्धूपधूमैर्वलभयः सन्दिग्धपारावताः प्रतिभान्ति। धूपधूमैरेकवर्णतया विशिष्य न गृह्यन्ते। बद्धा धूमा एव समानवर्णतया पारावतत्वेन सन्देहविषया भवन्तीत्यर्थः। आचारप्रयतः साचारः शुद्धान्तवृद्धो जनोऽन्तःपुरस्थवृद्धस्त्रीलोकः सपुष्पबलिषु पुष्पोपहारसहितेषु (बलिषु) अर्चिष्मतीर्वर्तमानग्रथिताः सन्ध्यामङ्गलदीपिकाः सायंसमयदेया मङ्गल्या दीपिका विभजते। तत्र पृथक्तया ददातीत्यर्थः ॥२॥

**परिजनेति**। परिजनवनिताहस्तदत्ताभिर्दीपिकाभिर्यत्र स परिवृतत्वेन विभाति शोभते। क इव। प्रतितटकुसुमितकर्णिकारयष्टिर्गिरिरिव। नन्वसौ चलति स त्वचल इति नानुरूपोऽयं दृष्टान्त इत्यत आह—**गतिमानिति**। अपक्षसादात् पक्षविगमात् पूर्वं गतिमान्। तत्कालीनो गिरिरत्र निदर्शनमित्यर्थः ॥३॥ **अवलोकेति**। अवलोकनयोग्यवर्त्मनीत्यर्थः ॥

**कार्येति**—कार्ये व्यग्रतयोत्कण्ठाया अन्तरितत्वेन दिनं तावदतिकष्टं विनैव मया नीतम्। रात्रिः कथं गमयितव्या। तद्यापने कोऽप्युपायो नास्तीत्यर्थः। अयापनीयत्वप्रयोजकं रूपमाह—**अविनोदेति**। नु सम्बोधने ॥४॥

## कुमारगिरिराजीया

**उत्कीर्णा इत्यादि**। निशानिद्रालसा बर्हिणो मयूरा वासयष्टिषु निवासस्तम्भेषूत्कीर्णा इव उल्लिखिता इव। रचिता इवेत्यर्थः। वलभयः सौधप्रदेशभेदा जालविनिर्गतैर्गवाक्षविनिःसृतैर्धूपैः सुरभिधूपैः संदिग्धपारावताः संदिग्धाः संशयिताः पारावता यासु तास्तथोक्ताः। आचारप्रयत आचारेण प्रयतः पवित्रः शुद्धान्तवृद्धाजनः शुद्धान्तेऽन्तःपुरे वृद्धाजनो वृद्धस्त्रीजनः सपुष्पबलिषु पुष्पोपहारसहितेषु स्थानेषु चित्रप्रदेशेष्वर्चिष्मतीः प्रकाशातिशयवतीः सन्ध्यामङ्गलदीपिकाः सन्ध्यायां मङ्गलार्थं दीपान् विभजते विभक्तान् करोति। तत्र तत्र निवेशयतीत्यर्थः ॥२॥

**परिजनेत्यादि**। स्पष्टोऽर्थः ॥३॥

**कार्यान्तरितेत्यादि**। स्पष्टोऽर्थः ॥४॥

**कञ्चुकी**–(*उपसृत्य*[1]) जयतु जयतु देवः । देव, देवी विज्ञापयति 'मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद् [2]रोहिणीसंयोगः' इति ।

**राजा**–विज्ञाप्यतां देवी यस्तव च्छन्द इति ।

**कञ्चुकी**–[3]यदाज्ञापयति देवः ।

(*इति निष्क्रान्तः*)

**राजा**–वयस्य, किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ।

**विदूषकः**–[4]तक्केमि संजादपच्छादावा तत्थभोदी[5] वदव्ववदेसेण अत्थभवदो पणिपादलंघणं पमज्जिदुकाम त्ति । [तर्कयामि संजातपश्चात्तापा तत्रभवती व्रतव्यपदेशेन अत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति ।]]

---

प्रकाशिका

सुदर्शनः शोभनदर्शनः, सुखेन दृश्यते इति वा । छन्दोऽभिप्रायः । अभिलाष इति यावत् । 'अभिप्रायवशौ छन्दौ' इति त्रिकाण्डी (३-३-८८) । विदूषकः—तर्कयामि संजातपश्चात्तापा तत्रभवती व्रतव्यपदेशेन अत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति । व्यपदेशो मिषम् ॥

कोणेश्वरी

देवेनेति । चन्द्रस्य रोहिणीसम्बन्धं यावद् देवेन तत्रावस्थेयमित्यर्थः । छन्द इति । अभिप्राय इत्यर्थः । 'अभिप्रायवशौ छन्दौ' इति कोशात् (अमर. ३-३-८८) । तक्केमीति । तर्कयामि संजातपश्चात्तापा तत्रभवती व्रतव्यपदेशेन अत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति । यत् त्वदीयप्रणिपातोऽनया पुरा लङ्घितस्तत्रास्याः पश्चात्तापोऽभूत् ततो व्रतव्याजेन भवन्तमनुनेष्यतीति मम तर्क इत्यर्थः ॥

कुमारगिरिराजीया No commentary

---

१. उपगम्य—सा. ए. २. चन्द्ररोहिणीसंयोगः—सा. ए. ३. तथा—सा. ए. ४. भो—सा. ए. ५. तत्थभोदी वदावदेसेण—सा. ए.

**राजा**—उपपन्नं भवानाह । तथा हि ।

अवधूतप्रणिपाताः पश्चात् सन्तप्यमानमनसोऽपि ।
निभृतैर्व्यपत्रपन्ते [१]दयितानुशयैर्मनस्विन्यः ॥५॥

तदादेशय मणिहर्म्यपृष्ठस्य मार्गम् ।

**विदूषकः**—इदो इदो एदु[२] भवं । इमिणा गंगातरंगसिसिरेण[३] [४]फलिअमणिसिलासोवाणेण आरोहदु भवं सव्वदा[५] रमणीअं मणिहम्मपिट्ठअलं । [इत इत एतु भवान् । अनेन गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेनारोहतु भवान् सर्वदा रमणीयं मणिहर्म्यपृष्ठतलम् ।]

[६] (*राजा आरोहति । सर्वे सोपानारोहणं नाटयन्ति*)

---

**प्रकाशिका**

उपपन्नं युक्तम् । अवधूतप्रणिपाता इति । अवधूतस्तिरस्कृतः । निभृतैर्गुप्तैः । दयितविषयकैरनुशयैः पश्चात्तापैर्व्यपत्रपन्ते लज्जन्ते । 'विविधैरनुतप्यन्ते' इति पाठे विविधैर्नानाप्रकारकैर्दयितानुशयैः प्रियानुबन्धैरनुतप्यन्ते पश्चात्तापवत्यो भवन्ति । 'दीर्घद्वेषानुतापानुबन्धेष्वनुशयः पुमान्' इति विश्वलोचनः ॥५॥

**विदूषकः**—इत इत एतु भवान् । अनेन गङ्गातरङ्गशिशिरेण स्फटिकममणिशिलासोपानेनारोहतु भवान् सर्वदा रमणीयं मणिहर्म्यपृष्ठतलम् ॥

**कोणेश्वरी**

कथमुपपन्नमित्यत आह-अवधूतेति । अगृहीतदयितकृतचरणप्रणिपाता मनस्विन्यो विविधैर्दयितानुनयैरर्थात् स्मृतिपथं गतैरनुतप्यन्ते क्लिश्यन्ति । ननु तथा चेद् दृढनिश्चयाः कथं क्लिश्यन्तीत्याह-पश्चादिति । पश्चात्तापमुक्तचित्ता यतः । अग्रे तथा निश्चयशून्या इत्यर्थः ॥५॥

अमुना गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेनारोहतां सर्वदा रमणीयं मणिहर्म्यतलम् ॥

**कुमारगिरिराजीया**

अवधूता इति । स्पष्टोऽर्थः ।

---

१. दयितानुनयैः—सा. ए. २. om.—सा. ए. ३. सस्सिरीएण—सा. ए. ४. फलिहमणिसोवाणेण—सा. ए. ५. पदोसावसररमणीअं मणिहम्मिअं—सा. ए. ६. राजा—आरोहावतः ।—सा. ए.

**विदूषकः**–([1] *निरूप्य*) पच्चासण्णेन चंदोदएण होदव्वं। जह[2] तिमिरेण अदिरेईअमाणं पुव्वदिसामुहं [3]आलोहिअप्पहं दीसदि। [प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम्। यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते।]

**राजा**–सम्यग् भवान् मन्यते।

उदयगूढशशाङ्कमरीचिभिस्
तमसि दूरतरं प्रतिसारिते।
अलकसंयमनादिव लोचने
हरति मे हरिवाहनदिङ्मुखम् ॥६॥

---

प्रकाशिका

**विदूषकः**–प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते। **उदयगूढेति**। उदयगूढा उदयाचलेन च्छन्नाः। दूरतरमत्यन्तम्। प्रतिसारिते दूरीकृते। अलकानां केशानां संयमनात्-नियमनात्। हरिवाहन इन्द्रः। 'जम्भभेदी हरिहयः' इति **त्रिकाण्डो**(१ १-४३)॥६॥

कोणेश्वरी

**पच्चेति**। प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम्। कथं ज्ञायते अत आह-**जधेति**। यथा तिमिरेण विरेच्यमानं दिङ्मुखमालोहितप्रभमिव दृश्यते। निगदव्याख्यातमेतत्। **उदयेति**। हरिर्वाहनं यस्य स हरिवाहनश्चन्द्रः (इन्द्रः) तस्य दिक् तस्या मुखं मम लोचने हरत्याकर्षति। उदयसमये संगुप्तशशाङ्कमरीचिभिस्तमस्यतिदूरमतिसारिते सति यथा अलकसंयमनाद् दिङ्मुखं नायिकामुखं लोचनहारि भवतीत्यर्थः ॥६॥

कुमारगिरिराजीया

**उदयगूढेत्यादि**। स्पष्टोऽर्थः ॥

---

१. विलोक्य–सा. ए. २. जधा तिमिररेईअमाणं–सा. ए. ३. आलोअसुहअं–सा. ए.

**विदूषकः**—ही ही भो, एसो खंडमोदअसरिसो[1] उदिदो राआ ओसधीणं[2] [ही ही भोः, एष खण्डमोदकसदृश उदितो राजा ओषधीनाम् ।]

**राजा**—(*सस्मितम्*) सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः । (*प्राञ्जलिः प्रणम्य*) भगवन् ऋक्षराज[3] ।

रविमाविशते[4] सतां क्रियायै
सुधया तर्पयते पितॄन् सुरांश्च ।
तमसां निशि मूर्च्छतां निहन्त्रे
हरचूडानिहितात्मने नमस्ते ॥७॥

---

**प्रकाशिका**

**विदूषकः**—'ही ही चित्रे स्याताम्' इति सागरः । भोः, खण्डमोदकसदृश उदितो राजा ओषधीनाम् । औदरिकस्याद्यूनस्य । 'आद्यूनः स्यादौदरिकः' इति **त्रिकाण्डी** (३-१-२१) । ऋक्षराजश्चन्द्रः । 'नक्षत्रमृक्षं भं तारा' इति सा । **रविमाविशते इति** । सतां साधूनां क्रियायै दार्शिकपिण्डपितृयज्ञादिक्रिया-हेतवे रविमाविशते सूर्यं संगतवते । 'रुचिमावहते' इति पाठे साधूनां क्रियायै कर्मकरणाय रुचिं प्रीतिमावहते कुर्वाणाय । सुधयामृतेन पितॄनग्निष्वात्तादीन् सुरांश्च देवांस्तर्पयते प्रीणयते । पितृदेवतर्पणं च 'प्रथमां पिबते वह्निः' इत्यादि सोमोत्पत्तौ सुप्रसिद्धम् । हरचूडायां निहित आत्मा कलात्मको देहो येन ॥७॥

**कौणेश्वरी**

**ही हीति** । 'ही ही वैदूषके हर्षे' इति निपातनात् ही ही शब्दो विदूषक-हर्षमाह । भोः, एष खण्डमोदकसदृश उदितो राजा ओषधीनाम् । प्रथमोदि-तत्वेन लोहितत्वात् खण्डनकसादृश्यम् । **सर्वत्रेति** । उदरपरायणस्य सर्वत्र भक्ष्यमेवेन्द्रियगोचर इत्यर्थः ।

**रुचिमिति** । भगवन् ऋक्षराज ते तुभ्यं नमः अस्तु इत्यध्याहारः । नमस्यताप्रयोजकं रूपमाह—सतामिति । सतां समीचीनानां क्रियानिमित्तं रुचिमुद्द्योतमावहते दधानायेत्यर्थः । पितॄन् कव्यवालादीन् (?) सुरानिन्द्रादीन् सुधयाऽमृतेन तर्पयते प्रीणयते । निशि मूर्च्छतां समुच्छ्रायवतां तमसां निहन्त्रे

---

१. सस्सिरीओ—सा. ए. २. दुआदीणं—सा. ए. ३. क्षपानाथ—सा. ए. ४. मावसते—सा. ए. । रुचिमावहते—को.

**विदूषकः**—भो, बम्हणसंकामिदक्खरेण दे पिदामहेण अब्भणुण्णादो सि । ता आसणगदो होहि । जेण अहं वि सुहासीणो होमि । [भोः, ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि । तदासनगतो भव । येनाहमपि सुखासीनो भवामि । ]

**राजा**—(*विदूषकवचनं परिगृह्योपविष्टः । परिजनं विलोक्य*) अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन । तद्विश्राम्यन्तु भवत्यः । ]

**परिजनः**—जं देवो आणवेदि । [यद् देव आज्ञापयति । ]

(*इति निष्क्रान्तः*)

---

**कोणेश्वरी**

निरवशेषं घातकाय । हरचूडायां निहित आत्मा येन तादृशाय । चूडाशब्देन तदाश्रय उपलक्ष्यते । एतावता सर्वत्र समीचीनपक्षरक्षादक्षत्वेन तत्पक्षानुकूलतया मामप्यनुकूलयेति भावः ॥७॥

**कुमारगिरिराजीया**

**रविमावसते** इत्यादि । सतां सज्जनानां क्रियायै अनुष्ठानाय रविं सूर्यमावसते संक्रामते । 'उपान्वध्याङ्वसः' (पा. १.४.४८) इत्यधिकरणस्य कर्मसञ्ज्ञा । सुधयाऽमृतेन सुरान् देवान् पितॄन् पितृदेवतांश्च तर्पयते प्रीणयते । निशि मूर्च्छतां प्रवर्धमानानां तमसां निहन्त्रे विनाशयित्रे । हरचूडानिहितात्मने हरस्य चूडायां मौलौ निहितो विन्यस्त आत्मा मूर्तिर्यस्य स तथोक्तस्तस्मै ते तुभ्यं नमः ॥७॥

**प्रकाशिका**

**विदूषकः**—भोः, ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि । पितामहश्चन्द्रः । अभ्यनुज्ञाऽनुमतिः । तदासनगतो भव । येनाहमपि सुखासीनो भवामि । **परिजनः**—यद् देव आज्ञापयति ॥

**कोणेश्वरी**

भो इति । भोः, ब्राह्मणसंक्रामिताक्षरेण पितामहेनाभ्यनुज्ञातोऽसि । मन्मुखेन चन्द्रस्तव जनकजनकस्त्वामिदमाहेत्यर्थः । किं तदित्याकाङ्क्षायामाह—आसनगतो भव । मयि प्रार्थना वृत्तैव इदानीमुपरिग ता वदिति (?) त्वामाहेत्यर्थः । ततः किमत आह—तेणेति । तेनाहमपि सुखासीनो भवामि । श्लोकेन परिजनानेकान्तार्थमपनयति-अभिव्यक्तेति । चन्द्रिकाभिरेव दीपिकाकार्यकरणादित्यर्थः ।

**कुमारगिरिराजीया** No commentary

राजा–(चन्द्रमवलोक्य) वयस्य, परं मुहूर्तादागमनं देव्याः। तद् विविक्ते कथयामि स्वामवस्थाम्।

विदूषकः–[१]भो, ण दीसदि एसा। किं दु ताए[२] तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबंधेण अत्ताणं धारेदुं। [भोः, न दृश्यत एषा। किं तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम्।]

राजा–एवमेतत्। बलवान् पुनर्मम मनसोऽभितापः।

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः।
विघ्नितसमागमसुखो मनसिशयस्त्वनुगुणो[३] भवति ॥८॥

---

### प्रकाशिका

**विदूषकः**–भोः, न दृश्यत एषा। किं तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम्। **नद्या इवेति**। विषमा निम्नोन्नताः शिलास्तद्रूपं सङ्कटं तत्र स्खलितवेगः प्रतिबद्धरयः। मनसिशयः कामः ॥ ८ ॥

### कोणेश्वरी

**परमिति**। मुहूर्तादनन्तरमित्यर्थः। **भो इति**। भोः, न दृश्यत एवैषा किं तु सदृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम्। यद्यप्युर्वशी संप्रति नागतास्ति तथापि युवयोस्तुल्य एवानुरागः। अन्योन्यमालोचितमेवाकलय्य प्रत्याशया तावदात्मानमवलम्बतां भवानिति भावः।

एवमिति आशावत्त्वेन। अन्योन्यं परिकलितानुरागः प्राणधारणं क्षमेतेत्येव। मम पुनर्मनसि महतीव बाधेति किंचित् परिदेवनेनाशार्थं नयामीत्यर्थः। कथं महतीत्यत आह—**नद्या इति**। विघ्नितसमागमसुखः पुनर्मनसिशयोऽनुगुणीभवति। अनधिकोऽप्यधिको जायते यत इत्यर्थः। अनुरूपं दृष्टान्तमाह—**नद्या इति**। यथा विषमशिलया निम्नोन्नतप्रस्तरेण यः सङ्कटो दुःखस्तत्र स्खलितो वेगोऽतिसत्वरगतिर्यस्यैवंभूतो नद्याः प्रवाहः पूरोऽतिशयितो भवति तथाऽयमपि स्खलितसमागमसुखोऽतिशयित इत्यर्थः ॥ ८ ॥

### कुमारगिरिराजीया

**एवमेतत्**। अत्रोर्वशीप्राप्तिसम्भावनाया गम्यमानत्वात् प्रत्याशा नाम तृतीयावस्था सूचिता। बलवान् खलु मे मनसोऽभिलाषः। अत्र प्रसञ्जितस्य बीजस्य प्राप्त्याशया समन्वयाद् गर्भसन्धिरिति मन्तव्यमिति। **नद्या इवेत्यादि**। स्पष्टोऽर्थः ॥८॥

---

१. ण दीसदि एव्व सा सा. ए. २. ताए om.–सा. ए. ताए सरिसं–को
३. शतगणी–सा. ए.

**विदूषकः**-जधा परिहीअमाणेहिं अंगेहिं [1]सोहसि तधा अच्छरेहिं [2]समागमं दे पेक्खामि । [यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे ।]

**राजा**-*(निमित्तं सूचयन्[3])*

वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।
[4]अयमास्पन्दितैर्बाहुराश्वासयति दक्षिणः ॥९॥

---

**प्रकाशिका**

**विदूषकः**—यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे । निमित्तं शकुनस्वरूपम् । **वचोभिरिति** । आशाजननैर्वचोभिर्भवानिव दक्षिणोऽपसव्योऽयं बाहुरास्पन्दितैः स्फुरणैर्गुरुव्यथमर्थान्मामाश्वासयति समाधत्ते । दक्षिणश्चतुरो हि दुःखितमाश्वासयति । 'आश्वासयति मे मनः' इत्यपि क्वचित् पाठः स्फुटार्थः ॥ ९ ॥

**कोणेश्वरी**

**जधेति** । यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे । शरीरे क्षीयमाणे तावन्न शोभा जायत इत्यत्र दृश्यते । यदि पुनः शोभासमुदयस्तथापि दृश्यतेऽतोऽहं तवाप्सरःप्राप्तावनुकूलमेतत्तर्कयामीत्यर्थः । अप्सरःशब्दस्य बहुवचन एव बाहुल्येव प्रयोग दर्शनादप्सरोभिरित्येकत्वेऽपि बहुवचनम् । क्वाचित्कं त्वेकवचनमपि ।

**निमित्तमिति** । दक्षिणबाहुस्पन्दनमुपलभमान इत्यर्थः । तदेव प्रकटयति **वचोभिरिति** । अयं दक्षिणो बाहुरास्पन्दितैर्गुरुव्यथंमामाश्वासयति वचोभिर्भवानिव । आशाजननैरित्युभयत्र सम्बध्यते । यद्यपि दक्षिणबाहुस्पन्दमात्रं नोत्तमस्त्रीलाभसूचकं किं तु अङ्गप्रदेशे तत्स्पन्दः तथापि सामान्यतोऽभीष्टलाभनिमित्तता तस्यास्ति । प्रकृते तूर्वशीलाभस्यैवेष्टत्वेन तल्लाभसूचकत्वेन वचस इवाश्वासजनकत्वमिति भावः । तद्देशस्पन्द एवात्र विवक्षितः ॥ ९ ॥

**कुमारगिरिराजीया**

**वचोभिरित्यादि** । वचोभिरित्यत्र बाहुस्पन्दस्योर्वशीप्राप्तिहेतुत्वादनुमानं नाम सन्ध्यङ्गमुक्तं भवति ॥ ९ ॥

---

१. अहिअं—सा. ए. २. अङ्करे—सा. ए. ३. सूचयित्वा । वयस्य—सा. ए. ४. अयं मां स्पन्दितैः—सा. ए.

**विदूषकः**—ण क्खु अण्णधा बम्हणस्स वअणं भोदि[१]। [न खल्वन्यथा ब्राह्मणस्य वचनं भवति ।]

(*राजा सप्रत्याशस्तिष्ठति*)

(*ततः प्रविशत्याकाशयानेन* [२]*कृताभिसरणवेषा उर्वशी चित्रलेखा च*)

**उर्वशी**—(*आत्मानं विलोक्य*) सहि, रोअदि दे मे [३]अअं [४]मोत्ताहरणभूसिदो [५]णीलंसुअपरिग्गहो अहिसारिआवेसो। [सखि, रोचते ते मेऽयं मुक्ताभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः ।]

---

**प्रकाशिका**

**विदूषकः**—न खल्वन्यथा ब्राह्मणस्य वचनं भवति ।

अभिसरणवेषः प्रियं प्रति गमनोचितो वेषः । उर्वशी—सखि, रोचते ते मेऽयं मुक्ताभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः । मुक्ताभरणस्त्यक्तभूषणस्तथापि भूषितः । मुक्ताफलरूपाभरणमित्यर्थस्त्वन्धकाराभिसारिकाया विरुद्ध इति ध्येयम् । 'अल्पाभरणभूषितः' इत्यपि पाठः । अभिसारिकालक्षणं तु—

हित्वा लज्जां समाकृष्टा मदनेन मदेन वा ।
अभिसारयते कान्तं स्वयं वा साऽभिसारिका ॥ (ना. शा. २२-२२०) इति ॥

**कोणेश्वरी**

निमित्तसंवादेन सगर्वमाह—णेति । नान्यथा ब्राह्मणस्य वचनं भवति तथा चावश्यं तेऽभीष्टकामो भवितेति भावः ।

**सहि** इति । सखि, रोचते मे अयं मुक्ताभरणभूषितो नीलमणिपरिग्रहोऽभिसारिकावेषः । नीलमणेरिन्द्रनीलस्य परिग्रहो यत्रेत्यर्थः । ममाऽयं वेषो भवत्यै रोचते न वेति पृच्छामीत्यर्थः ॥

**कुमारगिरिराजीया**

न खल्वन्यथा ब्राह्मणस्य दर्शनं ज्ञानम् । प्रविश्येत्यादि । किंचित् क्षीबा ईषन्मत्ता । अभिसारिकावेषा अभिसारिकाया वेष इव वेषो यस्याः सा तथोक्ता । अभिसारिकालक्षणमुक्तं वसन्तराजीये । यथा—

---

१. om.—सा. ए. २. अभिसारिकावेषा—सा. ए. किंचित् क्षीबा-को ३. om.—सा. ए. ४. अप्पाहरण—सा. ए. ५. णीलमणिपरिग्गहो—को.

**चित्रलेखा**–णत्थि मे वाआविहवो पसंसिदुं । इदं तु चिंतेमि । अवि णाम अहं एव्व[1] पुरूरवा भवेअं ति । [नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहमेव पुरूरवा भवेयमिति ।]

**उर्वशी**–सहि, [2]असमत्था क्खु अहं । तुमं आणेहि तं सिग्घं । णेहि मं तस्स वा सुहअस्स वसदिं । [सखि, असमर्था खल्वहम् । त्वमानय तं शीघ्रम् । नय मां तस्य वा सुभगस्य वसतिम् ।]

**चित्रलेखा**–णं [3]पडिबिंबिअं विअ जामिणीजमुणाए केलास-सिहरसस्सिरीअं दे पिअदमस्स भवणं उवगदम्ह । [ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसश्रीकं ते प्रियतमस्य भवनमुपगते स्वः ।]

**उर्वशी**–तेण हि पहावेण जाणाहि[4] कहिं सो मम हिअअचोरो किं वा अणुचिट्ठदि त्ति । [तेन हि प्रभावेण जानीहि कुत्र स मे हृदयचोरः किं वानुतिष्ठतीति ।]

---

कुमारगिरिराजीया

मदेन मदनेनापि प्रेरिता शिथिलत्रपा ।
योत्सुकाभिसरेत् कान्तं सा भवेदभिसारिका ॥
कुलजां गणिकां प्रेष्यां यथार्हैर्वेषचेष्टितैः ।
रागातिशयसंपन्नां वर्णयेदभिसारिकाम् ॥

इति ॥

---

१. om–सा. ए. २. मअणो क्खु तुमं आणवेदि । सिग्घं मं णेहि तस्स सुहअस्स वसदिं–सा. ए. ३. एदं पडिबद्धिदं विअ केलाससिहरं–सा. ए. ४. दाव–सा. ए.

**चित्रलेखा**–([1]*आत्मगतम्*) भोदु, कीडिस्सं[2] दाव एदाए सह। (*प्रकाशम्*) हला, [3]दिट्ठो मए। उवहोअक्खमे ओआसे मणोरहलद्धं पिआसमाअमसुहं अणुहवंतो चिट्ठदि[4]। [भवतु, क्रीडिष्ये तावदेतया सह। सखि, दृष्टो मया। उपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति।]

---

### प्रकाशिका

**चित्रलेखा**–नास्ति मे वाग्विभवः प्रशंसितुम्। इदं तु चिन्तयामि। अपि नामाहमेव पुरूरवा भवेयमिति। अपि नामेति संभावनायाम्। **उर्वशी**–सखि, असमर्था खल्वहम्। त्वमानय तं शीघ्रम्। नय मां तस्य वा सुभगस्य वसतिम्। **चित्रलेखा**–ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसश्रीकं ते प्रियतमस्य भवनमुपगते स्वः। **उर्वशी**–तेन हि प्रभावेण जानीहि कुत्र स मे हृदयचोरः किं वाऽनुतिष्ठतीति॥

### कोणेश्वरी

**णत्थीति**। नास्ति वाग्विभवः प्रशंसितुम्। इदं तु चिन्तयाम्यपि नामाहमेव पुरूरवा भवेयमिति। प्रशंसां कर्तुं न शक्नोमि। तवेमं वेषं विलोक्य पुरूरवोभावभजनायाहमाकाङ्क्षामीत्यर्थः। यद्यहं पुरूरवाः स्यां तदा ममैवास्य वेषस्य भोगः स्यादिति भावः। **सहीति**–सखि, असमर्था खल्वहमतस्त्वमानय तं शीघ्रं नय मां वा तस्य सुभगस्य वसतिम्। मम तन्नामश्रवणादिदानीं स्तम्भोऽपि। चतुर्थी दशा समुत्पन्नेति तद्दर्शने मम त्वरयेतिभावः। **णमिति**। ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरस्य संगाकं (समानं) प्रियतमस्य भवनमुपगते स्वः। त्वमनध्यवसायं मा कुरु। यमुनेव या यामिनी तस्यां कैलासशिखरं प्रतिबिम्बितमिव तस्य भवनं दर्शनविषयो जातमिति भावः।

तेन हि स्वीकारे। ज्ञातमित्यर्थः। **पहावेण** इति। प्रभावेण जानीहि कस्मिन् स मम हृदयचौरः किं वा अनुतिष्ठतीति। स कस्मिन् प्रदेशे कस्मिन् वाऽवसरे किं वा सांप्रतं करोतीति प्रभावात् त्वं बुध्यस्वेत्यर्थः॥

### कुमारगिरिराजीया

ननु एतत्परिवर्तितमिव रूपान्तरेण परिणतमिव॥

---

१. ध्यात्वा–सा. ए. २. कीलिस्सं–सा. ए. ३. om–सा. ए. ४. (उर्वशी विषादं नाटयति) **चित्रलेखा–मुद्धे** का उण अण्णा चिंता पिआसमाअमस्स। **उर्वशी**–(सोच्छ्वासम्) अदक्खिणं संदिहदि मे हिअअं।–सा. ए.

**उर्वशी**–[1]अवेहि । हिअअं मे ण पत्तीअदि । हला चित्तलेहे, हिअए काउण किं वि जप्पसि । पिअसमागमस्स अग्गदो एव्व अणेण अवहरिदं मे हिअअं । [अपेहि । हृदयं मे न प्रत्येति । सखि चित्रलेखे, हृदये कृत्वा किमपि जल्पसि । प्रियसमागमस्य अग्रत एवानेनापहृतं मे हृदयम् । ]

**चित्रलेखा**–[2]एसो मणिहम्मप्पासादगदो वअस्समेत्तसहाओ राएसी । [3]ता उवसप्पम्ह । [एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः । तदुपसर्पावः । ]

(*उभे अवतरतः*)

**राजा**–वयस्य, रजन्या सह विजृम्भते मदनबाधा ।

**उर्वशी**–अणिब्भिण्णत्थेण इमिणा वअणेण आकंपिदं मे हिअअं । अंतरिदा[4] सुणुम्ह[5] आलावं जाव णो संसअच्छेओ होदि[6] । [अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम् । अन्तरिते शृणुव आलापं यावदावयोः संशयच्छेदो भवति ।]

**चित्रलेखा**–जं दे रोअदि । [यत् ते रोचते । ]

---

**प्रकाशिका**

**चित्रलेखा**–भवतु, क्रीडिष्ये तावदेतया सह । सखि, दृष्टो मया । उपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति ।।

**कोणेश्वरी**

**भोदु** इति । भवतु । क्रीडिष्यामि तावेदतया सह । **कौतुकं** किंचिदनया समं विधास्यामीत्यर्थः । **हला** इति । हला दृष्टो मया । उपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति ।।

**कुमारगिरिराजीया**

**मनोरथलब्धमिति** । अत्र कपटकल्पनाया गम्यमानत्वादभूताहरणं नाम सन्ध्यङ्गमुक्तं भवति ।।

---

१. अवेहि–मे हिअअं om.–सा. ए. २. (विलोक्य) एसो मणिहम्मि-अगदो–सा. ए. ३. ता एहि । उवसप्पम्ह णं–सा. ए. ४. एव्व–सा. ए. ५. से सेब्भलावं–सा. ए. ६. भोदि–सा. ए.

**विदूषकः**–णं इमे अमिअगब्भा सेवीअंतु चंदवादा। [ननु इमे अमृतगर्भाः सेव्यन्तां चन्द्रपादाः। ]

### प्रकाशिका

**उर्वशी**–अपेहि। हृदयं मे न प्रत्येति। सखि चित्रलेखे, हृदये कृत्वा किमपि जल्पसि। प्रियसमागमस्याग्रत एवानेनापहृतं मे हृदयम्। 'उर्वशी' इत्यारभ्य पाठान्तरमपि क्वचिद् यथा–'विषादं नाटयन्ती **चित्रलेखा**-मुग्धे, का पुनरन्या चिन्ता प्रियसमागमस्य। **उर्वशी**–सखि, अदक्षिणं संदिह्यति मे हृदयम्।' अदक्षिणमस्वाधीनम्। प्रतिक्षपमित्यपि पाठः। **चित्रलेखा**–एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः। तदुपसर्पावः।

**उर्वशी**–अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम्। अन्तरिते शृणुव आलापं यावदावयोः संशयच्छेदो भवति। **चित्रलेखा**–यत्ते रोचते। **विदूषकः**–ननु इमेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः॥

### कोणेश्वरी

**अवेहीति**। अपेहि। हृदयं मे न प्रत्येति। विशिष्य पुनर्जानीहीत्यर्थः। **हला इति**। हला चित्रलेखे, हृदये कृत्वा किमपि जल्पसि। प्रियसमागमस्याग्रत एवानेन गृहीतं मे हृदयम्। तथा चेदानीं मम हृदयमनेनाकृष्टमिति न किं तु पुरैवाकृष्टमतो हृदयशून्यां मां किं परिहससि। तत्त्वं ज्ञात्वा मयि निवेदयेति भावः। **एसो इति**। एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः। तस्मादुपसर्पाव एनम्। सदवसर एव वर्ततेऽसावित्येष एवोपसर्पणविषय इति भावः। **मदनेति**। मदनकृता बाधा बाधत इत्यर्थः। **अनिर्भिन्नेति**। अनुद्भिन्नार्थेनामुना वचनेनाकम्पितं मे हृदयम्। न ज्ञायते किंनिमित्तिकेयं मदनबाधेति भावः। अत एवाह–**अन्तरिति**। अन्तर्धाय शृणुवः अस्यालापं येन प्रसन्नार्थो भवति। आलाप इति विभक्तिविपरिणामेनान्वेति। **जावेति**। यत्ते रोचते तथा कुर्विति शेषः।

मदनबाधायां प्रतीकारमाह–**णमिति**। नन्विमेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः। अमृतस्य सर्वबाधाशमकत्वादेषापि बाधा ते शान्तिमुपयास्यतीति भावः॥

### कुमारगिरिराजीया

**चित्रलेखा–हुम् इति वितर्के**। त्वां विना इति शेषः। अत्र यथार्थकथमेन मार्गो नाम सन्ध्यङ्गमुक्तं भवति॥

**राजा**–वयस्य, एवमादिभिरनुपक्रम्योऽयमातङ्कः । पश्य

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।
मनसिजरुजं सा वा दिव्या ममालमपोहितुं
रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥१०॥

---

### प्रकाशिका

अनुपक्रम्योऽचिकित्स्यः । आतङ्को रोगः, सन्तापो वा । 'आतङ्को रोगसन्तापशङ्कासु मुरजध्वनौ' इति विश्वलोचनः । कुसुमशयनमिति । प्रत्यग्रं नूतनम् । सर्वाङ्गीणं सर्वाङ्गव्यापि । मलयजं चन्दनम् । मणियष्टयो मणियुक्ता हाराः । 'यष्टिः शस्त्रान्तरे चैव हारे हारात् परेऽपि च' इति विश्वलोचनः । मनसिजरुजं मदनबाधाम् । अलं समर्था । अपोहितुम् दूरीकर्तुम् । रहस्येकान्ते लघयेत् लघूकुर्यात् ॥१०॥

### कौणेश्वरी

**एवमिति** । एवमादिभिरुपचारैरनुपचार्योऽयं बाधारम्भ इत्यर्थः । कथमेवमत आह–**कुसुमेति** । प्रत्यग्रमभिनवमपि कुसुमशयनं पुष्पविरचिता शय्या मम मनसिजरुजमपोहितुमपनेतुं नालं न प्रभवति । न चन्द्रमरीचयः । अलमिति सर्वत्र सम्बध्यते । सर्वाङ्गीणं मलयजं च न । कृतसकलाङ्गालेपनं चन्दनमपि न लयेत्यर्थः । न वा मणियष्टयो मणिघटितयष्टयो वा नालम् । तर्हि तस्या रुजोऽपनयनमशक्यमेव सर्वथा । नेत्युच्यत इत्याह–सा वेति । सा वा दिव्या दिवि भवा निःशेषं निरसितुं प्रभुः । वाशब्दोऽवधारणे । सैवेत्यर्थः । ननु यावत् सा लभ्यते तावत् प्राणधारणोपायः क इत्याह । **रहसीति** । रहसि विजने आरब्धा तदाश्रिता कथा वा तां रुजं नयेत् । संभावनायां लिङ् । एवमपि संभाव्यते यत् तदाश्रिता कथा वो रुजं लघूकुर्यान्न तु त्याजयेदपीत्यर्थः । तस्मात् तत्प्राप्तिपर्यन्तं यदि तत्कथा कथ्यते तदा निस्तारः स्यादिति भावः ॥१०॥

### कुमारगिरिराजीया

उर्वशी–हिअअ, जं दाणिं सि मं उज्झिअ इदो [1]संकंतं तस्य फलं तुए उवलद्धं । [हृदय, यदिदानीमसि मामुज्झित्वा इतः संक्रान्तं तस्य फलं त्वयोपलब्धम् । ]

विदूषकः–आम । भो:, अहं पि जदा सिहरिणिं रसालं च ण लहे तदा तं एव्व [2]चिंतअंतो आसादेमि सुहं । [आम । भो:, अहमपि यदा शिखरिणीं रसालं च न लभे तदा तदेव चिन्तयन्नासादयामि सुखम् । ]

---

## प्रकाशिका

**उर्वशी**–हृदय, यदिदानीमसि मामुज्झित्वेतः संक्रान्तं तस्य फलं त्वयोपलब्धम् । इत इत्यस्मिन् राजनि । संक्रान्तं निविष्टम् । **विदूषकः**–आमेत्यानुकूल्ये, स्मरणे वा । भोः, अहमपि यदा शिखरिणीम् । एलालवङ्गकर्पूरादिसुगन्धिद्रव्यमिश्रितं दुग्धेन सह गालितं सितासंगतं दधि शिखरिणीत्युच्यते । दध्यतिरिक्तपूर्वोक्तद्रव्यमिश्रितः पक्वकदलीफलान्तःसारोऽपि तत्पदवाच्यः । रसालं च न लभे । रसालमाम्रविशेषफलम् । तदा तदेव चिन्तयन्नासादयामि सुखम् ॥

## कोणेश्वरी

**हिअअ इति** । हृदय यदिदानीमसि मामुज्झित्वाऽत्र संक्रातं तस्य फलं त्वयोपलब्धम् । यन्मामुपेक्ष्य पुरूरवसि संक्रान्तमसि तस्यं फलं त्वया एतावान् दुःखराशिरुपलब्धोऽस्तीत्यर्थः । **भो इति** । भोः, अहमपि यदा शिखरिणीं रसालां च न लभे तदा तामेव चिन्तयन्नासादयामि सुखम् । शिखरिणी मधुरादिरससाधितः पक्वाम्रविशेषः । रसाला इति प्रसिद्धा । तदप्राप्तिसमये चिन्तैव ममापि सुखदेति भवतोऽपि प्रार्थयितव्याप्राप्तौ तच्चिन्तैव श्रेयसीति भावः ॥

## कुमारगिरिराजीया

**आमेति स्वीकारे ॥**

---

१. इदो संकंतेण तुए फलं उवलद्धं–सा. ए. २. पत्थअंतो संकित्तअंतो आसासेमि–सा. ए.

[1]**राजा**–सम्पद्यत इदं भवतः ।

[2]**विदूषकः**–तुमं वि तं अइरेण पाविहिसि । [त्वमपि तामचिरेण प्राप्स्यसि ।]

**राजा**–सखे, एवं मन्ये ।

**चित्रलेखा**–सुणु असंतुट्ठे । [शृणु असन्तुष्टे ।]

**विदूषकः**–कहं विअ । [कथमिव ।]

**राजा**–

[3]इदं तया रथक्षोभादङ्गेनाङ्गं निपीडितम् ।
एकं[4]कृति शरीरेऽस्मिन् शेषमङ्गं भुवो भरः ॥११॥

**उर्वशी**–किं दाणिं अवरं विलंबिस्सं । (*सहसोपसृत्य*) हला चित्तलेहे, अग्गदो वि[5]मए[6]ट्ठिदाए उदासीणो महाराओ । [किमिदानीमपरं विलम्बिष्ये । सखि चित्रलेखे, अग्रतोऽपि मम स्थिताया उदासीनो महाराजः ।]

**चित्रलेखा**–(*सस्मितम्*) [7]अदितुवरिदे, असंक्खित्ततिरक्खरिणी असि । [अतित्वरिते, असंक्षिप्ततिरस्करिणी असि ।]

---

प्रकाशिका

**विदूषकः**—त्वमपि तामचिरेण प्राप्स्यसि । **चित्रलेखा**—शृणु असन्तुष्टे । **विदूषकः**—कथमिव ।

**इदं तयेति** । रथस्य क्षोभादुच्चनीचप्रदेशेषू ख्वातात् । एकमङ्गमस्मिञ् शरीरे कृति कुशलम् ॥ ११ ॥ **उर्वशी**—किमिदानीमपरं विलम्बिष्ये । सखि

---

१. २. om–सा. ए. ३. अयं तस्या रथक्षोभादंसेनांसो निपीडितः–सा. ए. ४. एकः कृती–सा. ए. ५. मइ–सा ए. ६. गदाए–कु. गि. ७. अइतुवरिदे–को.

### प्रकाशिका

चित्रलेखे, अग्रतोऽपि मम स्थिताया उदासीनो महाराजः । **चित्रलेखा**—अतित्वरिते, असंक्षिप्ततिरस्करिण्यसि ॥

### कोणेश्वरी

**सम्पद्यते** इति प्रतिलभ इति शेषः । मम तु प्रतिलम्भसम्भावना न प्रतिभातीति भावः । **तुममिति** । त्वमप्यचिरेण प्राप्स्यसि समीहितमिति शेषः । **एवमिति** । भविष्यति तत्प्रतिलम्भ इत्यर्थः । **सुणु इति** । शृणु असन्तुष्टे । त्वद्विषये एवं कथाकारिण्यप्यस्मिंस्तवानुरक्तबुद्धिः कथमधुनापि नोदेतीति भावः । **कथमिति** । कथमिवैवं मन्यस इति पुरुषविपरिणामेनानुषङ्गः ।

कथयति—**इदमिति** । इदमेकमङ्गमस्मिन् शरीरे कृति कृतार्थं प्राप्तप्रयोजनमिति यावत् । कतरत् तदङ्गं कथं वा कृति इत्यपेक्षायामाह । **तयेति** । यदङ्गं तयाङ्गेन स्वशरीरेण निपीडितम् । यदिति हेतुमन्निगदत्वात् कथं तस्या निपीडनसंभावनाभूदत आह—**रथेति** । रथजनितः क्षोभस्तत्र निमित्तमभूदित्यर्थः । शेषमङ्गमवशिष्टशरीरं भुवो भरो भार इत्यर्थः । तथा चाङ्गसमुदाये एकमेवाङ्गं प्रयोजनवद् वृत्तमस्ति इत्यपरेणापि जातेनावश्यं प्रयोजनवता भाव्यमन्यथा निरर्थकत्वे तस्य जन्मैव न भवेत् । न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । न चान्यप्रयोजनेनान्यप्रयोजनवत्त्वं मन्यामह इति भावः ॥ ११ ॥ **किमिति** । किमिदानीमपरं विलम्बिष्ये । इतोऽधिकविलम्बेनात्र न प्रयोजनम् । ज्ञातव्यज्ञानं यतो जातमित्यर्थः । **हला इति** । हला चित्रलेखे, अग्रत उपस्थिताय मम उदासीनो महाराजो यतो मद्विलोकनाय लोचनमपि नोन्मूलयतीति भावः **अइ इति** । अयि त्वरिते, असंक्षिप्ततिरस्करिण्यसि । तिरस्करिण्या प्रच्छन्नैवासि कथमिवार्यं त्वामालोकयेदित्यर्थः ॥

### कुमारगिरिराजीया

**अयं तस्या इत्यादि** । स्पष्टोऽर्थः ॥ ११ ॥

**अत्र** वाक्यस्योत्कर्षवत्त्वादुदाहरणं नाम सन्ध्यङ्गमुक्तं भवति । गताया मम इत्यत्र 'षष्ठी चानादरे' (पा. २-३-३८) इति षष्ठी ॥

(नेपथ्ये)

इदो इदो भट्टिनी। [इत इतो भट्टिनी।]

*(सर्वे कर्णं ददति। उर्वशी सह सख्या विषण्णा)*

**विदूषकः**– [1]अइ भो, उवट्ठिदा देवी। ता [2]सुमुद्दिदमुहो होहि। [अयि भोः, उपस्थिता देवी। तत् सुमुद्रितमुखो भव।]

**राजा**–भवानपि संवृताकारमास्ताम्।

**उर्वशी**–हला, किं एत्थ करणीअं।

**चित्रलेखा**–अलं आवेएण। [3]अंतरिदा दाणिं सि तुमं। विहिदणिअमवेसा राअमहिसी दीसदि। ता एमा चिरं ण चिट्ठिस्सदि त्ति[4]। [अलमावेगेन। अन्तरिता इदानीमसि त्वम्। विहितनियमवेषा राजमहिषी दृश्यते। तदेषा चिरं न स्थास्यतीति।]

---

प्रकाशिका

**नेपथ्ये**। इत इतो भट्टिनी। **विदूषकः**—अयि भोः, उपस्थिता देवी। तत् सुमुद्रितमुखो भव। **उर्वशी**—सखि, किमत्र करणीयम्। **चित्रलेखा**—अलमावेगेन। अन्तरिता इदानीमसि त्वम्। विहितनियमवेषा राजमहिषी दृश्यते। तदेषा चिरं न स्थास्यतीति॥

कोणेश्वरी

**इदो इदो** इति। इत इतो भट्टिनी। अनेनानेन आयात्वित्यर्थः। **सर्वे** इति। राजोर्वशीचित्रलेखाविदूषका इत्यर्थः। **अविहेति**। आश्चर्यमाश्चर्यमित्यर्थः। **भो इति**। भोः, उपस्थिता देवी, तस्मात् संयतमुखो भव। पूर्वमसंयत-

---

१. अविहा अविहा–सा. ए. २. वाअंअमो–सा. ए. ३. अंतरिदा बअं–सा. ए. अंतहिदा–कु. गि. ४. om –सा. ए.

(ततः प्रविशति धृतोपहारपरिजना देवी)

देवी-(चन्द्रमालोक्य) [1]एसो रोहिणीजोएण अहिअं सोहदि भअवं मिअलंछणो। [एष रोहिणीयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः।]

चेटी -णं संपज्जिसदि भट्टिणीसहिदस्स भट्टिणो विसेसरमणीअदा। [नूनं संपत्स्यते भट्टिनीसहितस्य भर्तुर्विशेषरमणीयता।]

(इति परिक्रामतः)

---

**कोणेश्वरी**

सुखाय ते यथाभूत् तत्त्वयैवानुभूतम्। इदानीमपि मनागत्र बद्धमुखो भव इति भावः। हलेति। हला कथं करणीयम्। किमत्र प्रतिविधानमित्यर्थः। अलमिति। अलमावेगेन। अन्तरिता इदानीमसि त्वम्। तथा चेयं त्वां न पश्येदिति भावः। तथाप्यागमनं निरर्थकमभूदत्र कः प्रतीकार इत्यत आह—विहिदेति। विहितनियमवेषा राजमहिषी दृश्यते तस्मादेषा न चिरं स्थास्यतीति। क्षणं स्थीयतां न निरर्थकमागमनं स्यादिति भावः॥

**कुमारगिरिराजीया**

अन्तर्हिते आवाम्। अत्र शङ्काया गम्यमानत्वात् संभ्रमो नाम सन्ध्यङ्गमुक्तं भवति॥

**प्रकाशिका**

देवी—एष रोहिणीयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः। चेटी-नूनं संपत्स्यते भट्टिनीसहितस्य भर्तुर्विशेषरमणीयता॥

**कोणेश्वरी**

हञ्जे इति। हञ्जे एष रोहिणीयोगेनाधिकं शोभते भगवान् मृगलाञ्छनः। णमिति। ननु संपत्स्यते भट्टिनीसहितस्य भर्तुरपि विशेषरमणीयता। तथा च कथमुत्कण्ठता। युवयोरपि रामणीयकं वृत्तप्रायमित्यर्थः॥

**कुमारगिरिराजीया**

No commentary

---

१. हञ्जे मिअणिए—श्रा. ए.

**विदूषकः**—भो, [1]णं जाणामि सोत्थिवाअणं वि देदि त्ति। आदु भवंतं अंतरेण [2]चंदव्वदव्ववदेसेण मुक्करोसा अज्ज मे अक्खीणं सुहदंसणा देवी। [भोः, ननु जानामि स्वस्ति-वाचनमपि ददाति। उत भवन्तमन्तरेण चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मेऽक्ष्णोः सुखदर्शना देवी।]

**राजा**—*(सस्मितम्)* [3]उभयमपि घटते। तथापि भवता यत् पश्चादभिहितं तन् मां प्रति भाति। यदत्रभवती—

सितांशुका मङ्गलमात्रभूषणा
[4]पवित्रदूर्वाङ्कुरलाञ्छितालका।
व्रतापदेशोज्झितगर्ववृत्तिना
मयि प्रसन्ना वपुषैव लक्ष्यते ॥१२॥

**देवी**—( *उपगम्य* ) जेदु जेदु [5]महाराओ। [जयतु जयतु महाराजः।]

**परिजनः**—[6]जेदि जेदि देवो। [जयति जयति देवः।]

**विदूषकः**—सोत्थि भोदीए। [स्वस्ति भवत्यै।]

**राजा**—स्वागतं देव्यै।

*(तां हस्तेन गृहीत्वोपवेशयति)*

**उर्वशी**—ठाणे इअं वि देवीसद्देण [7]उच्चारीअदि। ण हि किं वि परिहीअदि सचीदो ओजस्सिदाए। [स्थाने इयमपि देवीशब्देनोच्चार्यते। न हि किमपि परिहीयते शचीत ओजस्वितया।]

---

१. ण—सा. ए. २. वदावदेसेण—सा. ए. ३. उभयथा—को. ४. विचित्र—को. ५. अज्जउत्तो—सा. ए. ६. जेदुजेदु भट्टा—सा. ए. ७. उवअरीअदि—सा. ए.

### प्रकाशिका

**विदूषकः**—भोः, ननु जानामि स्वस्तिवाचनमपि ददाति। उत भवन्तमन्तरेण भवन्तमुद्दिश्येत्यर्थः। चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मेऽक्ष्णोः सुखदर्शना देवी।

**सितांशुकेति**। मङ्गलं हरिद्रोद्वर्तनकुङ्कुमादि तन्मात्रभूषणा। अपदेशो मिषम्। 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः (१-६-३४) ॥ १२ ॥

**देवी**—जयतु जयतु महाराजः। **परिजनः**—जयति जयति देवः। **विदूषकः**—स्वस्ति भवत्यै।

**उर्वशी**—स्थाने इयमपि देवीशब्देनोच्चार्यते। स्थाने युक्तम्। न हि किमपि परिहीयते शचीत ओजस्वितया॥

### कोणेश्वरी

**भो इति**। भो न जानामि स्वस्तिवाचनकमपि ददाति। आदु। आदुशब्दः पक्षान्तरे देशीयः। तथा च दास्यति न वेत्यर्थः। **भवन्तमिति**। भवन्तमन्तरेण चन्द्रव्रतव्यपदेशेन मुक्तरोपा अद्य मे अक्ष्णोः सुखदर्शना देवी। तथा च स्वस्तिवाचनकं ददातु वा मा वा। दर्शनमात्रेणाक्ष्णोस्तावन्मे सुखमुत्पादयतीति। वस्तुतस्तु भवन्तमन्तरेणेति पाठः। तत्र स्वस्तिवाचनकमियं ददाति। आदु इति पक्षान्तरे। भवानेव मामन्तरेण भोक्ष्यते इति शेषः। तथा च यदीयं न दास्यति तदा भवानेव दास्यतीति भावः। अस्ति किं देवीमुखदर्शनाद् यत् प्रतिभातीत्यर्थः।

**उभयथेति**। सेत्स्यति प्रयोजनमिति शेषः। यदीयं दास्यति नो वाऽहमेव दास्यामीत्युभयथार्थः। **यत्त्विति**। यत्पुनः पश्चादुक्तं चन्द्रेत्यादिना तन् मां प्रतिभाति मह्यं रोचते इत्यर्थः। यद्वा मां प्रति इति भाति। ममैव तेन प्रयोजनमिति भावः। तदेव हेतुनिगदपूर्वकं स्फुटयति। **सितेति**। श्वेतवसना मङ्गलार्थं कृतकृत्स्नविभूषणा विचित्रेण दूर्वाङ्कुरेण लाञ्छितोऽलको यस्यास्तथा व्रतस्यापदेशेन व्याजेनोज्झिता गर्वस्य वृत्तिरवस्थितिर्येन तत्तथा तेन वपुषैव मयि प्रसन्ना लक्ष्यते। इयमतिसोत्साहा विहितसर्वाभरणा सत्यवश्यं प्रसन्ना। अन्यथा एवमाभरणादि विधाय ममाग्रे न संचरेदिति भावः ॥१२॥

**इयं हीति**। इयं हि देवीशब्देनोच्चार्यते। न किमपि परिहीयते शचीत ओजस्वितया। देवीशब्देनोच्चारणमस्या उचितमेव यतः कान्त्या शचीसदृशीत्यर्थः। शचीतुल्यपत्नीसहितस्याप्यस्य मय्येवं बहुमान इति स्वोत्कर्ष एवास्यास्तात्पर्यम् ॥

### कुमारगिरिराजीया

**सितांशुकेत्यादि**। स्पष्टोऽर्थः।

**चित्रलेखा**–[1]अत्थि अवरं मुहं मंतिदुं दे । [अस्त्यपरं मुखं मन्त्रयितुं ते । ]

**देवी**–अज्जउत्तं पुरोकदुअ को वि वदविसेसो मए संपादणीओ। ता मुहुत्तं उवरोधो सहीअदु । [आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन् मुहूर्तमुपरोधः सह्यताम् ।]

**राजा**–मा मैवम् । अनुग्रहः खलु । नोपरोधः ।

**विदूषकः**–ईरिसो णं [2]सोत्थिवाअणएहिं दे बहुसो उवरोधो होदु । [ईदृशो ननु स्वस्तिवाचनकैस्ते बहुश उपरोधो भवतु । ]

**राजा**–किंनामधेयमेतद् देव्या व्रतम् ।

---

**प्रकाशिका**

चित्रलेखा–अस्ति अपरं मुखं मन्त्रयितुं ते । देवी–आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन्मुहूर्तमुपरोधः सह्यताम् । विदूषकः–ईदृशो ननु स्वस्तिवाचनकैस्ते बहुश उपरोधो भवतु ॥

**कोणेश्वरी**

अस्तीति । अस्ति अपरं मन्त्रयितुं मुखं ते । शची हि सर्वश्रेष्ठा । अतस्तस्याः सदृशीत्युक्त्यापरमगम्यं त्वयोक्तमिति भावः । अज्जेति । आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पादनीयस्तस्मान् मुहूर्तमुपरोधः सह्यताम् । मदुपरोधेन क्षणमात्रमवस्थातव्यमित्यर्थः । विदूषकं सम्बोध्य राजा आह–अनुग्रह इति । खल्ववधारणे । अनुग्रह एवोपरोधः । इरिसो इति । ईदृशो ननु स्वस्तिवादनं कुर्वता बहुश उपरोधो भवतु । स्वस्तिवादनं कुर्वता मया ईदृशोपरोधो बहुधा भवतो भवत्वित्यर्थः ॥

**कुमारगिरिराजीया**

No commentary

---

१. असूआपरंमुहं मंतिदं तुए–सा. ए. २. सोत्थिवाअणवंतो–सा. ए.

(देवी *निपुणिकामवलोकयति*)

**निपुणिका**–भट्टा, [1]पिअप्पसादणं णाम। [भर्तः, प्रियप्रसादनं नाम।]

**राजा**–(*देवीं विलोक्य*) यद्येवम्,

अनेन कल्याणि मृणालकोमलं,
व्रतेन गात्रं ग्लपयस्यकारणम्।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ॥१३॥

---

**प्रकाशिका**

**निपुणिका**–भर्तः, प्रियप्रसादनं नाम। अनेनेति। गात्रं शरीरम्। 'गात्रं गजाग्रजङ्घादिविभागेऽप्यङ्गदेहयोः' इति विश्वलोचनः। ग्लपयसि पीडयसि। उत्सुक उत्कण्ठितः ॥१३॥

**कोणेश्वरी**

**भट्टेति**। भर्तः, प्रियप्रसादनं नाम। प्रियप्रसादः फलमस्य व्रतस्येति यौगिकमेतस्य एतन्नामेति भावः। अनेनेति। हे कल्याणि, अनेन व्रतेन गात्रं शरीरमकारणं निष्प्रयोजनं क्षपयसि क्षीणं कुरुषे। व्रतमात्रेणास्य क्षीणता कथं भविष्यतीत्यत आह–**मृणालेति**। मृणालकोमलं यत इत्यर्थः। कथं निष्प्रयोजनमत आह–प्रसादमिति। य उत्सुकः सन् तव प्रसादमाकाङ्क्षति सदा स जनस्त्वया किमर्थं प्रसाद्यते। तत्प्रसादना व्यर्थैवेत्यर्थः ॥१३॥

**कुमारगिरिराजीया**

**अनेनेत्यादि**। स्पष्टोऽर्थः ॥१३॥ अत्र सान्त्वनस्य कथनात् सङ्ग्रहो नाम सन्ध्यङ्गमुक्तं भवति ॥

---

१. पिआणुप्पसादनं–सा. ए.

**उर्वशी**–( [1]*सवैलक्ष्यस्मितम्* ) महंतो क्खु [2]एदस्स इमस्सिं बहुमाणो [महान् खल्वेतस्यैतस्यां बहुमानः ।]

**चित्रलेखा**–अइ मुद्धे, [3]अण्णसंकंतपेम्माणो णाअरा भारिआए अहिअं दक्खिणा होंति । [अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति ।]

**देवी**–[4]एदस्स वदस्स अअं पहावो जं एत्तिअं [5]वददि अज्जउत्तो । [एतस्य व्रतस्यायं प्रभावो यदेतावद् वदत्यार्यपुत्रः ।]

**विदूषकः**–विरमदु [6] भवं । ण जुत्तं दे सुहासिदं [7]पच्चक्खिदुं । [विरमतु भवान् । न युक्तं तव सुभाषितं प्रत्याख्यातुम् ।]

---

### प्रकाशिका

**उर्वशी**–महान् खल्वेतस्यैतस्यां बहुमानः । **चित्रलेखा**–'सदृशमेव यदेषा आकृतिर्बहुमाना' इति क्वचित् पाठः । अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति । दक्षिणा अनुकूलाः ॥ **देवी**–एतस्य व्रतस्यायं प्रभावो यदेतावद्वदत्यार्यपुत्रः । **विदूषकः**–विरमतु भवान् । न युक्तं तव सुभाषितं प्रत्याख्यातुम् ॥

### कोणेश्वरी

**महंतो** इति । महान् खल्वेतस्यैतस्यामनुरागः । खल्ववधारणे । महानेवेत्यर्थः । **अइ** इति । अयि मुग्धे निवृत्तप्रेमाणो नागरा अधिकं प्रिया भवन्ति । वाचेति शेषः । तथा चायं वाचा परमेव प्रेम प्रकटयति न हृदयेन । तथेति । मा त्वं वैलक्ष्यं गम इति भावः । **इमस्स** इति । अस्य व्रतपरिग्रहस्यायं प्रभावो यदेव तावत्कं (यदेतावत्कं) मन्त्रयत्यार्यपुत्रः । तथा च न निःप्रयोजनमेतद् व्रतं किन्तु भवाननेनैव प्रसादितोऽस्तीति भावः । **चिराइदुं** इति । चिरयितुं तव युक्तम् । कुत इत्याकाङ्क्षायामाह । **सुहासिदं** इति । सुखासितं बन्धुचरितं बन्धोर्मित्रस्य चरितमाचरणं सुखासीनं सुखोपविष्टं भवति यत इत्यर्थः । बन्धूनां सकाशे बन्धुना तावदेवोपवेष्टव्यं यावता स नोद्विजतीति भावः ॥

**कुमारगिरिराजीया** No commentary

---

१. om.–सा. ए. २. से–सा ए. ३. णिवुत्तपेम्माणो–को. ४. इमस्स वदपरिग्गहस्स–को. ५. मंतेदि–को. मंताचिदो–सा. ए. ६. चिराइदुं–को. ७. पच्चाक्खादुं–सा. ए.

**देवी**–दारिआओ, आणेध[1] ओवहारिअं जाव [2]हम्मगदे चंदवादे अच्चेमि । [दारिकाः, आनयतौपहारिकं यावद्धर्म्यगतांश्चन्द्रपादानर्चयामि ।]

**परिजनः**–जं देवी आणवेदि । एसो उवहारो । [यद् देव्याज्ञापयति । एष उपहारः ।]

**देवी**–[3]उवणेध । *( नाट्येन कुसुमादिभिश्चन्द्रपादानभ्यर्च्य)* हज्जे, [4]इमेहिं उवहारेहिं मोदएहिं अ अज्जमाणवअं कंचुइं अच्चेध । [उपनयत । चेटयः, एतैरुपहारैर्मोदकैश्चार्यमाणवकं कञ्चुकिनमर्चयत ।]

---

### प्रकाशिका

**देवी**–दारिकाः, आनयतौपहारिकं यावद्धर्म्यगतांश्चन्द्रपादानर्चयामि । औपहारिकं पूजासामग्री । **परिजनः**–यद्देव्याज्ञापयति । एष उपहारः । **देवी**–उपनयत । **चेटयः**, एतैरुपहारैर्मोदकैश्चार्यमाणवकं कञ्चुकिनमर्चयत । 'एतानुपहारमोदकांल्लम्भयत' इति क्वचित् पाठः । लम्भयत प्रापयत ॥

### कोणेश्वरी

**दारिकेति**–दारिका, आनयतोपहारकं यावत्, हर्म्यगतान् चन्द्रपादान- 'र्चयामि । 'शस ए' इति शसः स्थाने 'ए' भावः । **जं इति** । यद्देव्याज्ञापयति तथा करोमीति शेषः । **एसो** इति । एष उपहारः आनीयते इति शेषः । **उवणेध** इति । उपनयत मम निकटमानयतेत्यर्थः । उपहारैर्मोदकैरार्यमाणवकं कञ्चुकिनं चार्चयत, एतानि मोदकानि ताभ्यां दत्तेत्यर्थः ॥

### कुमारगिरिराजीया

दारिका, उपनयत औपहारिकम् । उपहारः समर्पणं प्रयोजनमस्य इति ठक्प्रत्ययः ॥

---

१. उवणेध–सा. ए. २. मणिहम्मिअगदे–सा. ए. ३. om.–सा. ए. ४. इमे ओवहारिअमोदए अज्जमाणवअं लंभावेहि–सा. ए.

**परिजनः**–जं देवी आणवेदि । अज्ज माणवअ, [1]एदं उववादिदं सोत्थिवाअणअं । [यद् देवी आज्ञापयति । आर्य माणवक, एतदुपपादितं स्वस्तिवाचनकम् ।]

**विदूषकः**–(*मोदकशरावं गृहीत्वा ।*) सोत्थि भोदीए । [2]बहुफलं एदं वदं होदु । [स्वस्ति भवत्यै । बहुफलमेतद् व्रतं भवतु ।]

[3]**चेटी**–अज्ज कंचुइ, इदं तुह । [आर्य कञ्चुकिन्, इदं तव ।]

**कञ्चुकी**–(*गृहीत्वा*)स्वस्ति देव्यै ।

**देवी**–अज्जउत्त, इदो दाव । [आर्यपुत्र, इतस्तावत् ।]

**राजा**–अयमस्मि ।

**देवी**–(*राज्ञः पूजामभिनीय प्राञ्जलिः प्रणम्य च*) एसा[4] देवदामिहुणं रोहिणीमिअलंछणं सक्खीकरिअ अज्जउत्तं अणुप्पसादेमि । अज्जप्पहुदि अज्जउत्तो जं इत्थिअं कामेदि[5] जा अज्जउत्तस्स समाअमप्पणइणी, ताए सह [6]अप्पदिबंधेण वत्तिदव्वं[7] । [एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि । अद्यप्रभृति यां स्त्रियमार्यपुत्रः कामयते, या आर्यपुत्रस्य समागमप्रणयिनी, तया सहाप्रतिबन्धेन वर्तितव्यम् ।]

**उर्वशी**–अम्महे, ण आणामि किंपरं से वअणं । मम उण विस्सासविसदं हिअअं संवुत्तं । [अम्महे, न जानामि किंपरमस्या वचनम् । मम पुनर्विश्वासविशदं हृदयं संवृत्तम् ।]

---

१. एदं दाव दे–सा ए. २. बहुफलो वे–सा. ए. ३. om – सा. ए. ४. अहं–सा. ए. ५. पत्थेदि–सा. ए. ६. पीदिबंधेण–सा. ए. ७. सि–सा. ए.

**चित्रलेखा**–सहि, महाणुहावाए पतिव्वदाए अब्भणुण्णादो अणंतराओ दे पिअसमागमो भविस्सदि। [सखि, महानुभावया पतिव्रतया अभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति।]

---

### प्रकाशिका

**परिजनः**–यद् देव्याज्ञापयति। आर्य माणवक, एतदुपपादितं स्वस्तिवाचनकम्। **विदूषकः**–स्वस्ति भवत्यै। बहुफलमेतद् व्रतं भवतु। **चेटी**– आर्य कञ्चुकिन्, इदं तव। **देवी**–आर्यपुत्र, इतस्तावत्। **देवी**–एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि। अद्यप्रभृति यां स्त्रियमार्यपुत्रः कायमते या आर्यपुत्रसमागमप्रर्णायनी, तया सहाप्रतिबन्धेन वर्तितव्यम्।

**उर्वशी**–अम्महे आश्चर्यं। न जानामि किंपरमस्या वचनम्। मम पुनर्विश्वासविशदं हृदयं संवृत्तम्। **चित्रलेखा**–सखि, महानुभावया पतिव्रतयाऽभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति॥

### कोणेश्वरी

**अज्ज** इति। आर्य माणवक, इदमुपपादितं तव वायनकं वा एतदुपपद्यस्व इत्यर्थः। **सोत्थि इति**। स्वस्ति भवत्यै। बहुफलमेतद् व्रतं भवतु। दानेन हि सर्वत्र व्रतस्यैव फलातिशयो जन्यत इति भावः। **अज्ज इति**। आर्य कञ्चुकिन्, इदं तव। **अज्जउत्त** इति। आर्यपुत्र, इतस्तावत्। आगच्छेति शेषः। **एसा** इति। एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि। अद्यप्रभृति यां स्त्रियमार्यपुत्रः कायमते, या आर्यपुत्रसमागमप्रणयिनी तया सहाप्रतिबन्धेन वर्तितव्यम्। आर्यपुत्रेणेति शेषः।

'अम्महे हर्षे' इति निपातनात्। **णेति**। न जानामि किंपरमस्या वचनम्। विश्वासविशदं मम हृदयं संवृत्तम्। मत्परमेवैतद् वाक्यमिति तावन् मम प्रतिभाति। वस्तुगत्या किंपरमिति विशिष्य निर्णेतुं न शक्यत इत्यर्थः। **सहीति**। सखि, महानुभावया पतिव्रतयाऽभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमः। इतः प्रभृत्यन्तरायं तव न पश्याम इति भावः। अथ च निरन्तरायः समागमः सूच्यते॥

### कुमारगिरिराजीया

एसा अहं दे वंदामि। एषाहं त्वां वन्दे। प्राकृते क्वचिद् दे इति द्वितीयार्थे षष्ठी। किंपरं कस्मिन्नर्थे तात्पर्यवत्। अनुनयपरं वा आक्षेपपरं वा इत्यर्थः। अभ्यनुज्ञात एव। अनेनाक्षेपपरं न भवतीति गम्यते॥

**विदूषकः**—(*अपवार्य*) छिन्नहत्थो[1] पुरदो वज्झे पलायिदे भणादि 'गच्छ, धम्मो भविस्सदि' त्ति। (*प्रकाशम्*) भोदि, किं उदासीणो तत्थभवं। [छिन्नहस्तः पुरतो वध्ये पलायिते भणति 'गच्छ धर्मो भविष्यति' इति। भवति, किमुदासीनस्तत्रभवान्।]

**देवी**—मूढ, अहं क्खु अत्तणो सुहावसाणेण [2]अज्जउत्तस्स सुहं इच्छामि। एत्तिएण चिंतेहि दाव पिओ ण वेत्ति। [मूढ, अहं खलु आत्मनः सुखावसानेनार्यपुत्रस्य सुखमिच्छामि। एतावता चिन्तय तावत् प्रियो न वा इति।]

---

### प्रकाशिका

**विदूषकः**—अपवारितलक्षणं प्रागुक्तम्। छिन्नहस्तः पुरतो वध्ये पलायिते भणति 'गच्छ, धर्मो भविष्यति' इति। प्रकाशम्। भवति, किमुदासीनस्तत्रभवान्। **देवी**—मूढ, अहं खल्वात्मनः सुखावसानेनार्यपुत्रस्य सुखमिच्छामि। एतावता चिन्तय तावत् प्रियो न वेति॥

### कोणेश्वरी

**छिण्णेति**। छिन्नहस्तस्य पुरतो वध्ये पलायिते भणति धर्मो भविष्यति इति। व्याधश्चटकादिधारणे अक्षमः पलायिते तस्मिन् कथयति यद् धर्मो भविष्यति तथा त्वां निवारयितुमक्षमा देवी स्वाच्छन्द्यं प्रयच्छतीत्यर्थः। **भोदीति**। भवति किमुदासीनस्तत्रभवान् यदेवं स्वाच्छन्द्यं प्रयच्छसीति भावः। **मूढेति**। अहं खल्वात्मसुखावसानेनार्यपुत्रस्य सुखमिच्छामि। एतावता चिन्तय तावत् प्रियो न वेति। यदि ममोढा (हरणं) मे तत्सुखार्थं स्वसुखं मयोपेक्ष्यते। बर्बरतया त्वमेवं शङ्कस इति भावः॥

### कुमारगिरिराजीया

No commentary

---

1. छिन्नहत्थो मच्छे पलाइदे निव्विण्णो धीवरो भणादि—सा. ए. 2. अज्जउत्तं णिव्वुदसरीरं कादुं इच्छामि—सा. ए.

**राजा**–

दातुमसहने[1] प्रभवस्यन्यस्मै कर्तुमेव वा दासम् ।
नाहं पुनस्तथा त्वं यथा हि मां शङ्कसे भीरु ॥ १४ ॥

**देवी**–[2]भोदु मा वा । जहाणिद्दिट्ठं संपादिदं पिअप्पसादणं वदं । आअच्छध परिजणा, गच्छम्ह । [भवतु मा वा । यथानिर्दिष्टं संपादितं प्रियप्रसादनं व्रतम् । आगच्छत परिजनाः, गच्छामः ।]

**राजा**–प्रिये, न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते ।

**देवी**–अज्जउत्त, ण लंघिदपुव्वो संपदं णिअमो ।
[आर्यपुत्र, न लङ्घितपूर्वः सांप्रतं नियमः ।]

(*इति सपरिजना निष्क्रान्ता*)

---

**प्रकाशिका**

प्रभवसि समर्थासि । भीरु भयशीले ॥ १४ ॥ **देवी**—भवतु मा वा । यथानिर्दिष्टं संपादितं प्रियप्रसादनं व्रतम् । आगच्छत परिजनाः, गच्छामः । **देवी**—आर्यपुत्र, न लङ्घितपूर्वः सांप्रतं नियमः ॥

**कोणेश्वरी**

**दातुमिति** । हे असहने, अन्यस्मै मां दातुं प्रभवसि दासमेव वा कर्तुं प्रभवसि । न पुनरहं तथा यथा त्वं शङ्कसे । त्वय्यहमनुरक्त एव । त्वं तु मामननुरक्तं वृथा शङ्कस इत्यर्थः ॥१४॥ **भोदु इति** । भवतु मा भवतु इत्यर्थः । **निर्दिष्टमिति** । निर्दिष्टं संपादितं प्रियप्रसादनव्रतम् । तत्परिजना गच्छाम इति । त्वमुदासीनोऽनुदासीनो वा इति विचारेण मम न प्रयोजनम् । आरब्धं व्रतं तावन् निर्व्यूढमित्यर्थः ॥ **अज्जेति** । आर्यपुत्र, अलङ्घितपूर्वः साम्प्रतं नियमः । अलङ्घनामनवधानं विना नियमो निर्व्यूढः । तथा च संप्रति गन्तुमेव मे युज्यत इति भावः ॥

**कुमारगिरिराजीया**

**दातुं वा** इत्यादि । त्वमन्यस्मै मां दातुं प्रभवसि । त्वमेव हर्तुं वा प्रभवसि । वा इति पक्षान्तरे । भीरु अधीरे मयि मद्विषये यथा विशङ्कसे अहं पुनर्न तथा तथाविधो न ॥ १४ ॥

---

१. दातुं वा प्रभवसि माम्—सा. ए. २. होहि—सा. ए.

**उर्वशी**–हला, पिअकलत्तो राएसी। न उण हिअअं णिवत्तेदुं [1]सक्कणोमि। [सखि, प्रियकलत्रो राजर्षिः। न पुनर्हृदयं निवर्तयितुं शक्नोमि।]

**चित्रलेखा**–कधं त्थिरासो[2] णिवत्तीअदि। [कथं स्थिराशो निवर्त्यते।]

**राजा**–(*आसनमुपसृत्य*) वयस्य, न खलु दूरं गता देवी।

**विदूषकः**–भण वीसद्धो जं सि वत्तुकामो। असज्झो त्ति [3]परिच्छिंदिअ आदुरो विअ वेज्जेण अइरेण मुक्को तत्थभवं भोदीए।

[भण विस्रब्धो यदसि वक्तुकामः। असाध्य इति परिच्छिद्य आतुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान् भवत्या।]

**राजा**–अपि नामोर्वशी—

**उर्वशी**–(*आत्मगतम्*) किदत्था भवे। [कृतार्था भवेत्।]

**राजा**–

[4]गूढं नूपुरशब्दमात्रमपि मे कान्तं[5] श्रुतौ पातयेत्,
पश्चादेत्य शनैः करोत्पलवृते[6] कुर्वीत वा लोचने।
हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमाना बलाद्,
आनीयेत पदात् पदं चतुरया सख्या ममोपान्तिकम्॥१५॥

[7]**चित्रलेखा**–हला उव्वसि, इमं दाव से मणोरहं संपादेहि।
[सखि उर्वशि, इमं तावदस्य मनोरथं सम्पादय।]

**उर्वशी**–[8](*ससाध्वसम्*) कीडिस्सं दाव। [क्रीडिष्ये तावत्।]

(*इति पृष्ठेनागत्य राज्ञो लोचने संवृणोति। चित्रलेखा विदूषकं सञ्ज्ञां लम्भयति।*)

---

१. सक्कुणोमि–सा. ए. २. किं तुए णिरासाए णिवत्तीअदि–सा. ए. ३. परिछिंदिअ–सा. ए. ४. गूढा–सा. ए. ५. कान्ता–सा. ए. ६. कराम्बुजवृते–सा. ए. ७. om.–सा. ए. ८. हला, इमं दाव से मणोरहं संपादइस्सं–सा. ए.

## प्रकाशिका

उर्वशी—प्रियकलत्रो राजर्षिः। न पुनर्हृदयं निवर्तयितुं शक्नोमि। **चित्रलेखा**—कथं स्थिराशो निवर्त्यते। **विदूषकः**—भण विस्रब्धो यदसि वक्तुकामः। असाध्य इति परिच्छिद्य आतुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान् भवत्या। 'अपि नामोर्वशी' इति 'गूढं नूपुर' इत्यनन्तरमग्रे वक्ष्यमाणपद्यान्वयि चूर्णकम्। **उर्वशी**—आत्मगतम्। कृतार्था भवेत्। इदमुर्वशीवचो राज्ञोऽपरिसमाप्तवचनोत्तरवाक्यत्वेनान्तरेवात्मगतमाशंसनम्। **गूढमिति**। अपि नामेति संभावनायाम्। 'उर्वशी' इति पूर्वेण सम्बन्धः। गूढं निभृत यथा तथा कान्तं मनोज्ञं नूपुरशब्दमात्रमपि मञ्जीरशिञ्जितमात्रमपि मे श्रुतौ कर्णे पातयेत् कर्णगोचरं कुर्यात्। 'मञ्जीरं नूपुरोऽस्त्रियाम्' इत्यमरः (२-६-९)। हर्म्ये धनिगृहे। 'हर्म्यादि धनिनां वासः' इत्यमरः (२-२-१०) ॥१५॥] **चित्रलेखा**—सखि उर्वशि, इमं तावदस्य मनोरथं सम्पादय। **उर्वशी**—क्रीडिष्ये तावत् ॥

## कोणश्वरी

**हलेति**। हला प्रियकलत्रो राजर्षिः। न पुनर्हृदयं निवर्तयितुं शक्नोमि। अस्य कलत्रं परमप्रेमपात्रं तथा चासावुपगन्तुं मम नार्हति, तथापि हृदयं तत्रैव चलतीति किमहं करोमि। अस्य च कलत्रे महती प्रीतिरिति स्त्रीणामयमेव भज्यते इति युज्यते। अतो मदीयं हृदयं गाढीभूयात्र न गच्छतीति भावः। **कथमिति**। कथं स्थिराशो निवर्त्यते। (अतः) निवर्त्यमित्यर्थः। **भणेति**। भण विश्वस्तो यदसि वक्तुकामः। असाध्य इति परिच्छिद्यातुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान् भवत्या। यथा वैद्येनासाध्य इति परित्यक्तस्तथा त्वमपि निवर्तयितुमशक्य इति कृत्वा देव्या उपेक्षितोऽसीति स्वाच्छन्द्येन यत्ते रोचते तत् कुर्वित्यर्थः। **अपीति**। श्लोकस्य क्रियया सम्बन्धः। नाम संभावनायाम्। **अज्जेति**—आर्य, कृतार्था अस्मि; (यथा) मापि गृहीतवानसि। ततः कृतकृत्याहमस्मि इत्यर्थः। **गूढमिति**—संभाव्यतेऽपि यत् गूढं यथा स्यादेवं कान्तं मनोज्ञं नूपुरशब्दमात्रमपि मे श्रुतौ पातयेत्। मंगुत्तैव मां नूपुरशब्दं श्रावयेदित्यर्थः। शनैः पश्चादागत्य करोत्पलधृते लोचने वा कुर्वीत। यथा मया न ज्ञायते तथागत्य मम नेत्रे करकमलाभ्यां मुद्रयेदिति वा सम्भावना क्रियत इति भावः। यद्वा अस्मिन् हर्म्येऽवतीर्य साध्वसवशान्मन्दायमाना सती चतुरया सख्या बलादाक्रम्य पदात् पदं मम समीपमानीयेत। यदि सा चतुरा स्यान् मम भाग्यं परिपन्थि न स्यात् तदा एवमपि भवतीति भावः ॥१५॥]

तथा चाग्रे भविष्यन्तीं तादृशीं दशां तस्याः सूचयति। **हलेति**। हला उर्वशि, इमं तावदस्य मनोरथं सम्पादय। क्रीडिस्सामि इति। क्रीडिष्यामि तावत्। **सव्याजमिति**। चेष्टायां तां निवारयतीत्यर्थः ॥

**कुमारगिरिराजीया** No commentary

राजा–(*स्पर्शं रूपयित्वा*) सखे, न खलु नारायणोरुसंभवा वरोरूः।

विदूषकः–कहं भवं अवगच्छदि । [कथं भवानवगच्छति ।]

राजा–किमत्र ज्ञेयम् ।

[1]अन्यत् कथमिव पुलकैः कलितं मम गात्रकं करस्पर्शात् ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्येवांशुभिः कुमुदम् ।। १६ ।।

---

### प्रकाशिका

न खल्विति शिरश्चालने । अपि तु सैवेत्यर्थः । नारायणोरुसम्भवा उर्वशी । विदूषकः– कथं भवानवगच्छति । अन्यदिति । अन्यदित्यन्यथेत्यर्थे । तथा च सैवेयमन्यथा करस्पर्शादिर्थादस्या मम गात्रकं पुलकैः कलितं कथमिव । यद्वा करस्पर्शात् मम गात्रकं पुलकैः कलितं सदन्यदिवानिर्वचनीयावस्थं कथं जातमिति शेषः । पाठान्तरे—अन्या स्त्री अनङ्गक्लिष्टं मदनपीडितं मेऽङ्गं करस्पर्शाद् गात्रकं पुलकैः कलितं सदन्यदिव सुखयति । एतदन्यथानुपपत्त्यैव सेत्यर्थः । तपनः सूर्यः ।। १६ ।।

### कोणेश्वरी

अन्यदिति । मम गात्रकं स्वगात्रकरस्पर्शमात्रेण पुलकैः कलितं रोमाञ्चितम् अन्यद् उर्वश्यतिरिक्तं वस्तु कथमिव कर्तुं क्षमस इत्यध्याहृत्य योज्यम् । उर्वशी परं करस्पर्शमात्रेणैवं कुर्यान्नान्या इत्यर्थः । अत्रार्थान्तरन्यासमाह—कुमुदं चन्द्रस्यांशुभिरिव तपनकिरणैर्नोच्छ्वसिति । यथा चन्द्रस्य किरणैः कुमुदमुन्मुद्रयति तथा न सूर्यकिरणैरित्यत्र किं क्रियताम् । किंचिद् वस्तु स्वभावादेव कस्यचित् किंचिदवस्थाप्रापकमिति भावः ।।१६।।

### कुमारगिरिराजीया

अङ्गमनङ्गेत्यादि । स्पष्टोऽर्थः । अत्र संचिन्त्यमानार्थस्य सिद्धौ क्रम इति सन्ध्यङ्गमुक्तं भवति ।।१६।।

---

१. अङ्गमनङ्गक्लिष्टं सुखयेदन्या न मे करस्पर्शात्—सा. ए.

[1]**उर्वशी**—अम्महे । वज्जलेवघडिदं विअ मे हत्थजुअलं ण समत्थाम्हि अवणेदुं । [अम्महे । वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्म्यपनेतुम् ।]

*(इति मुकुलिताक्षी चक्षुषी हस्तावपनीय ससाध्वसा तिष्ठति । राजा हस्ताभ्यां गृहीत्वा परिवर्तयति ।)*

**उर्वशी**—(*कथंचिदुपसृत्य*) जेदु जेदु महाराओ । [जयतु जयतु महाराजः ।]

**चित्रलेखा**—[2]सुहं दे वअस्स । [सुखं चे वयस्य ।

**राजा**—नन्वेतदुपपन्नम् ।

**उर्वशी**—हला, देवीए दिण्णो महाराओ । अदो से पणअवदी विअ सरीरसंगदम्हि । मा क्खु मं पुरोभाइणी त्ति समत्थेहि । [सखि, देव्या दत्तो महाराजः । अतोऽस्य प्रणयवतीव शरीरसङ्गतास्मि । मा खलु मां पुरोभागिनी इति समर्थय ।]

**विदूषकः**—कधं इह ज्जेव तुम्हाणं अत्थमिदो सूरो । [कथमिहैव युवयोरस्तमितः सूरः ।]

---

**प्रकाशिका**

**उर्वशी**—अम्महे आश्चर्ये । वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्म्यपनेतुम् । **उर्वशी**—जयतु जयतु महाराजः । **चित्रलेखा**—सुखं ते वयस्य । **उर्वशी**—सखि, देव्या दत्तो महाराजः । अतोऽस्य प्रणयवतीव शरीरसंगतास्मि । मा खलु मां पुरोभागिनी इति समर्थय । 'दोषैकदृक् पुरोभागी' इत्यमरः (३-१-४६) । **विदूषकः**—कथमत्रैव युवयोरस्तमितः सूरः । 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः (१-२-२९) । 'सुज्जो' इति पाठे सूर्यः ॥

**कोणेश्वरी**

**अम्महे इति** । आश्चर्यं वज्रलेपघटितमिव मे हस्तयुगलम् । अतो न समर्थास्म्यपनेतुम् । तथा च स्तम्भोऽस्यामभवदिति भावः । **एतदिति** ।

---

१. om.—सा. ए. २. अवि सुहं वअस्सस्स—सा. ए.

**राजा**–(*उर्वशीमवलोक्य*)

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमयि मे त्वया हृदयम् ॥१७॥

**चित्रलेखा**–वअस्स, णिरुत्तरा एसा। मम संपदं विण्णविअं सुणीअदु। [वयस्य, निरुत्तरैषा। मम साम्प्रतं विज्ञापितं श्रूयताम् ।]

---

**कोणेश्वरी**

शुभमित्यर्थः। यत उर्वशी समागतेति भावः। **एवाए** इति। एतया पुरोभागिन्या देवदेव इव शोभते भवान्। इन्द्र इव त्वमेतया प्रतिभासीत्यर्थः। **हलेति**। हला, देव्या दत्तो महाराजोऽतोऽस्य प्रणयवतीव शरीरसंगताऽस्मि। मा खलु मां पुरोभागिनी इति समर्थयिष्यसि। पुरोभागिनी इति उदासीना कथ्यते। अहमिदानीमेतस्य प्रियैव वृत्ता अतस्तथा मां न ब्रूया इत्यर्थः। अथ च ममैवाग्रे त्वया कलत्रे दासत्वादिकमङ्गीकृतमिति राजानं लज्जयतीति भावः। **कथमिति**। कथमिव युवयोरस्तमितः सूरः। तत् किं सूर्यास्तमनसमयेऽत्रभवती त्वमागतेत्यर्थः॥

**कुमारगिरिराजीया** No commentary

**प्रकाशिका**

**देव्येति**। व्यापारमालिङ्गनाद्यारम्भम् ॥१७॥ **चित्रलेखा**—वयस्य, निरुत्तरैषा। मम साम्प्रतं विज्ञापितं श्रूयताम् ॥

**कोणेश्वरी**

**देव्येति**। यदि मे त्वमस्मिन् शरीरे देव्या दत्त इति कृत्वा व्यापारं व्रजसि तदा हे चौरि प्रथमं कस्यानुमते हृदयं त्वया हृतमाकृष्टम्। तदा तावत् कस्यापेक्षा न कृता किन्तु मदीयं चित्तं चोरितमेव। इदानीं कथमेवं भण्यत इति भावः ॥१७॥ **वअस्सेति**। वयस्य, निरुत्तरैषा। एतस्मिन् त्वद्वचसि किमप्युत्तरमस्या नास्तीत्यर्थः। **ममेति**। मम साम्प्रतं विज्ञापितं श्रूयताम् ॥

**कुमारगिरिराजीया**

**देव्या दत्त इति**। स्पष्टोऽर्थः। अत्र देवीप्रसङ्गेन व्यवहितस्य बीजस्य पुनर्योजनाद् आक्षेपो नाम सन्ध्यङ्गमुक्तं भवति ॥१७॥

राजा-अवहितोऽस्मि ।

**चित्रलेखा**-वसंताणंतरं उण्हसमए भअवं सुज्जो मए उवअरिदव्वो । ता जधा इअं मे पिअसही सग्गस्स ण उक्कंठेदि तहा वअस्सेण कादव्वं । [वसन्तानन्तरमुष्णसमये भगवान् सूर्यो मयोपचरितव्यः । तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम् ।]

**विदूषकः**-भोदि, किं वा सग्गे सुमरिदव्वं । ण तत्थ खाईअदि ण पीअदि । केवं अणिमिसेहिं अच्छीहिं मीणदा अवलंबीअदि । [भवति, किं वा स्वर्गे स्मर्तव्यम् । न तत्र खाद्यते न पीयते । केवलमनिमिषैरक्षिभिर्मीनताऽवलम्ब्यते ।]

---

**प्रकाशिका**

अवहितः सावधानः । **चित्रलेखा**—वसन्तानन्तरमुष्णसमये भगवान् सूर्यो मयोपचरितव्यः । उपचरितव्यः सेवनीयः । तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम् । अनेन भाविविरहसूचनमित्यग्रिमाङ्कार्थोपक्षेपादङ्कावतारोऽयम् । **विदूषकः**—भवति, किं वा स्वर्गे स्मर्तव्यम् । न तत्र खाद्यते न पीयते । केवलमनिमिषैरक्षिभिर्मीनतावलम्ब्यते ॥

**कोणेश्वरी**

किं तदित्याकाङ्क्षायामाह—**वसंतेति** । वसन्तानन्तरमुष्णसमये भगवान् सूर्यो ममोपचरितव्यस्तस्माद् यथेयं मे प्रियसखी सुखस्य न स्मरति तथा कर्तव्यम् । किं वा स्वर्गे स्मर्तव्यम् । तत्र न खाद्यते न पीयते । केवलमनिमेषाभ्यामक्षिभ्यां मीनताऽवलम्ब्यते । भक्षणादिकं हि सुखहेतुस्तत्र नास्त्येव । मत्स्यस्येव नेत्रनिमेषशून्यता परमस्ति । तथा च न सुखमित्यर्थः ॥

**कुमारगिरिराजीया**

No commentary

**राजा**–वयस्य,

अनिर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते ।
अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः ॥१८॥

**चित्रलेखा**–अणुगिहीदम्हि । हला उव्वसि, अकादरा भविअ विसज्जेहि मं । [अनुगृहीतास्मि । सखि उर्वशि, अकातरा भूत्वा विसर्जय माम् ।]

**उर्वशी**–(*चित्रलेखां परिष्वज्य सकरुणम्*) सहि, मा खु मं विसुमरेसि । [सखि, मा खलु मां विस्मरिष्यसि ।]

**चित्रलेखा**–(*सस्मितम्*) वअस्सेण संगदा तुमं मए एव्वं जाचिदव्वा । [वयस्येन संगता त्वं मयैवं याचितव्या ।]

(*इति राजानं प्रणम्य निष्क्रान्ता*)

**विदूषकः**–दिट्ठिआ [1]मणोरहसिद्धीए वड्ढदि भवं । [दिष्टया मनोरथसिद्ध्या वर्तते भवान् ।]

---

**प्रकाशिका**

अनिर्देश्येति । अनिर्देश्यं वक्तुमशक्यं सुखं यस्य । तुः परमित्यर्थः । अनन्यनारीसामान्यः । असाधारण इत्यर्थः ॥१८॥ **चित्रलेखा**—अनुगृहीतास्मि । सखि उर्वशि, अकातरा भूत्वा विसर्जय माम् । **उर्वशी**—सखि, मा खलु मां विस्मरिष्यसि । **चित्रलेखा**—वयस्येन संगता त्वं मयैवं याचितव्या । **विदूषकः**—दिष्टया मनोरथसिद्ध्या वर्तते भवान् ॥

**कोणेश्वरी**

अनिर्देश्येति । न निर्देष्टुं शक्यते अनिर्देश्यमनिर्वचनीयमिति यावत् ॥१८॥

**कुमारगिरिराजीया**

अनिर्देश्येति । स्पष्टोऽर्थः ॥

---

१. मणोरहसंपत्तीए वड्ढदि–सा. ए.

**राजा**—इमां तावन्मनोरथसिद्धिं पश्य ।

सामन्तमौलिमणिरञ्जित[1]पादपीठम्,
एकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे चरणयोरहमद्य कान्तम्,
आज्ञाकरत्वमधिगम्य यथा कृतार्थः ॥१९॥

**उर्वशी**—णत्थि मे वाआविहवो अदो अवरं मंतिदुं । [नास्ति मे वाग्विभवोऽतोऽपरं मन्त्रयितुम् ।]

**राजा**—(*उर्वशीं हस्तेनावलम्ब्य*) अहो, [2]अविरुद्धसंवर्धनमेतदिदानीमीप्सितलम्भानाम् । यतः

पादास्त एव शशिनः सुखयन्ति गात्रं,
बाणास्त एव मदनस्य मनोऽनुकूलाः ।
संरम्भरूक्षमिव सुन्दरि यद्यदासीत्,
त्वत्संगमेन मम तत्तदिवानुनीतम् ॥२०॥

**उर्वशी**—अवरद्धम्हि चिरआरिआ महाराअस्स । [अपराद्धाऽस्मि चिरकालिका महाराजस्य ।]

**राजा**—सुन्दरि, मा मैवम् ।

यदेवोपनतं दुःखात् सुखं तद्रसवत्तरम् ।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥२१॥

**विदूषकः**—भोदि, सेविदा पदोसरमणीआ चंदवादा । ता समओ क्खु दे [3]गेहप्पवेसस्स । [भवति, सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । तत् समयः खलु ते गेहप्रवेशस्य ।]

**राजा**—तेन हि सख्या मार्गमादेशय ।

---

१. वासमाक्कम्—सा. ए. २. विरुद्धसंवर्धनं ईप्सितलाभो नाम—सा. ए.
३. वासघरप्पवेसस्स—सा. ए.

**विदूषकः**–इदो इदो भोदी । [इत इतो भवती । ]

(*इति परिक्रामन्ति*)

**राजा**–सुन्दरि, इयमिदानीं मे प्रार्थना ।

**उर्वशी**–[1]कीरिसी सा [कीदृशी सा । ]

---

**प्रकाशिका**

**सामन्तमौलीति** । सामन्ता अधीशाः । 'सामन्तः स्यादधीश्वरे' इति **त्रिकाण्डी** (२-८-२) । मौलयः किरीटाः । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इति सैव (३-३-१९३) । अवनेर्भुवः प्रभुत्वं स्वाम्यमधिगम्य प्राप्य तथा कृतार्थो न । आज्ञाकरत्वं सेवकत्वम् ॥१९॥ **उर्वशी**—नास्ति मे वाग्विभवोऽस्तोऽपरं मन्त्रयितुम् ।

ईप्सितलम्भानां वाञ्छितप्राप्तीनाम् । **पादा इति** । पादाः किरणाः । संरम्भरूक्षं रोषदारुणम् । अनुनीतं कृतसान्त्वनमिव ॥२०॥

**उर्वशी**–अपराद्धास्मि चिरकालिका महाराजस्य । **यदेवेति** । यदेव सुखं दुःखात् पीडोत्तरमुपनतं प्राप्तं तद् रसवत्तरं स्वादुतरं भवति । 'रसो रागे तथा वीर्ये तिक्तादौ पारदे द्रवे । रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥' इति **वैजयन्ती** । हि यतः । तरुच्छाया निर्वाणाय सुखाय । तप्तस्य विशेषतः । अतिसुखायेत्यर्थः । 'निर्वाणं निर्वृतौ मोक्षे' इति **त्रिकाण्डशेषः** (३-१३२) ॥२१॥

**विदूषकः**–भवति, सेविताः प्रदोषरमणीयाश्चन्द्रपादाः । तत्समयः खलु ते गेहप्रवेशस्य । **विदूषकः**–इत इतो भवती । **उर्वशी**–कीदृशी सा ॥

**कोणेश्वरी**

**तदिति** । तथा च गृहप्रवेशं कुर्वित्यर्थः ॥

**कुमारगिरिराजीया**

**सामन्तेत्यादि** । स्पष्टोऽर्थः ॥१९॥ **पादास्त एवेत्यादि** । स्पष्टोऽर्थः ॥२०॥ **यदेवेति** । स्पष्टोऽर्थः ॥२१॥

---

१. का विअ–सा. ए.

राजा-

अनधिगतमनोरथस्य पूर्वं
[1]शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ततः कृती भवेयम् ॥२२॥

(इति निष्क्रान्ताः सर्वे)

इति महाकविकालिदासविरचिते **विक्रमोर्वशीये**
तृतीयोऽङ्कः ।

---

**प्रकाशिका**

**अनधिगतेति** । अनधिगतमनोरथस्य अप्राप्तत्वत्समागमसुखाभिलाषस्य ॥२२॥

इति श्रीमद्यायजूकप्रवरश्रीभिम्बेकरोपनामकमौनिकुलालंकारश्रीरङ्गनाथदीक्षितकुक्षिजबिन्दुवृन्दपुरन्दरश्रीबालकृष्णदीक्षिततनूद्गतरङ्गनाथविरचितायां **विक्रमोर्वशीप्रकाशिकायां** तृतीयाङ्कोन्मेषः ॥

**कोणेश्वरी**

**अनधिगतेति** । पूर्वमनधिगतमनोरथस्य मम तावत् शतगुणितेव त्रियामा गता । यदि पुनस्तव समागमे हे सुभ्रु, तथैव प्रसरति ततः कृती भवेयम् । अहमिति प्रार्थये यत् तव संगमे रजनिरधिकायतामित्यर्थः ॥ २२ ॥

इति श्रीमहामहोपाध्यायमुरारिविरचितायां **विक्रमोर्वशीटीकायां** तृतीयोऽङ्कः संपूर्णः ॥

**कुमारगिरिराजीया**

**अनुपनतेत्यादि** । अनुपनतमनोरथस्य अनुपनतः अप्राप्तः मनोरथः अभिलषितोऽर्थः येन स तथोक्तः, तस्य मे पूर्वमस्मात् समागमात् प्रथमं त्रियामा रात्रिः शतगुणित्वं गतेव प्राप्तेव । एका रात्रिः शतरात्रितुल्यकालतां गतेत्यर्थः । हे सुभ्रु, इदानीं तव समागमे सत्यपि सा रात्रिः तथैव शतगुणैव प्रसरति यदि प्रयाति चेत् ततस्तस्माद् हेतोः कृती कृतार्थो भवेयम् ॥२२॥

अत्रेयं सूचना उत्तराङ्ककथोपयोगित्वाद् बिन्दुरित्यवगन्तव्यम् ॥

इति **काटयवेमभूपविरचिते कुमारगिरिराजीये विक्रमोर्वशीयव्याख्याने** तृतीयोऽङ्कः ॥

---

१. शतगुणितामिव मे गता त्रियामा—कु. गि.

## चतुर्थोऽङ्कः

(नेपथ्ये सहजन्याचित्रलेखयोः प्रावेशिक्याक्षिप्तिका)

पिअसहिविओअविमणा सहिसहिआ वाउला समुल्लवइ।
सूरकरफंसविअसिअतामरसे सरवरुच्छंगे[1] ॥१॥
[प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति।
सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे॥१॥]

(ततः प्रविशति सहजन्या चित्रलेखा च)

**चित्रलेखा**–(प्रवेशानन्तरं द्विपदिकया दिशोऽवलोक्य)

सहअरिदुक्खालिद्धअं,
सरवरअम्मि सिणिद्धअं।
बाहोवग्गिअणअणअं,
तम्मइ हंसीजुअलअं ॥२॥
[सहचरीदुःखालीढं
सरोवरे स्निग्धम्।
बाष्पापवलिगतनयनं
ताम्यति हंसीयुगलम् ॥२॥]

---

**प्रकाशिका**

मम स भविकाय भवताद्भवभयहन्ता हृतानार्यः।
निजचरणसक्तभक्तप्रापितकामश्चिरं रामः॥

सहजन्याचित्रलेखयोरुर्वशीसख्योः प्रवेशसूचकामाक्षिप्तिकाभिधां गीतिमुपक्षिपति। पिअसहीति। प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति। सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे॥, सखीं सखीति वा। उर्वशीविरहदूनचेताः सहजन्योपेता विह्वला कासारोपान्तोपविष्टा चित्रलेखा विलपतीत्यर्थः। सखीं सहजन्यां प्रति सखी चित्रलेखा वदतीत्यर्थ इति

---

1. सरवरुच्छंगे–सा. ए.

प्रकाशिका

वा । रविकरसंपर्कसंजातविकासरक्तसरोजवन्मत्सख्याः कदा नु भर्तृसंदर्शनादि जनितं सुखं संपत्स्यत इति सरोविशेषणध्वनिः । आक्षिप्तिकालक्षणमाह **भरतः**

चञ्चत्पुटादितालेन मार्गत्रयविभूषिता ।
आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥

इति । पात्रप्रवेश एवैतस्या निवेशः । गाथा छन्दः । तल्लक्षणं च **पिङ्गले**—

पढमं बारह मत्ता बीए अट्ठारहेण संजुत्ता ।
जह पढमं तह तीअं दहपंचविहूसिआ गाहा ॥ (प्रा. पिं. १-५५)

इति । दशपञ्चेत्यर्थाच्चतुर्थचरणे पञ्चदशमात्राविभूषिता भवतीत्यर्थः विशेषान्तरं च तत्रैव—

सत्तगणा दीहंता जो ण लहू छट्ठ णेह जो विसमे ।
तह गाहे वि अ अद्धे छट्ठं लहुअं विआणेहु ॥ (प्रा. पिं. १-५६)

इति । गणश्चतुष्कलः । प्राकृतपद्ये न जगणः षष्ठः । छट्ठं लहुअं इति । एकं लघुरेव षष्ठो गणः कार्य इत्यर्थः । विषमे जगणाभावः । अन्ते गुरुश्चात्राप्यावश्यक इति हृदयम् ॥१॥

**द्विपदिकया दिशोऽवलोक्येति** । द्विपदिकाख्यगीतिविशेषेण दिगवलोकनं विधायाग्रिमां गाथां पठतीत्यर्थः । दिशोऽवलोक्य द्विपदिकाख्यगीत्या वदतीत्यर्थो वा । तल्लक्षणं चाह भगवान् **भरतमुनिः** —

शुद्धा खण्डा च मात्रा च संपूर्णेति चतुर्विधा ।
द्विपदी करणाख्येन तालेन परिगीयते ॥
पादे छः पञ्चभागोऽन्ते नजौ षष्ठद्वितीयकौ ।
चतुर्भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते ॥
अर्धान्तेऽन्ये स्वरानाहुः खण्डा स्याच्छुद्धयार्यया ।
षष्ठेनैकेन गुरुणा मात्राद्विपदिका मता ॥
ज्ञेया शुद्धेव संपूर्णा गुरुणान्तेऽधिकेन तु ॥

इति । हंसीयुगलान्योक्त्या स्वपीडातिशयं वर्णयति-**सहअरीति** । सहचरीदुःखालीढं सरोवरे स्निग्धम् । बाष्पापवलितनयनं ताम्यति हंसीयुगलम् ॥ अपवलितमुपप्लुतम् । ताम्यति ग्लानिं भजते ॥२॥

कोणेश्वरी

**पिअसहीति** । प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति । सूरकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥ सूरकिरणस्पर्शेन विकसितानि तामरसानि यत्र तादृशे सरोवरोत्सङ्गे सरोऽन्तरे कयाचित् सख्या सहिता

**सहजन्या**– *(सखेदम्)* सहि चित्तलेहे, मिलाअमाणसअवत्तकसणा दे मुहच्छाआ हिअअस्स असत्थदं[1] सूचेदि । ता कहेहि मे अणिव्विदिकारणं जेण दे समाणदुक्खा होमि । [सखि चित्रलेखे, म्लायमानशतपत्रकृष्णा ते मुखच्छाया हृदयस्यास्वस्थतां सूचयति । तत् कथय मेऽनिर्वृतिकारणं येन ते समानदुःखा भवामि ।]

---

**कोणेश्वरी**

प्रियसख्याः कस्याश्चित् वियोगेन विमना उद्विग्नचित्ता अत एव व्याकुला समुल्लपति । अन्योन्यं संलापं विदधातीत्यर्थः ॥१॥

**सहेति** । सहजन्याचित्रलेखयोर्दिव्याङ्गनयोः प्रावेशिकीमाक्षिपतीत्यर्थः । तथा च एवमाकारेण ते प्रवेशं करिष्यत इति सूचितम् ।

**द्विपदिकयेति** । द्वाभ्यां चरणाभ्यामग्रमात्रस्पृष्टभूमिभ्यां स्थित्वेत्यर्थः । सहअरीति । सहचरीदुःखाश्लिष्टं सरोवरे स्निग्धम् । बाष्पाक्रान्तनयनं ताम्यति हंसीयुगलकम् ॥२॥ अत्र हंसीयुगलत्वेन सहजन्याचित्रलेखे एव च्छलेन निरुच्येते । तथा च एतादृगवस्थत्वं तयोरनुपदमेवाह ॥

**कुमारगिरिराजीया**

कविरिदानीमान्तरमङ्कमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नाम अर्थोपक्षेपकं प्रस्तौति ॥

**प्रकाशिका**

**सहजन्या** । सखि चित्रलेखे, म्लायमानशतपत्रकृष्णा ते मुखच्छाया हृदयस्यास्वस्थतां सूचयति । तत् कथय मेऽनिर्वृतिकारणं येन ते समानदुःखा भवामि ॥

**कोणेश्वरी**

**सहीति** । सखि चित्रलेखे, म्लायमानशतपत्रकृष्णा मुखच्छाया हृदयस्यासुस्थितिं सूचयति । तत्र कथय मे अनिर्वृतिकारणं येन ते समानदुःखा भवामि । यदि त्वं दुःखकारणं कथयसि तदा तेनाहमपि त्वमिव दुःखं भावयामीति भावः ॥

**कुमारगिरिराजीया** No commentary

---

१. असुत्थदं सूएदि–सा. ए.

**चित्रलेखा**–सहि, [1]अच्छरावावारपज्जाएण तत्थभवदो सुज्जस्स उवट्ठाणे वट्टंती पिअसहीए विणा[2] बलिअं उक्कंठिदम्हि । [सखि, अप्सरोव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमाना प्रियसख्या विना बलवदुत्कण्ठितास्मि ।]

**सहजन्या**–सहि, जाणामि वो अण्णोण्णगदं पेम्मं । तदो तदो। [सखि, जानामि वोऽन्योन्यगतं प्रेम । ततस्ततः ।]

**चित्रलेखा**–तदो इमेसु दिवसेसु को णओ वुत्तंतो वट्टदि त्ति पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धं । [तत एतेषु दिवसेषु को नवो वृत्तान्तो वर्तत इति प्रणिधानस्थितया मयाऽत्याहितमुपलब्धम् ।]

**सहजन्या**–सहि, केरिसं तं । [सखि, कीदृशं तत् ।]

---

**प्रकाशिका**

**चित्रलेखा**–अप्सरोव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमाना प्रियसख्या विना बलवदुत्कण्ठितास्मि । 'वसन्तोत्सव आगत इति बलवदुत्कण्ठितास्मि' इति पाठे वसन्तोत्सव आ सामस्त्येन गतः । आः गत इति वा पदच्छेदः । आः इति खेदे ।

**सहजन्या**–सखि, जानामि युवयोरन्योन्यगतं प्रेम। ततस्ततः। **चित्रलेखा**–तत एतेषु दिवसेषु को नवो वृत्तान्तो वर्तत इति प्रणिधानस्थितया मयाऽत्याहितमुपलब्धम् । 'अत्याहितं तु जीवानपेक्षकृत्ये महाभये' इति विश्वलोचनः । **सहजन्या**–सखि, कीदृशं तत् ॥

**कोणेश्वरी**

चित्रलेखा कथयति । **सहीति** । सखि, अप्सरोव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमानायाः प्रियसख्या विना वसन्तोत्सव आगत इति बलवदुत्कण्ठितास्मि । प्रियसख्या विना तया विश्लिष्टायाः सूर्योपस्थाने वर्तमानायाः इति

---

१. अच्छरावार–सा. ए. २. वसंतूसवो आगदो त्ति–सा. ए.

**चित्रलेखा**–(*सकरुणम्*) उव्वसी किल गाएसि लच्छीसणाहं गेण्हिअ अमच्चेसु [1]णिहिदकज्जधुरं केलाससिहरुद्देसं गंधमादणवणं विहरिदुं गदा । [उर्वशी किल राजर्षि लक्ष्मीसनाथं गृहीत्वाऽमात्येषु निहितकार्यधुरं कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता ।]

**सहजन्या**–(*सश्लाघम्*) सहि, सो संभोओ जो तारिसेसु पदेसेसु । तदो तदो । [सखि, स संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ।]

---

**कोणेश्वरी**

योजना । सहीति–सखि, जानामि वोऽन्योन्यगतं प्रेम । तथा च तादृशमेव युवयोः प्रेम येन तया विना तादृशे समये तवोत्कण्ठा भवत्येवेति भावः । ततस्ततः । तदनन्तरं किं वृत्तमित्यर्थः । तदो इति । तत एषु दिवसेषु को नु खलु वृत्तान्तो वर्तत इति प्रणिधानस्थितया मया अत्याहितमुपलब्धम् । केरिसं इति । कीदृशं तदत्याहितमित्यर्थः ।।

**कुमारगिरिराजीया** No commentary

**प्रकाशिका**

चित्रलेखा–उर्वशी किल त राजर्षि लक्ष्मीसनाथं गृहीत्वा अमात्येषु निहितकार्यधुरं कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता । सहजन्या–सखि, स संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ।।

**कोणेश्वरी**

उव्वसीति । उर्वशी किल तं राजर्षि लक्ष्मीसमन्वितं गृहीत्वा अमात्येषु निवेशितकार्यधुरं कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता । कैलासशिखर-समीपे गन्धमादननामके वने । गन्धेन मदयतीति योगेन रूढ्या च । अमात्येषु निवेशितकार्यधुरं राजर्षि गृहीत्वा इति योजना । सहीति । सखि, स संभोगो यस्तादृशेषु प्रदेशेषु । तत् परं सम्भोगस्थानमित्यर्थः ।।

**कुमारगिरिराजीया**

गन्धमादनं नाम हिमवत्पुरस्योपकिप्रस्थस्योपवनम् । तथा चोक्तं कुमारसंभवे–'यस्य चोपवनं बाह्यं गन्धवद् गन्धमादनम्' (६-४६) ।।

---

१. णिवेसिदरज्जधुरं–सा. ए. कु. णिवेसिदकज्जधुरं–को.

**चित्रलेखा**—तदो तहिं मंदाइणीतीरे सिकदापव्वदेहिं कीलमाणा उदअवदी णाम विज्जाहरदारिआ तेण राएसिणा चिरं णिज्झाइद त्ति कदुअ कुविदा मे पिअसही उव्वसी। [ततस्तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडमानोदयवती नाम विद्याधरदारिका तेन राजर्षिणा चिरं निध्यातेति कृत्वा कुपिता मे प्रियसख्युर्वशी । ]

**सहजन्या**—असहणा खु सा। दूरारूढो अ से पणओ। ता भविदव्वदा एत्थ बलवदी। तदो तदो। [असहना खलु सा। दूरारूढश्चास्याः प्रणयः। तद् भवितव्यताऽत्र बलवती। ततस्ततः । ]

---

### प्रकाशिका

**चित्रलेखा**—ततस्तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडमानोदयवती नाम विद्याधरदारिका तेन राजर्षिणा चिरं निध्याता इति कृत्वा कुपिता मे प्रियसखी उर्वशी। निध्याता अवलोकिता। **सहजन्या**—असहना खलु सा। दूरारूढश्चास्याः प्रणयः। तद् भवितव्यतात्र बलवती। ततस्ततः ॥

### कोणेश्वरी

**तदो** इति। ततस्तस्मिन् मन्दाकिनीतीरप्रदेशे सिकतापर्वतैः क्रीडन्ती उदयवती नाम विद्याधरदारिका तेन राजर्षिणा चिरं निध्याता इति कृत्वा कुपिता मे प्रियसखी उर्वशी। काचिद् विद्याधरकन्यका नाम्ना उदयवती तत्र सिकतायाः पर्वतं विधायान्यक्रीडनेन क्रीडां कुर्वाणा आसीत्। ततः सा पुरूरवसा बहुकालं साकाङ्क्षीभूय दृष्टेति उर्वश्याः कोपोऽभूदित्यर्थः। **असहणेति**। असहना खलु सा। दूरारूढश्चास्याः प्रणयः। तस्माद् भवितव्यतात्र बलवती। यथा भवितव्यं भविष्यतीति भावः ॥

### कुमारगिरिराजीया

निध्याता दृष्टेति ॥

चित्रलेखा–तदो भत्तुणो अणुणअं अप्पडिवज्जमाणा गुरुसावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्मकाजणपरिहरणिज्जं कुमारवणं पविट्ठा। पवेसाणंतरं च काणणोवंतवत्तिलदाभावेण परिणदं से रूवं। [ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्।]

---

### प्रकाशिका

चित्रलेखा–ततो भर्तुरनुनयमप्रतिपाद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्। अप्रतिपद्यमानाऽस्वीकुर्वाणा। गुरुर्गरिष्ठो यः शापस्तेन। गुरुर्भरतमुनिस्तद्दत्तशापेन वा। अम्मकाशब्दो देशी स्त्रीवाचकः॥

### कोणेश्वरी

तदो इति। ततः सा भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्। अनन्तरं भर्तृकृतमनुनयमगृहीत्वा गुरोर्भरतस्य शापात् संमूढहृदयतया विस्मृतो देवताकृतो नियमो यया सा तथा। नियमस्त्वेवं श्रूयते। कार्त्तिकेयो महत्तपस्तत्र वने चचार। तत् क्षुभितेनेन्द्रेणाप्सरसस्तत्समाधिभङ्गाय प्रहिताः। ततः कार्त्तिकेयेन तज्ज्ञात्वा नियम एवं कृतो यदस्मिन् वने या स्त्री प्रवेक्ष्यति सा लतारूपतां प्राप्स्यतीति। तेन तया लतारूपता प्राप्तेत्यर्थः॥

### कुमारगिरिराजीया

No commentary

**सहजन्या**–(*सकरुणम्*) सव्वधा णत्थि विहिणो अलंघणीअं णाम जेण तारिसस्स अण्णारिसो एव्व परिणामो संवुत्तो। तदो तदो। [सर्वथा नास्ति विधेरलङ्घनीयं नाम येन तादृशस्यान्यादृश एव परिणामः संवृत्तः। ततस्ततः।]

**चित्रलेखा**–तदो सो वि तस्सिं एव्व काणणे पिअदमं अण्णेसंतो उम्मत्तीभूदो इदो उव्वसी तदो उव्वसि त्ति कदुअ अहोरत्तं अदिवाहेदि। (*नभोऽवलोक्य*) इमिणा उण णिव्वुदाणं वि उक्कंठाकारिणा मेहोदएण अप्पडीआरो भविस्सदि त्ति तक्केमि। [ततः सोऽपि तस्मिन्नेव कानने प्रियतमामन्विष्यन्नुन्मत्तीभूत इत उर्वशी तत उर्वशी इति कृत्वाहोरात्रमतिवाहयति। अनेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि।]

---

**प्रकाशिका**

**सहजन्या**। सर्वथा नास्ति विधेरलङ्घनीयं नाम। येन तादृशस्यान्यादृश एव परिणामः संवृत्तः। ततस्ततः। **चित्रलेखा**–ततः सोपि तस्मिन्नेव कानने प्रियतमामन्विष्यन्नुन्मत्तीभूत इत उर्वशी तत उर्वशी इति कृत्वाऽहोरात्रमतिवाहयति। अनेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि॥

**कोणेश्वरी**

**सव्वधा इति**। सर्वथा नास्ति विधेरलङ्घनीयं नाम येन तादृशस्यान्यादृश एव परिणामः संवृत्तः। तादृक्सुन्दरी उर्वशी लता भविष्यतीत्यत्र विधिर्बलवानित्यर्थः। **तदो इति**। ततः सोऽपि तस्मिन्नेव कानने प्रियतमामन्वेषयन्नुन्मत्तीभूत इत उर्वशी तत उर्वशी इति अहोरात्राणि अतिवाहयति। **एदिणेति** एतेन पुनर्निर्वृतागामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि। निगदस्फुटमेतत्॥

**कुमारगिरिराजीया** No commentary

(*अनन्तरे जम्भलिका*)

सहअरिदुक्खालिद्धअं सरवरअम्मि गिणिद्धअं ।
अविरलबाहजलोल्लअं तम्मइ हंसीजुअलं ॥३॥
[सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥३॥

[1] **सहजन्या**—सहि, अत्थि को वि समाअमोवाओ । [सखि, अस्ति कोऽपि समागमोपायः ।]

---

### प्रकाशिका

**अनन्तरे जम्भलिका**—जम्भलिका गीतिविशेषः । तथा चाह भरतः—

उद्ग्राहो द्विः सकृद्वैकखण्डो द्विः शकलोऽथवा ।
यत्र ध्रुवो द्विराभोगो ध्रुवेऽमुक्तिः स जम्भकः ॥

इति । एतस्यैव नाम जम्भलिकेति मतङ्गमतम् । 'ध्रुवे मुक्तिरहिता पूर्वोक्त-लक्षणलक्षिता सा' इति श्रीमद्भट्टसोमेश्वरचरणाः । पुनः 'सहचरि' इत्येव पठति तृतीयचरणपरिवर्तनेन । अविरलबाहजलोल्लअं अविरलबाष्पजलार्द्रम् । 'ओल्ल-अं' इत्यार्द्रे देशी ॥३॥ सहजन्या—सखि, अस्ति कोऽपि समागमोपायः ॥

### कोणेश्वरी

**जम्भलिकेति** । लयविशेष इत्यर्थः ।

लद्वयं खद्वयं यत्र सविरामं द्विधा भवेत् ।
कलाषट्तयसंयुक्तः प्रोक्तो जम्भालिका लय. ॥

**सहअरीति** । सहचरीदुःखानुशिष्टं सरोवरे स्निग्धकम् । अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥ एतादृशावस्थे सहजन्याचित्रलेखे संप्रति स्त इत्यर्थः ॥३॥ **सहीति** । सखि, अस्ति कोऽपि समागमोपायस्तस्योर्वश्या इति शेषः ॥

### कुमारगिरिराजीया

No commentary

---

1. om.— सा. ए.

[1] **चित्रलेखा**–गोरीचरणराअसंभवं संगभमणिं वज्जिअ कुदो से समाअमोवाओ । [गौरीचरणरागसम्भवं सङ्गममणिं वर्जयित्वा कुतोऽस्याः समागमोपायः ।]

**सहजन्या**–ण तारिसा आकिदिविसेसा चिरं दुक्खभाइणो होंति । ता अवस्सं कोवि अणुग्गहणिमित्तभूदो समाअमोवाओ भविस्सदि त्ति तक्केमि । (*प्राचीं दिशं विलोक्य*) ता एहि । [2] उदआहिवस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह । [न तादृशा आकृतिविशेषाश्चिरं दुःखभाजो भवन्ति । तदवश्यं कोऽप्यनुग्रहनिमित्तभूतःसमागमोपायो भविष्यतीति तर्कयामि । तदेहि । उदयाधिपस्य भगवतः सूर्यस्योपस्थानं कुर्वः ।]

---

**प्रकाशिका**

**चित्रलेखा**–गौरीचरणरागसंभवं संगममणिं वर्जयित्वा कुतोऽस्याः समागमोपायः । **सहजन्या**–न तादृशा आकृतिविशेषाश्चिरं दुःखभाजो भवन्ति । तदवश्यं कोऽप्यनुग्रहनिमित्तभूतः समागमोपायो भविष्यतीति तर्कयामि । तदेहि । उदयाधिपस्य भगवतः सूर्यस्योपस्थानं कुर्वः ॥

**कोणेश्वरी**

गौरीचरणरागसंभवं मणिं वर्जयित्वा कुतोऽस्याः समागमोपायः । स च साम्प्रतमतिदुर्लभ इति भावः । **णेति** । न तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति । तदवश्यं कोऽप्यनुग्रहनिमित्तभूतः समागमोपायो भविष्यतीति तर्कयामीति भावः । **ता** इति । तस्मादेहि । उदयाधिपस्य भगवतः सूर्यस्योपस्थानमाचरामः ॥

**कुमारगिरिराजीया**

**ता अवस्सं** इति । भूयोऽपि समागमकारणं भविष्यति । अत्र समागमस्यास्य अवश्यंभावित्वनिश्चयान् नियताप्तिः इति चतुर्थी अवस्था सूचिता ॥

---

१. om –सा ए. २. उदउम्मुहस्स–सा. ए.

(*अनन्तरे खण्डधारा*)

चिंतादुम्मिअमाणसिआ सहअरिदंसणलालसिआ ।
विअसिअकमलमणोहरए विहरइ हंसी सरवरए ॥४॥

(*इति निष्क्रान्ते*)

[ चिन्तादूनमानसा, सहचरीदर्शनलालसा ।
विकसितकमलमनोहरे, विहरति हंसी सरोवरे ॥४॥ ]

## प्रवेशकः

---

### प्रकाशिका

**खण्डधारेति**—खण्डधाराख्यो गीतिविशेषः । तल्लक्षणं तु—

यद् गीतं गुणचर्या च रागेण क्रीडनेन च ।
तालेन सा खण्डधारा यष्टिकेन प्रकाशिता ॥

इति । हंस्यन्यापदेशेन पुनः स्वावस्थामाह—**चिन्तेति** । चिन्तादूनितमानसा सहचरीदर्शनलालसा । विकसितकमलमनोहरे विहरति हंसी सरोवरे ॥४॥

**प्रवेशक इति** । **साहित्यदर्पणे** (६-५७)—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

इति । अङ्कद्वयान्तरिति प्रथमाङ्केऽस्य निषेधः । शेषमिति—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः संक्षिप्तार्थश्च' (सा. द. ६-५५) इत्यर्थः । अत्र च विचार-विशेष पूर्वोक्तत्वात् पुनर्न लिखितः ॥

### कोणेश्वरी

**खण्डधारेति** । सा यथा—

खचतुष्कं विरामान्तं द्विधा गुरुसमन्वितम् ।
पातत्रयोदशोपेतं यत्र सा खण्डधारिका ॥
रथाकाशविमानानां गतावुत्कण्ठितस्य वा ।
सङ्क्रमे खण्डधारा स्यान् मध्यमोत्तमयोजिता ॥

इति । **चिन्तेति** । चिन्तादुःखितमानसिका सहचरीदर्शनलालसिका । **विकसित**-

(नेपथ्ये पुरूरवसः प्रावेशिक्याक्षिप्तिका)

गह्णं गइंदणाहो पिअविरहुम्मआपअलिअविआरो ।
विसइ तरुकुसुमकिसलअभूसिअणिअदेहपब्भारो ॥५॥
[गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः ।
विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥५॥]

---

**कोणेश्वरी**

कमलमनोहरके विचरति हंसी सरोवरके ॥ निरुक्तलक्षणे सहजन्याचित्रलेखे निष्क्रान्ते ॥४॥

आगमनाढ्यं सूचयित्वा रङ्गस्थलान्निर्गते इत्यर्थः । अत एवाह–**प्रवेशक** इति । तल्लक्षणं यथा—

हीनाभ्यामेव पात्राभ्यां रङ्गादौ यत्प्रवर्तते ।
प्रवेशकः स विज्ञेयः कथांशस्यापि सूचकः ॥

**कुमारगिरिराजीया**

No commentary

**प्रकाशिका**

गजान्योक्त्या जायाविरहायासितस्योन्मत्तस्य पुरूरवसो रङ्गभूभावाक्षिप्तिकया प्रवेशं सूचयति–**गह्णं** इति । गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः । विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥ देहप्राग्भारो देहाभोगः ॥५॥

**कोणेश्वरी**

**गह्णं** इति । गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः । विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ॥ प्रियाया विरहेण य उन्मादस्तेन प्रकटितो विकारो यस्य अत एव तरुकुसुमकिसलयाभ्यां भूषितो निजदेहप्राग्भार उपरिभागो येन तादृशो गजेन्द्रनाथो गहनं काननं विशतीत्यर्थः ॥५॥

**पुरूरवस** इति । पुरूरवसः प्रवेशकालीनां रूपसम्पत्तिमाक्षिपतीत्यर्थः । प्रवेशे भवा प्रावेशिकी । तल्लक्षणमग्रे द्रष्टव्यम् । प्रावेशिकी । 'सुध्यामोदिभ्यष्ठक्' इति ठक् ॥

**कुमारगिरिराजीया**

No commentary

(ततः प्रविशत्याकाशबद्धलक्ष्यः सोन्मादो राजा)

**राजा**–(*सक्रोधम्*) आः दुरात्मन् रक्षः, तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि । (*विलोक्य*) हन्त, शैलशिखराद् गगनमुत्पत्य बाणैर्मामभिवर्षति । (*लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरे द्विपदिकया दिशोऽवलोक्य*)

*हिअआहिअपिअदुक्खओ
सरवरए धुअपक्खओ ।
वाहोवग्गिअणअणओ
तम्मइ हंसजुआणओ ॥६॥

हृदयाहितप्रियादुःखः
सरोवरे धुतपक्षः ।
[1]व्याधापवल्गितनयनः
ताम्यति हंसयुवा ॥६॥

**प्रकाशिका**

हंसान्यापदेशेन राजा स्वदुःखातिरेकमाह—**हिअआ** इति । हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः । व्याधापवल्गितनयनः । पक्षे बाष्पापवल्गितनयनः । ताम्यति हंसयुवा ॥ धुतपक्षः कम्पितपक्षः । पक्षेऽसहायः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति **त्रिकाण्डी** । व्याधक्रामितनेत्रः ॥६॥

**कोणेश्वरी**

आकाशेति । आकाशं पश्यन्नित्यर्थः । पुरा केशिना आकाशे एव सा हृता इदानीमपि यदि तादृशः कश्चित् तामपहरेदिति भावः । **हिअएति** । हृदयाहितप्रियादुःखः सरोवरे धुतपक्ष । बाष्पाक्रान्तनयनस्ताम्यति **हंसयुवा** ॥ एतादृशः सरोवरे ताम्यतीत्यर्थः । एतदवस्थः संप्रति **पुरूरवा** इत्यर्थः ॥६॥

**कुमारगिरिराजीया**

**ततः प्रविशतीत्यादि** । आः इति कोपे निपातः । **क्व मे प्रियतमामादाय गच्छसीत्यत्र** गम्यमानस्य बीजस्य नियताप्तिसमन्वयात् **अवमर्शसन्धिरिति** मन्तव्यम् ॥६॥

---

१. बाष्पापवल्गितनयनः—सा. ए. बाष्पाक्रान्तनयनः—को.

(*विभाव्य सकरुणम्*)

कथम् ।

नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः,
सुरधनुरिदं दूराकृष्टं, न नाम शरासनम् ।
अयमपि पटुर्धारासारो, न बाणपरम्परा,
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी ।।७।।

---

### प्रकाशिका

**नवजलधरः** इति । सोऽतिगर्वितः । निशाचरो राक्षसः । दूरमत्यन्तमाकृष्टम् । धारासारो वर्षप्रसरः । 'धारासंपातवर्षणे' इति **विश्वलोचनः** । 'आसारस्तु प्रसरणे' इति च सः ।।७।।

### कोणेश्वरी

**कथमिति** । अयं सन्नद्धो नवजलधरः कथं न दृप्तनिशाचरः । प्रथममत्र निशाचरबुद्धिर्जाता इत्यर्थः । द्विपदिकया भूमिसंलग्नाग्रभागाभ्यां पद्भ्यां स्थित्वेत्यर्थः । **सुरधनुरिति** । इदमग्रे दृश्यमानं सुरधनुरिन्द्रधनुर्न दूराकृष्टं शरासनम् । नाम संभावनायाम् । तथा च दूराकृष्टशरासनत्वेन प्रथमं मयावगतमिदमित्यर्थः । अयमपि यो मया बाणवर्षत्वेन सम्भावितः सोऽपि पटुरतिशयितो धारासम्पातो न बाणपरम्परा न शरराजी इत्यर्थः । इयं यन्मयोर्वशीत्वेन सम्भाविता सापि कनकनिकषस्निग्धा विद्युत् न मम प्रियोर्वशी इत्यर्थः ।।७।।

### कुमारगिरिराजीया

**नवजलधर इति** । सन्नद्धः सन्नाहवान् । अयं पुरोवर्ती नवजलधरः नूतनमेघ एव । दृप्तनिशाचरः दृप्त उद्धतः स चासौ निशाचरश्च स न भवति । दूराकृष्टमिदं पुरोवर्ति सुरधनुरिन्द्रायुधमेव । शरासनं कार्मुकं न भवति नाम । नामेति संभावनायाम् । पटुस्तीव्रः अयं पुरोवर्त्यपि धारासारः धारासम्पात एव । बाणपरपरा न भवति । कनकनिकषस्निग्धा कनकस्य सुवर्णस्य निकषो पृष्ठरेखा तद्वत् स्निग्धा रुचिरा इयं पुरोवर्तिनी च तडित् सौदामिन्येषा । मम प्रिया उर्वशी न भवति ।।७।।

(इति मूर्च्छितः पतति । पुनर्द्विपदिकयोत्थाय निःश्वस्य)

मइ जाणिअ मिअलोअणि णिसिअरु कोइ हरेइ ।
जाव णु[1] णवतडिसामलु, धाराहरु वरिसेइ ॥८॥
[मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥८॥]

(इति सकरुणं विचिन्त्य)

क्व नु खलु रम्भोरूर्गता स्यात् ।
तिष्ठेत् कोपवशात् प्रभावपिहिता, दीर्घं न सा कुप्यति ।
स्वर्गायोत्पतिता भवेन्, मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥९॥

(इति द्विपदिकया दिशोऽवलोक्य सास्रम्)

[2]अये, परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः-
अयमेकपदे तया वियोगः,
प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्
भवितव्यं च निरातपत्वरम्यैः[3] ॥१०॥

---

प्रकाशिका

तडिद्विराजितं जलधरमुद्वीक्ष्याह—मइ जाणिअ इति । मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति । यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥ नर्नुनिश्चये । यावज् जलधरो वर्षति तावन्मृगलोचनामुर्वशीं कोऽपि राक्षसो हरतीति मया निश्चयेन ज्ञातम् । वर्षणोत्तरं तु जलदनिश्चयात् केन नीता क्व वा गता मत्प्राणप्रिया किमिदानीं करोमि मन्दभाग्य इति क्वापि सकरुणं

---

१. ण णवतलि सामल—सा. ए. २. अपरावृत्तभागधेयानां—को.
३. निरातपत्रम्यैः—को. निरातपद्विरम्यैः—कु. गि.

### प्रकाशिका

विचिन्त्येत्युत्तरचूर्णिकासंगतिः । 'मइ कोइ' इति च 'मया कोऽपि' इत्यर्थे देशी ॥८॥ **तिष्ठेदिति** । प्रभावपिहिता तिरस्करिण्यादिविद्याप्रभावेनाच्छन्ना । स्वर्गायेति स्वर्ग प्रति गन्तुमित्यर्थः । विधिः प्रकारः ॥९॥ **अयमिति** । एकपदे । 'तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृतम्' इति हलायुधः (४-६७) ॥१०॥

### कोणेश्वरी

सञ्ज्ञां लब्ध्वा पुनरपि प्रलपति **मइ** इति । मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति । यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥इति। यावदेतादृशो धारोधरो वर्षतीति न ज्ञातं तावन्मया निशाचरः कोऽपि मृगलोचनां हरतीति निर्णीतमेवासीदित्यर्थः । यद्वा यावदिति लोकोक्तौ । यदा विशिष्य ज्ञातं तदा स भ्रमो निवृत्त एवेत्यर्थः ॥८॥

नु खल्विति निपातसमुदायो वितर्कार्थे । वितर्कमेव विशदयति । **तिष्ठेदित्यादि** । कोपवशात् प्रभावेण पिहिता अन्तर्हिता तिष्ठेत् । नायं युक्तस्तर्कः । यतः सा दीर्घं न कुप्यति । ग्रहिला हि दीर्घकोपना भवतीयं तु न तथेत्यर्थः । स्वर्गायोत्पतिता भवेत् स्वर्गं प्रत्युद्गता भवेत् । अयमपि तर्कोऽसंगतः । अस्याः पुनर्मनो मयि भावार्द्रम् । तथा च तदपि न कुर्यादिति भावः । दानवा एव तां हरेयुरिति संभवति । इममपि तर्कं विच्छिनत्ति । **तामिति** । मम पुरोऽग्रेवर्तिनीं तां विबुधद्विषोऽपि देवशत्रवोऽपि हर्तुं न शक्ताः । तथा चायमपि तर्को नेत्यर्थः । अपरे पक्षाश्चित्तपथमपि नावतरन्ति इत्यनध्यवसायमाह-**सेति** । नयनयोरत्यन्तमगोचरं च सा यातेति कोऽयं विधिः । कोऽत्र प्रकारः स्यादित्यध्यवसायो न जायत इत्यर्थः ॥९॥

**अपरावृत्तेति** । न परावृत्तं भागधेयं भाग्यं येषां तेषां दुःखेन दुःखान्तरमनुबध्यत इति भाव इत्यर्थः । तदेव स्फुटयति । **अयमिति** । तया प्रियया वियोगश्चायं सुदुःसहो मम एकपदे एकेनैव वारेणोपनत उपस्थितः । नववारिधरोदयान् निरातपत्ररम्यैः । दिवसादिरामणीयकं हि दृष्ट्वा विरहिणोऽनीव सन्तप्यन्त इति भावः ॥१०॥

### कुमारगिरिराजीया

**तिष्ठेत् कोपवशादिति** । स्पष्टोऽर्थः । तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीमित्यनेन स्वशक्तिकथनात् **व्यवसायो** नाम सन्ध्यङ्गमुक्तं भवति ॥९॥ **अयमेकपदे** इत्यादि । एकपदे एकक्षणे इत्यर्थः । निरातपर्द्धिरम्यैः निर्गता आतपस्य ऋद्धिः सामग्री येषां तानि तथोक्तानि तानि च तानि रम्याणि। तैरहोभिर्दिनैर्भवितव्यं भाव्यम् ॥१०॥

(*अनन्तरे चर्चरी*)

जलहर संहर एहु कोपमि[1] आढत्तओ
अविरलधारासारदिसामुहकंतओ ।
ए मइं पुहविं भमंते जइ[2] पिअं पेक्खिहिमि
तच्छे[3] जं जु करीहिसि तं तु सहीहिमि ॥११॥

[जलधर संहरात्र कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्तः ।
ए अहं पृथ्वीं भ्रमन् यदि प्रियां प्रेक्षिष्ये
तदा यद्यत् करिष्यसि तत्तत् सहिष्ये ॥११॥]

([4] *विहस्य*)

वृथा खलु मया मनसः सन्तापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति 'राजा कालस्य कारणम्' इति, तत् किमहं जलधरसमयं न प्रत्यादिशामि ।

(*अनन्तरे चर्चरी*)

गंधुम्माइअमहुअरगीएहिं
वज्जंतेहिं परहुअतूरेहिं ।
पसरिअपवणुवेल्लिअपल्लवणिअरु
सुललिअविविहपआरेहिं णच्चइ कप्पअरु ॥१२॥

[गन्धोन्मादितमधुकरगीतैर्
वाद्यमानैः परभृततूर्यैः ।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः ॥१२॥]

([5] *इति नर्तित्वा*) अथवा न प्रत्यादिशामि यत्[6] प्रावृषेण्यैरेव चिह्नैर्मम [7]राजोपचारः संप्रति । कथमिव—

१. को पइं—सा. ए. २. पिय पेक्खिमि—सा. ए. ३. तच्चे—सा. ए. ४. चर्चरिकया विचिन्त्य—सा. ए. ५. तेन—सा. ए. तैना—को. ६. यदा—सा. ए. को. ७. राजप्रक्रिया—को.

## प्रकाशिका

**अनन्तर** इति । चर्चरीसञ्ज्ञो गीतिविशेषः । यदुक्तम्—

द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि ।
प्रतिमण्ठकरासकेन वा द्रुतमध्या मध्यमा हि चर्चरी ॥

सोमो वा प्रतिमण्ठकः । लघ्वादिताला लोकेऽसौ रास इत्यभिधीयते । इति । मेघं प्रत्याह-**जलहरेति** । जलधर संहरात्र कोपमाज्ञप्तः । अविरलधारासारदिशामुखकान्तः । ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये । तदा यद्यत्करिष्यसि तत्तत् सहिष्ये ॥ ए इति सम्बोधने, एवमर्थे वा । संहर एहु कोपम्' इति पदत्रयम् । एहु एतस्मिन् मल्लक्षणे जने कोपं संहर । मा कुरु इत्यर्थ इति वा । 'मइं तच्छे जं जु' इत्यादयो अहं तदा यद्यदित्यर्थे देशीशब्दाः ॥११॥

प्रत्यादिशामि निराकरोमि । 'प्रत्यादेशो निराकृतिः' इति **त्रिकाण्डी** (३-२-३१)

वसन्तवर्णनेन जलधरसमयप्रत्यादेशमाह—**गंधुम्माइअ** इति । गन्धोन्मादितमधुकरगीतैर्वाद्यमानैः परभृततूर्यैः । प्रसृतपवनोद्वेल्लनशीलपल्लवनिकरः सुललितविविधप्रकारेण नृत्यति कल्पतरुः ॥ गीतैस्तूर्यैरित्युपलक्षणे तृतीया । प्रसृतेनेतस्ततः संचलता वायुनोद्वेलनशीलश्चञ्चलः पल्लवनिकरः किसलयसमूहो यस्य सः । एतेन पल्लवनिकरस्य करत्वं गम्यते ॥१२॥

## कोणेश्वरी

**चर्चरिकेति** । लयविशेष इत्यर्थः । सा यथा—

द्रुतद्वन्द्वं सयत्यन्तं लघु यत्राष्टधा भवेत् ।
कलाषोडशसंयुक्ता चर्चरी साभिधीयते ॥
आरम्भे विजये चैव माने हर्षे मदे तथा ।
उन्मत्तोत्सुकमत्तानां चर्चरी परिकीर्तिता ॥

एते चर्चरिकादयो लयाः कउभरागेण गीयन्ते । तथा च भवतः । तं लयं नृत्यन् जलधरं प्रत्याह.. **जलहर** इति । जलधर संह्रियतामेषः । कः । आरम्भस्थो योऽविरलधारासारो दिशामुखकान्तः । एवमहं पृथिवीं भ्रमन् यदि प्रियां प्रेक्षिष्ये तदा यद्यत् करिष्यसि सत्तत् सहिष्ये । इदानीमहमतिदुःखितः । ततः आरम्भस्तावत् कियत्कालं त्यज्यताम् । सुहिते पुनर्मयि यथाशक्यं त्वया कर्तव्यमेवेति किंचित् समयमात्रे मम प्रार्थनेत्यर्थः ॥११॥

**वृथा** इति । मनःसन्तापोपचयो निष्फलमेव मया सह्यत इत्यर्थः । कथमित्याकाङ्क्षायामाह—**यदेति** । यदा शब्दो यदर्थे । कालकारणं राजा इति मुनीनामप्यनुमतम् । तदेवं जलधरसमयं किं नाहं खण्डयामि । अपि तु खण्डयितुमेवार्हति । एतत्खण्डने हि एतन्निमित्तकाः क्लेशा मम शाम्यन्त्येवेति भावः । **विहस्येति** । क्लेशप्रहाणोपायप्रतिसन्धानमिह हासहेतुः ।

कोणेश्वरी

अनन्तरे इति । पुनरव्यवधानेन चर्चरीलयनर्तनमित्यर्थः । गन्धुम्मा इति । गन्धोन्मादितमधुकरगीतिभिर्वाद्यमानैः परभृतरवतूर्यैः । प्रसृतपवनोद्वेल्लनशीलपल्लवनिकरः सुललितविविधप्रकारेण नृत्यति कल्पतरुः ।। कल्पद्रुमस्य प्रावृषा नर्तनसामग्रीयमुत्पादितेत्यर्थः ।।१२।।

तेनेति । तेनागीतिनर्तनं विधायेत्यर्थः । तेना गीतिविशेषः । 'तेना' इत्यक्षरद्वयमेव । तथा च मातृगुप्तः—

तेनागीतिप्रयोगेण विघ्नौर्गच्छति संक्षयम् ।
वायुब्रह्महरानन्ता रङ्गे तुष्यन्ति सर्वदा ।।

प्रत्यक्षरं देवानपि निर्दिशत्याचार्यः—

तकारे पवनः प्रोक्त एकारे कमलासनः ।
नकारे नन्दिकेशः स्यादाकारे मधुसूदनः ।।

तेनागीतिर्ध्रुवासहिता योजयितुमर्हति । तथा च साहसाङ्कटीकायाम्-

तेनागीतिस्तथा कार्या ध्रुवायोगसमन्विता ।।

ध्रुवाऽपि गीतिविशेष एव । स च गानयोग्येनोष्णिगादिना निबध्यते । तथा च अनर्घराघवे (१-१३)—

दिणअरकिरणुक्केरो पिआअरो कोवि जीअलोअस्स ।
(दिनकरकिरणोत्करः प्रियाकरः कोऽपि जीवलोकस्य)

एषा च रसपात्रानुसारेण प्रयोक्तव्या । तथा च जानकीराघवे रामप्रवेशे विप्रलम्भशृङ्गारे—

प्रविशति वनमतिगहनं करिणीविरहानलेन संतप्तः ।
अविरलनयनजलौघैर्धौतकपोलो गजाधिपतिः ।।

इति । सीताविश्लेषजनितबाष्पप्रक्षालितकपोलं रामभद्रं प्रावेशिक्या ध्रुवया सूचयति । यद्यपीयं तेना नान्द्यारम्भ एव कर्तुमर्हति मङ्गलत्वात् ।

तेनाध्रुवायामथ योजितायां वाद्यप्रबन्धे विहिते सतानि ।
कृष्टे पटे द्रष्टरि सावधाने पात्रप्रवेशं त्वनयोर्वदन्ति ।।

इत्यनेन प्राथम्यस्यैवोचितत्वाच्च इति । तथाप्यन्तरापि मङ्गलाचारसंभवो विघ्नशङ्कया इष्ट एव प्रामाणिकानामिति ध्रुवासाहित्यस्यापि बहुषु स्थानेषु दृष्टत्वादिति । अथवेति । जलधरसमयमित्यनुषज्यते । कथमत आह-अवेति । प्रावृण्मयैरेव चिह्नैः संप्रति मम राजप्रक्रिया संपद्यत इत्यर्थः । कथमिति । राजप्रक्रिया कथं जायत इत्यर्थः ।।

कुमारगिरिराजीया No commentary

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं,
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।
घर्मच्छेदात् पटुतरगिरो बन्दिनो नीलकण्ठा,
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः[1] ॥१३॥

(पुनश्चर्चरी) भवतु । किमेवं परिच्छदश्लाघया ।
यावदस्मिन् कानने तां प्रियामन्वेषयामि ।

---

**प्रकाशिका**

राजोपचारानेव वर्णयति—**विद्युल्लेखेति** । निचुलतरुभिर्वेतसाकारैर्हिज्जलापरनामभिर्द्रुमविशेषैः । 'निचुलस्तु निचोले स्यान्निचुलो हिज्जलद्रुमे । निर्माल्येऽप्यभ्रके क्लीबम्' इति **विश्वलोचनः** । घर्मच्छेदाद् ग्रीष्मसमयनाशात् । प्रावृट्प्रवृत्तेरित्यर्थः । 'घर्मः स्यादातपे ग्रीष्मे ऊष्मस्वेदलवेऽपि च' इति **विश्वलोचनः** । धारासारो वर्षप्रसरः । पक्षे धारारूपं सारं धनं तदानयनपराः । नैगमा वणिजः । 'धारा सम्पातवर्षणे सकले' । अपि च 'धारा पङ्क्तौ द्रवद्रव्यस्रवेऽश्वगतिपञ्चके' इति **विश्वलोचनः** । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति **विश्वलोचनः** । 'सारं न्याय्ये जले वित्ते' इत्यपि सः । 'नैगमः क्षुरवेदान्तवणिग्वाणिज्यनागरे' इति च सः ॥१३॥

**कौणेश्वरी**

तदाह **विद्युदिति** । विद्युल्लेखया एव कनकरुचिरं मनोज्ञं श्रीसम्बन्धि वितानं तावदभ्रमेव मम जायत इत्याहार्यम् । मञ्जर्य एव चामराणि निचुलतरुभिरुज्जलवृक्षैर्व्याधूयन्ते वीज्यन्त इत्यर्थः । नीलकण्ठा मयूराः । बन्दिनो मागधाः । घर्मच्छेदात् ग्रीष्मात्ययात् । पटुतरा गिरः केका येषां ते तथा । सानुमन्तः पर्वता एव नैगमा नियोगिनो धाराया यः सारस्तदुपनयनपरा जायन्त इति । पक्षे धारया धनोपनयनपरा इत्यर्थः । तथा च वितानतननं चामरवीजनं मागधस्तवनं नियोगिधनापहरणं च राजचिह्नानि जलधरसमयादेव मम साम्प्रतं निर्वहन्तीति नैनमपास्यामीत्यर्थः ॥१३॥ **किमिति** । परिच्छदस्य संप्रति मम न प्रयोजनमित्यर्थः ॥

**कुमारगिरिराजीया**

**विद्युल्लेखेति** । विद्युल्लेखाकनकरुचिरं विद्युदेव लेखारूपं कनकं तेन रुचिरम् । अभ्रं मेघः । मम श्रीवितानं श्रीमद्वितानम् । नैगमा वणिजः । 'नागरौ वणिङ्नैगमौ समौ' इत्यमरः (३-३-१४०) ॥१३॥

---

१. सानुमन्तः—सा. ए. को.

[1] (*पाटस्यान्ते भिन्नकः*)

दइआरहिओ अहिअं दुहिओ
विरहाणुगओ परिमंथरओ ।
गिरिकाणणए कुसुमुज्जलए
गअजूहवई तह झीणगई ॥१४॥
[दयितारहितोऽधिकं दुःखितो
विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले
गजयूथपतिस्तथा क्षीणगतिः ॥१४॥ ]

(*अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम्*)

हन्त हन्त, व्यवसितस्य मे [2]सन्दीपनमिव संवृत्तम् । कुतः–

---

**प्रकाशिका**

पाठस्यान्ते भिन्नक इति । 'पाठो वाद्याक्षरोत्करः' इति भरतः । भिन्नको रागविशेषः । तथा चाह भरतः—

षड्जमध्यमिकोत्पन्नो भिन्नको मध्यमो बहुः ।
षड्जग्रहांशो मन्यासो मन्द्रसोऽन्तोऽथवा भवेत् ॥
षड्जादिमूर्च्छनः शुद्धः सञ्चारिणि सकाकलिः ।
प्रसन्नादियुतो दानवीरे रौद्रेऽद्भुते रसे ॥
दिनस्य पश्चिमे यामे प्रयोज्यः सोमदैवतः ।

इति । गजान्योक्त्या स्वावस्थामाह–दइआरहिओ इति । दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः । गिरिकानने कुसुमोज्ज्वले गजयूथपतिस्तथा क्षीणगतिः ॥ भ्रमतीत्यध्याहारः । गजयूथपतिरहं स्वीयां प्राणप्रियामपि रक्षितुं न शक्तः । कथं मे यूथपतित्वं धिक् च मामित्यतिदुःखे कारणम् ॥१४॥

**कोणेश्वरी**

भिन्नक इति । लय इत्यर्थः । स यथा । दइआ इति । दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः । गिरिकानने कुसुमोज्ज्वले गजयूथपतिस्तथा क्षीणगतिः ॥ सरित्सम्बन्धिकानने गजराज एवं विशेषणविशिष्टो भ्रमतीत्यध्याहारेण योज्यम् । अथ कोकिलभङ्ग्या पुरूरवसमेव निर्दिशति ॥१४॥ व्यवसितस्येति । सफलो मे व्यवसायो जात इत्यर्थः । कुत इत्याकाङ्क्षायामाह—

**कुमारगिरिराजीया** No commentary

---

1. पुनश्चर्चरी–सा. ए. 2. संवर्धनम्–सा. ए.

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥१५॥

इतो गतेति कथं नु मया तत्रभवती सूचयितव्या । [1]यतः–

पद्भ्यां स्पृशेद् वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥१६॥

*(द्विपदिकया परिक्रम्यावलोक्य च सहर्षम्)*

[2]उपलब्धमुपलक्षणं येन तस्याः कोपनाया मार्गोऽनुमीयते ।

---

**प्रकाशिका**

**आरक्तराजीति** । शिलीन्ध्रापरनामा वृक्षविशेषः कन्दली । 'कलध्वनौ चापि तरौ मृगभेदेऽपि कन्दली' इति मुक्तावली ॥१५॥

**पद्भ्यामिति** । वसुमतीं पृथ्वीम् । सुगात्री शोभनाङ्गी । मेघैरभिवृष्टाः कृताभिवर्षणाः सिकता वालुका यासु ॥१६॥

**कौणेश्वरी**

**आरक्तेति** । इयं नवा कन्दली सलिलगर्भैरारक्तराजिभिः कुसुमैः कोपादन्तर्बाष्पे तस्या लोचने मां स्मरयति । तथा चैतद्दर्शने तस्यास्तदवस्थ-लोचनस्मरणं मम व्यवसितफलमित्यर्थः ॥१५॥

**इत इति** । अनेन पथा सा गतेति सूचनं मया तस्याः कथं विधेयमित्यर्थः । अत्र पथि न कश्चित् सूचनोपाय इत्येवाह—

**पद्भ्यामिति** । तदास्याश्चारुपदपङ्क्तिर्दृश्येतालक्ताङ्का यतः पश्चान्नता पूर्वभागे नम्रा गभीरेत्यर्थः । अत्र हेतुमाह—गुरुनितम्बतया इति । यदि सा सुगात्री वनस्थलीषु वसुमतीं पद्भ्यां स्पृशेत् । दर्शनहेतुमाह-मेघैरभिवृष्टाः सिकता यासु । तथा च सिकतोपरि वृष्टिर्जातास्तीत्यस्यां पदवी उपलक्ष्येत । न

---

१. om.—सा. ए. २. हन्त हन्त—सा. ए.

हृतोष्ठरागैर्नयनोदबिन्दुभिर्
निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥१७॥

भवतु । आदास्ये तावत् । (*परिक्रम्य विभाव्य च सास्रम्*) कथं सेन्द्रगोपं नवशाद्वलमिदम् । तत् कुतोऽस्मिन् विपिने प्रियाप्रवृत्तिमागमयेयम् । (*विलोक्य*) अयमासारोच्छलित[1]शैलतटस्थलीपाषाणमधिरूढः ।

कोणेश्वरी

चोपलक्ष्यते, तस्मान्नात्र गतेति संभाव्यत इति भावः ॥१६॥ उपलब्धमिति । तच्चिह्नमुपलब्धमस्ति येन तस्याः पन्थाः सरसं यथा एवमुन्नीयते तर्क्यत इत्यर्थः ॥

कुमारगिरिराजीया

आरक्तराजिभिरित्यादि । स्पष्टोऽर्थः ॥१५॥

पद्भ्यामिति । स्पष्टोऽर्थः ॥१६॥ उपलक्षणमुपलक्षकम् । उपलब्धं प्राप्तम् ॥

प्रकाशिका

हृतोष्ठरागैरिति । ओष्ठरागोऽधरारुणिमा । नयनोदबिन्दुभिरश्रुपृषतैः । निमग्ननाभेर्गम्भीरनाभेः । अङ्कितं चिह्नितम् । स्तनांशुकं कुचोपरिवस्त्रम् ॥१७॥ प्रियाप्रवृत्तिमिति । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति त्रिकाण्डी (१-५-७)। आगमयेयं ज्ञास्यामि । आसारस्योच्छलितं यत्र । आसारो धारासम्पातः ॥

कोणेश्वरी

किं तदित्याह—हृतोष्ठेति । च्युतं प्रभ्रष्टमसंशयं तस्याः स्तनांशुकं शुकोदरवच्छ्यामम् । कथं च्युतमत आह—रुषेति । कोपेन भिन्नगतेर्विषमितगमनाया इत्यर्थः ॥१७॥

गोपमिति । त्रिदशगोपसहितं शाद्वलहरितमिदं स्थानमित्यर्थः ॥ तत् कुत इति । निर्जनमेतद्वनमतोऽत्र प्रियोदन्तबोधे मम क उपायो भविष्यतीति भावः ॥

कुमारगिरिराजीया

हृतोष्ठरागैरिति । स्पष्टोऽर्थः ॥१७॥

१. उच्छ्वसित–सा. पु.

आलोकयति पयोदान् प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥१८॥

(*उपेत्य*)

भवतु । यावदेनं पृच्छामि ।

(*अनन्तरे खण्डकः*)

संपत्तविसूरणओ तुरिअं परवारणओ
पिअअमदंसणलालसओ गअवरु विम्हिअमाणसओ ॥१९॥
[संप्राप्तखेदस्त्वरितं परवारणः ।
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥१९॥]

(*तेनाखण्डकान्तरे चर्चरी*)

बंहिण पइं इअ अब्भत्थेमि आअक्खहि मं ता,
एत्थ रण्णे[1] भमंते जइ [2]तुइ दिट्ठी सा महु कंता ।
[3]णिसम्महि मिअंकसरिसेण वअणेण हंसगई
ए चिण्हे जाणिहिसि आअक्खिउ तुज्झ मइं ॥२०॥
[बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥२०॥]

---

**प्रकाशिका**

**आलोकयतीति** । पुरोवातः प्राग्वायुः । शिखण्डो बर्हः । 'शिखण्डो बर्हचूडयोः' इति **मुक्तावली** । 'केका वाणी मयूरस्य' **इत्यमरः** (२-५-३२) । शिखी मयूरः । 'शिखावलः शिखी केकी' **इत्यमरः** (२-५-३१) ॥१८॥

**अनन्तरे खण्डक इति** । खण्डको गीतिविशेषः । तल्लक्षणम्—

---

१. वण—सा. ए. २. तुइ om.—सा. ए. ३. णिसमाहि मिअंकसरिसे वअणे हंसगइ—सा. ए.

### प्रकाशिका

विरहव्यापृता या तु पठेद् गीतिं कुशीलवी ।
प्राकृतेन प्रबन्धेन खण्डकः स उदाहृतः ॥

इति । गजान्यापदेशेन स्वावस्थां पुनराह—संपत्तविसूरणेति । संप्राप्तखेदस्त्वरितं परवारणः । प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ विचरतीति शेषः । परबलदलनोऽप्यहं स्वप्रियतमासंश्लेषणेऽपि क्षमो नास्मीति खेदे विस्मये च हेतुगर्भं विशेषणं परवारण इति । विसूरण इति 'खिदेर्विसूरः' इति विसूरादेशः ॥१९॥

तेनाखण्डकान्तरे चर्चरीति । तेना इति मङ्गलार्थमक्षरद्वयम् । तेनकलक्षणमाह भगवान् भरतमुनिः—

ॐ तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः ।
तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मकः ॥

लक्षितस्तेन तेना इति । अन्यत्रापि—

तेकारः शङ्करः प्रोक्तो नाकारश्च उमा तथा ।
गीतादौ तेन वक्तव्यं तेना इत्यक्षरद्वयम् ॥

इति । खण्डकचर्चर्योर्लक्षणं प्रागुक्तमेव ।

बर्हिणं प्रत्याह—बर्हिण पई इति । बर्हिण पदं परम् । त्वामिति वा । इत्यस्यार्थये । आचक्ष्व मम तामत्रारण्ये भ्रमता त्वया दृष्टा सा मम कान्ता । निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः । ए अनेन चिह्नेन शास्यस्याख्यातं तव मया ॥ 'आअक्खहि मं ता । अथ वण भमंते' इत्यपि क्वचित् पाठः । निशामय शृणु । पाठान्तरे—'आचक्ष्व मां ताम् । अथ वने भ्रमता' । मां प्रति तामाचक्ष्वेत्यर्थः । वदनेनेत्युपलक्षणे तृतीया ॥२०॥

### कोणेश्वरी

आलोकयतीति । अयं शिखी पयोदानालोकयतीत्यन्वयः । कण्ठेन गलेन लक्षितः । इत्थंभूतलक्षणे तृतीया (पा. २-३-२१) ॥१८॥ अन्यत् सुबोधम् । खण्डक इति—

उन्मादे सङ्कटे चैव क्रोधे कार्यविनिश्चये ।
खण्डकस्तु प्रयोक्तव्यो रक्तोदात्तवचानरैः ॥

सोऽयं लयो ढक्कारागेण गीयते । संपत्तेति । संप्राप्तखेदस्त्वरितं परवारणः प्रियतमादर्शनलालसो गजवरो विस्मितमानसो भ्राम्यतीति शेषः । एवं सम्प्रति पुरूरवा वर्तत इति भावः । 'खिदेर्जूरविसूरौ' इति विसूरादेशः ॥१९॥

(चर्चरिकयोपविश्याञ्जलिं बद्ध्वा)

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन् वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥२१॥

(चर्चरिकया विलोक्य)

कथमदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः[1] । किं नु खलु हर्षकारणमस्य । (*विचिन्त्य*) आम् ज्ञातम् ।

---

**कोणेश्वरी**

**बर्हिणेति**—बर्हिण त्वामभ्यर्थये । 'फलबर्हाभ्यामिनच्' (पा ५-२-१२२ वा. ३) इति इनच् प्रत्ययः । आचक्ष्व मम तदा अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता । अत्रारण्ये भ्रमणं कुर्वता त्वया यदि सा प्रसिद्धा मम कान्ता उर्वशी दृष्टा तदा मम कथयेति त्वामहमर्थये याचे इत्यर्थः । कथं सा परिचीयेत इत्यत आह—**णिसम्महीति** । निशामय मृगाङ्कसदृशेन वदनेन हंसगतिरनेन चिह्नेन ज्ञास्यसि । आख्यायते तव मया । तया च पूर्णचन्द्रनिभाननां हंसगमनां यदि कामपि काननेऽत्र परिभ्रमन्तीमितस्ततः परिदृष्टवानसि तदा मम विश्लेषदुःखदावदह्यमानमानसकानने तदुदन्तोदकसेकसञ्जातसमग्रसुखसंपादनया प्रेमाणमुत्पादयेत्यर्थः ॥२०॥

**कुमारगिरिराजीया**

**आलोकयतीत्यादि** । कण्ठेनेत्युपलक्षणे तृतीया ॥

**प्रकाशिका**

**चर्चरिकयोपविश्येत्यादौ** चर्चरिका गतिविशेषः । तालविशेषो वा । बभाण च भरतः—

'विरामान्तद्रुमद्वन्द्वं लघुन्यष्टौ च चर्चरी'

इति । यथा—'००।ऽ।।।।।।।।' । **अञ्जलिं बद्ध्वेति** । यदुक्तम्—

पताकाहस्ततलयोः संश्लेषादञ्जलिर्मतः ।

---

1. पुनश्चर्चरी—सा. ए.

## प्रकाशिका

देवतागुरुविप्राणां नमस्कारेष्वयं क्रमात् ।।
कार्यः शिरोमुखोरःस्थो नृभिः स्त्राभिर्यथेष्टतः ।।

इति । **नीलकण्ठेति** । सितापाङ्ग धवलदृगन्त नीलकण्ठ मयूर । अस्मिन् वने दीर्घापाङ्गा आकर्णपूर्णनयनान्ता । दृष्टिक्षमा दृष्टौ दर्शने क्षमा यस्याः सा । नेत्रव्यापारेणैव यदीया क्षान्तिरुन्नीयत इति भावः । अथवा दृष्टिक्षमा दर्शनयोग्या । 'दिष्टिक्षमा' इत्यपि क्वचित् पाठः । तत्पक्षे दिष्टिं कालं क्षमते सा । जीवन्तीत्यर्थः । दृष्टा भवेदिति ममोत्कण्ठाऽस्ति । इत्यन्ती अध्याहार्या । मद्वियोगेन प्रायस्तस्या जीवनं न संभाव्यत एवेति भावः । 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः । दिष्टं भाग्येऽथ दृष्टिः स्यान्नेत्रदर्शनबुद्धिषु ।।' इति **विश्वलोचनः** ।।२१।।

## कौणेश्वरी

स्वोत्कण्ठाक्रमेण दर्शनसम्भावनामाह—**नीलेति** । हे नीलकण्ठ, ममैवमुत्कण्ठा जायते यदस्मिन् वने वनिता अत्यन्तजनितानुरागा अत्यायतनेत्रप्रान्तात एव दृष्टियोग्या दृष्टा भवेत् । संभावनायां लिङ् । दृष्टे च तादृशे जने विस्मरणसंभावनाऽपि नास्ति । दृढतरसंस्कारसमुत्पत्तेरिति दृष्टिमत्त्वकथनेन व्यनक्ति । तवापाङ्गयोः सितत्वं मय्येवं संभावनामुत्पादयति । कथमन्यथा तदपाङ्गसङ्गं विना त्वदपाङ्गाभ्यां सितत्वांशवत्तेति भावः ।।२१।।

**कथमिति** । मय्युत्तरमदत्त्वैवायं नृत्यं प्रारब्धवान् । नर्तनं च हर्षनिमित्तादृते न संभवतीति किमपि निमित्तमस्यावश्यं भविष्यतीत्यर्थः । तर्कयति—आम् इति । तर्कविषयमाह—

## कुमारगिरिराजीया

**नीलकण्ठेत्यादि** । 'उत्कण्ठामुत्कलिकाम् । प्रियादर्शनौत्सुक्यमित्यर्थः । हर अपनय । दृष्टिक्षमा दर्शनयोग्या । दृष्टा भवेदित्यत्र काकुरनुसन्धेया ।।२१।। प्रवृत्तः नर्तितुं प्रक्रान्तः । आदिकर्मणि क्तः । कर्तरि च (पा. ३-४-७) इति क्तप्रत्ययः ।।

मृदुपवनविभिन्नो मत्प्रियाया[1] विनाशाद्,
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्हिः ॥२२॥

भवतु । परव्यसनसुखितं[2] न पुनरेनं पृच्छामि ।

---

### प्रकाशिका

**मृदुपवनेति** । कलापः पिच्छभारः । 'कलापः संहते बर्हे काञ्च्यादौ तूणवृन्दयोः' इति **विश्वलोचनः** । अत्र च विनाशशब्दोऽमङ्गलव्यञ्जकत्वादश्लील इति प्रकाशकृत् प्राकाशयदिदं पद्यं पददोषेषु (का. प्र. ७-७२-९)। तत्र पूर्वश्लोके दिष्टिक्षमा इत्यत्र जीवितसन्देहस्योक्तत्वात् कथमदत्त्वैव प्रतिवचनमित्यत्र प्रतिवचनाप्रदानपुरःसरं नर्तनारम्भाज् जीवितसंदेहस्य तावदवस्थानादेतस्मिन्नेव च पद्ये 'निःसपत्नोऽस्य जातः' इति सिद्धवदुक्तत्वाद् राज्ञश्चोन्मादातिशयरूप-प्रकृष्टतरकारणवशाद् विप्रलम्भपोषकृदेवैतत् पदमिति न कश्चित्तदुक्तदोष-लेशावकाश इति प्रतिभाति ॥२२॥

### कोणेश्वरी

**मृदु** इति । मत्प्रियाप्रणाशेनास्य परमकान्तः कलापो निःसपत्नो जातोऽस्तीति मत्प्रियागतिरेवात्र हर्षकारणमस्य स्यादित्यर्थः । सापत्न्यमनयोः किंनिमित्तकमत आह—**रतीति** । कुसुमसनाथे रतिविगलितबन्धे तस्याः सुकेश्याः सति केशपाशे एषोऽस्य बर्हः कं हरेदपि न कमपीत्यर्थः । न खलु सुन्दरतमे विद्यमाने तदपेक्षयाल्पसुन्दरः कस्यापि मानसमाकर्षतीति भावः ॥२२॥ **परेति** । परकीयं दुःखं बुद्ध्वाऽसौ सुखमाविष्कुरुते तथा च मदीयदुःखोपशमाय न यतिष्यत इति भावः ॥

### कुमारगिरिराजीया

**मृदुपवनेत्यादि** । मत्प्रियाविप्रणाशात् मम प्रियाया विप्रणाशात् तिरोधानात् । 'नाशः क्षये तिरोधाने' इत्यमरः ॥२२॥

परव्यसननिर्वृतं परदुःखसुखितमेनं मयूरं न प्रक्ष्यामि खलु । अनेन दोषस्य प्रख्यापितत्वादपवादो नाम सन्ध्यङ्गमुक्तं भवति ॥

---

१. मत्प्रियाविप्रणाशात्—कु. गि. २. निर्वृत्तं—कु. गि. सा. ए.

*(द्विपदिकया दिशोऽवलोक्य)*

अये, इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता । विहगेषु पण्डितैषा जातिः । यावदेनां [1]पृच्छामि ।

*(अनन्तरे खुरकः)*

विज्जज्झरकाणणलीणओ[2]
दुक्खविणिग्गहबाहुप्पीडओ ।
दूरोसारिअहिअआणंदओ
अंबरमाणे भमइ गइंदओ ॥२३॥
[विद्याधरकाननलीनो
दुःखविनिर्गतबाष्पोत्पीडः ।
दूरोत्सारितहृदयानन्दः
अम्बरमानेन भ्रमति गजेन्द्रः ॥२३॥]

*(खुरकान्ते चर्चरी)*

हेल्ले[3] हेले
परहुअ महुरपलाविणि कंती
णंदणवण सच्छंद भमंती ।
जइं पइं पिअअम सा महु दिट्ठी
ता आअक्खहि महु परपुट्ठी ॥२४॥
[परभृते मधुरप्रलापिनि कान्ता
नन्दनवने स्वच्छदं भ्रमन्ती ।
यदि परं प्रियतमा सा मम दृष्टा
तह्याचक्ष्व मम परपुष्टे ॥२४॥]

---

१. अभ्यर्थये—कु. गि. २. काणणअल्लीणओ—सा. प. ३. हेल्ले हेले—सा. प.

## प्रकाशिका

अनन्तरे खुरक इति । खुरको नृत्यविशेषः । तदुक्तम्—

पटमञ्जरिरागसंयुतं यद् द्रुतमध्येन लयेन यत् प्रयुक्तम् ।
प्रतितालयुतं च नर्तनं तत् खुरकाख्यं मुनये शिवेन दत्तम् ॥
लघुद्रुतद्वयं यत्र प्रतितालः प्रकीर्तितः

इति । खुरकाख्यो गेयविशेषो वा । आह च भरतः—

पूर्वपूर्वाक्षरत्यागे योऽन्यो वर्णचयः स चेत् ।
उत्तरोत्तरसङ्घादौ खुरकः परिकीर्तितः ॥

इति । गजान्यापदेशेन पुनः स्वामवस्थामाह—**विज्जज्झरेति** । विद्याधरकाननलीनो दुःखविनिर्गतवाष्पोत्पीडः । दूरोत्सारितहृदयानन्दोऽम्बरमानेन भ्रमति गजेन्द्रः ॥ अम्बरमानेनेत्युपलक्षणे तृतीया । अतिविशाल इत्यर्थः ॥२३॥

परभृतां प्रत्याह—**हेल्ले हेले हेरे हेरे** । **परहुअ** इति । परभृते मधुरप्रलापिनि कान्ता नन्दनवने स्वच्छन्दं भ्रमन्ती । भवत्या इति शेषः । यदि परं प्रियतमा सा मम दृष्टा तह्याचिक्ष्व मयि परपुष्टे ॥ आदरे द्विरुक्तिः । सम्बोधने मधुरप्रलापिनि । कान्ता मनोनयनानन्ददायिनी । नन्दनवने स्वच्छन्दं भ्रमन्तीत्यादीनि प्रियतमाविशेषणानि वा । 'परभृते परपुष्टे' इत्यर्थपौनरुक्त्यं वक्तुरुन्मत्तत्वान् न दोषावहम् । यद्वा 'मधुपरपुष्टे' इत्येकं पदम् । मधुना पुष्परसेन परमत्यन्तं पुष्टे इत्यर्थः । मधुपरा चासौ पुष्टा इति वा । मधौ वसन्ते इति वा ॥२४॥

## कोणेश्वरी

**इयमिति** । आतपान्ते सन्धुक्षितः पुनरङ्कुरितो मदो मत्तता यस्याः सा तथा । जम्बूविटपमध्यास्ते । (अस्याश्च) बहुपाण्डित्यमस्ति ।

चतुष्टयं गुरुस्तस्य … …।
कलाषट्तयसंपन्नः खुरकः सोऽभिधीयते ॥
कोपार्ते च मदार्ते च भयार्ते शीलविप्लुतौ ।
गर्वे तोषे च योज्यः स्यात् खुरको मध्यमोत्तमैः ॥

**विज्जेति** । विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः । दूरोत्सारितहृदयानन्दोऽम्बरमानेन भ्रमति गजेन्द्रः ॥ सरप्रधानं काननं सरकाननं विद्यस्य (?) सरकानने समृद्ध इत्यर्थः । यद्वा विद्या नाम धरो विद्याधरः तस्य कानने समृद्ध इत्यर्थः । तथाचैवंभूतः संप्रति पुरूरवा इति प्रकाशितः ॥ २३ ॥

**परहुअ महुर** इति । परभृते मधुरप्रलापिनि नन्दनवनं स्वच्छन्दं भ्रमन्ती । यदि त्वया प्रियतमा सा मम दृष्टा तदाचक्ष्व मम परपुष्टे ॥ परभृतत्वेन कीर्तनं

*(एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा)*

भवति ।

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥२५॥

*(वामकेन किंचिद्वलित्वा आकाशे)*

किमाह भवती । कथं त्वामेवमनुरक्तं विहाय गतेति । शृणोतु भवती ।

---

**कौणेश्वरी**

परस्मिन् तस्याः प्रीतिद्योतनाय । इदानीं दुःखितस्य मम कर्णकटुवचने असहिष्णुता त्वं पुनर्मधुरप्रलापिनीति त्वां पृच्छामीति हृदयम् । यद्यप्यनर्थकं वचनं प्रलाप इति प्रलापोक्तिर्नोचिता तथाप्यत्र योगमात्रपुरस्कारेण प्रकृष्टालापपरतया प्रयोगः । यद्वा अप्रकृतिस्थवाक्ये नैवंविधो दोषः प्रभवति । अत एव परपुष्टे इत्यर्थपुनरुक्तमपि सुसमाधानम् ॥२४॥

**कुमारगिरिराजीया**

आतपात्यये वर्षागमे । सन्धुक्षितमदा सन्दीपितमदा ॥

**प्रकाशिका**

वलन्तिकयेति । वलन्तिका रागविशेषः । तथा च सङ्गीतरत्नाकरे—
'वलन्तिका तदुपाङ्गं स्याद्रिहीना मन्द्रदेवला ।
संन्यासांशग्रहेहायां शृङ्गारे शार्ङ्गिणोदिता ॥'
इति ।

त्वामिति । मदनस्य मन्मथस्य दूतिमुदाहरन्ति वदन्ति । 'दूतिर्दूती च दूतिका' इति रूपचिन्तामणिः ॥२५॥

वामकेन किंचिद्वलित्वा इति । वामकं पार्श्वस्थितवस्त्ववलोकने संस्थानविशेषः । यदुक्तम्—

### प्रकाशिका

धुतेन शिरसा यत्तु पार्श्वेन वलितेन च ।
तद्वामकं वै करणं पार्श्वस्थस्यावलोकने ॥

इति । **आकाशे** इति ।

किं ब्रवीष्वेवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येतत्तत्स्यादाकाशभाषितम् ॥

इति दशरूपकादौ ॥

### कोणेश्वरी

**वलन्तिकया** इति । तल्लक्षणं यथा—

द्रुतत्रयं सयत्यन्तं चतुष्कं (स)लघुत्रयम् ।
यत्र सा वलतिः प्रोक्ता त्रिपाता लयवेदिभिः ॥
नायिकायाः समानाया विप्रलम्भे गरीयसि ।
उन्मत्तानां तु सर्वेषां वलति· परिकीर्तिता ॥

जानुभ्यां स्थानमत्यानतिद्योतकम् । अत एव व्रतादिग्रहणसमये भूमौ जानुनी प्रतिष्ठाप्य सूर्यादिषु निवेदनमाचरन्ति । **भवति** इत्यत्र द्विरुक्तिरत्यावेगे । **त्वामिति** । हे मृदुभाषिणि तां सुप्रसिद्धां प्रियतमामतिवल्लभां मम समीपं वा आनय । मां वा तत्र नय यत्र सा मम कान्ता वर्तत इति शेषः । तत्रेत्याक्षिप्यते । आशुशब्दः क्रियाद्वयेऽप्यन्वेति । त्वं हि मृदुवादिनी । मृदुवचनेन सर्वत्रैव वश्या भवन्तीति हृदयम् । मृदुभाषाणमात्रेण कलाकुशलो नानुरज्यतीत्यत आह—**कामिन** इति । कामुका लोकास्त्वां मदनदूतीमुदाहरन्ति । तथा च मदनोऽतिनिपुणस्तत्कार्यदक्षां त्वां निर्णीय दूतीं कृतवानित्यर्थः । मानिन्यां मदनस्यापि कदाचित् कुण्ठता लभ्यते तथा चाहं वराकी कथं मानावमानिका स्यामित्यत आह—**मानेति** । मानावमाने निपुणं त्वमेव अस्त्रममोघं सफलं सर्वदा कार्यसंपादकमित्यर्थः ॥२५॥ कुहूरवं तावत् कोकिला तनुते । तत्र कुहूरवं त्वामित्याकारेण अर्थीकृत्य अनुरक्तमपहाय गता इति कोकिलावाक्ये शेषं दत्त्वा आह—**कथमिति** । मामपहाय गतेति सत्यम् । अनुरक्तमिति प्रतीकारपरं नास्तीति हृदि निधायाह—

### कुमारगिरिराजीया

**त्वां कामिन** इत्यादि । मदनदूतिं मन्मथदूतिकाम् । दूतिशब्द इकारान्तोऽप्यस्ति । तथा चोक्तं रघुवंशे—'तेन दूतिविदितं निषेदुषा' इति । 'एत्य दूतिकृतमार्गदर्शनः' इति च । अमोघमनिरर्थकम् । साधकमित्यर्थः । अस्त्रमायुधम् । कामस्येति शेषः ॥२५॥

कुपिता [1]नु न कोपकारणं
सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां
न हि भावस्खलितान्यपेक्षते ॥२६॥

(*ससंभ्रममुपविश्यानन्तरं जानुभ्यां स्थित्वा 'कुपिता' इति पठित्वा विलोक्य च*)

कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता[2] ।

---

### प्रकाशिका

**कुपितेति** । नुर्वितर्के । हि यतः । रमणेषु प्रियेषु योषितां स्त्रीणां प्रभुता प्रभुत्वं भावस्खलितान्यभिप्रायस्खलितानि नापेक्षते नेच्छति । अभिप्रायस्याप्यन्यथाभावे ताः कुप्यन्ति किमुतान्यथाचरण इति भावः ॥२६॥

### कोणेश्वरी

**कुपितेति** । सा कुपिता । तत्र न सन्देहः । न पुनरात्मगतं सकृदपि कोपकारणमहं स्मरामि । सा चेत् कुपिता तदावश्यं मयि कोपनिमित्तं भविष्यतीत्यपि नेत्याह । **प्रभुता इति** । रमणेषु योषितां प्रभुता भावस्खलितानि नापेक्षते किं तु विनापि तानि भवतीत्यर्थः ॥२६॥ **अनन्तरमिति** । स्ववचसि कोकिलकृतमनादरं स्वासंभ्रमप्रयुक्तमिति मन्यमानः पुनः पठितवानित्युन्नीयते । अत एव ससंभ्रममित्याह । अथवा न मदीयमनैपुण्यमत्र निमित्तं किं त्वन्यदेवेति मन्वान आह—अथवेति । इदमग्रे वक्ष्यमाणमित्यर्थः ॥

### कुमारगिरिराजीया

कुपिता रुष्टा । सकृदप्येकवारमप्यात्मकृतं कोपकारणं तु न स्मरामि । असति कोपकारणे कथं कुपितेत्याह—योषितां रमणेषु प्रियेषु प्रभुता स्वाम्यं भावस्खलितानि भावस्य प्रेम्णः स्खलितानि चलनानि नायिकान्तरदर्शनादीनि नापेक्षते नाकाङ्क्षति । कारणाभावेऽपि तासां कोपः संपद्यत इत्यर्थः ॥

---

१. न तु—सा. ए; कु. गि. २. अथवा सुष्ठु खल्विदमुच्यते—सा. ए.; को.

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं[1] राजजम्बूद्रुमस्य ॥२७॥

तदेवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । साधयामस्तावत् ।

---

### प्रकाशिका

**महदपीति** । लोका हि महदपि परकीयं दुःखं कष्टं शीतलमिति यद् वदन्ति तत्सम्यक् । समीचीनमित्यर्थः । राजजम्बूद्रुमस्य तत्सञ्ज्ञकवृक्षस्य । 'राजजम्बूर्महाफला' इति **त्रिकाण्डी** ॥२७॥

### कोणेश्वरी

तदेवाह—**महदपीति** । परदुःखं महदपि शीतलमिति सम्यक् समीचीनमाहुर्वदन्ति । कुत एतदित्याकाङ्क्षायामाह—**प्रणयमिति** । यदेषा आपद्गतस्य मम प्रणयमगणयित्वा अभिनवपाकं राजजम्बूफलं मदान्धा सती पातुं प्रवृत्ता । **अधरमिव** । अभिनवपाकत्वाल्लोहितत्वेनाधरतुल्यत्ता ॥२७॥

**तदेवमिति** । यद्यपीयमनास्थामेव मयि कुरुते तथापि न मेऽस्यां कोप उचितो मञ्जुस्वनत्वमस्या मत्प्रियातुल्यं यत इत्यर्थः ॥

### कुमारगिरिराजीया

**महदपीत्यादि** । महदपि बहुलमपि परदुःखं परव्यथा सम्यक् साधु शीतलमनुष्णम् । उद्वेजकं न भवतीत्यर्थः । अन्यस्येति शेषः । आहुर्ब्रुवन्ति । लौकिका इति शेषः । यद् यस्मादापद्गतस्य मम प्रणयं प्रार्थनामगणयित्वा अनादृत्य मदान्धैषा परभृता राजजम्बूद्रुमस्य जम्बूविशेषस्याभिमुखः पाको यस्य तत्तथोक्तं तत्फलमधरमिव पातुं प्रवृत्तोद्युक्ता ॥२७॥

---

१. मभिमुखपाकं—कु. गि.

(*उत्थाय द्विपदिकया परिक्रम्यावलोक्य च*)

अये, दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः। यावदेनमनुगच्छामि।

(*परिक्रम्य*)

पिअअमविरहकिलामिअवअणओ
अविरलबाहजलाउलणअणओ।
दूसहदुक्खविसंठुलगमणओ
पसरिअगुरुतावदीविअंगओ॥
अहिअं दुम्मिअमाणसओ [1]दरिअं गओ
काणणं परिभमइ गइंदओ॥२८॥
[प्रियतमाविरहक्लान्तवदनः
अविरलबाष्पजलाकुलनयनः।
दुःसहदुःखविसंष्ठुलगमनः
प्रसृतगुरुतापदीप्ताङ्गः॥
अधिकं दूनमानसो दरीं गतः।
कानने परिभ्रमति गजेन्द्रः॥२८॥]

**प्रकाशिका**

**दक्षिणेन वनधारामिति।** वनधाराया दक्षिणभागे। धारा पङ्क्तिः। दक्षिणेनेत्येनप्प्रत्ययान्तो निपातः। तद्योगे च वनधारामिति द्वितीया। 'धारा पङ्क्तौ द्रवद्रव्यस्रवेऽश्वगतिपञ्चके' इति विश्वलोचनः। द्विपान्यापदेशेन स्वदुःखातिरेकमाह—**पिअअमविरहेति।** प्रियतमाविरहक्लान्तवदनोऽविरलबाष्पजलाकुलनयनः। दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरुतापदीप्ताङ्गः। अधिकं दूनमानसो दरीं गतः कानने परिभ्रमति गजेन्द्रः॥ विसंष्ठुलगमनः स्खलद्गतिः॥२८॥

**कोणेश्वरी**

**पिअअमेति।** प्रियतमाविरहक्लान्तवदनोऽविरलबाष्पजलाकुलनयनो। दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरुतापदीप्ताङ्गः। अधिकदुःखितमानसो दरीं गतः कानने भ्रमति गजेन्द्रः॥ निगदव्याख्यातमेतत्॥२८॥

**कुमारगिरिराजीया** No commentary

1. om.—ना. ए.

(*इति ककुभेन षड्डुपभङ्गाः । अनन्तरे द्विपदिकया दिशोऽवलोक्य*)

पिअकरिणीविच्छोइअओ
गुरुसोआणलदीविअओ ।
बाहजलाउललोअणओ
करिवरु भमइ समाउलओ ॥२९॥

[प्रियकरिणीवियुक्तो
गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः
करिवरो भ्रमति समाकुलः ॥२९॥ ]

(*सकरुणम्*)

हा धिक् । कष्टम् ।

---

प्रकाशिका

**ककुभेन षड्डुपभङ्गा** इति । ककुभाख्यरागेण । उक्तं च **भरतेन**—

'मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत् ।
धांशग्रहः पञ्चमान्तो धैवतादिकमूर्च्छनः ॥
प्रसन्नमध्यारोहिभ्यां करुणे यमदैवतः ।
गेयः शरदि

इति । उपभङ्गा अवच्छेदाः । उन्मादातिशयवशात् पुनस्तमेवार्थमाह—**पिअकरिणीति** । प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः । बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ विच्छोइअओ इति वियुक्ते देशी ॥२९॥

कोणेश्वरी

**ककुभेति** । कौइ इति प्रसिद्धेन रागेण । भङ्गोपभङ्गौ लयौ पात्रप्रवेश-निष्क्रमयोः प्रयोज्यौ । तथा च **भरताचार्यः**—

भङ्गोपभङ्गाः कथिताः सम्बन्धास्ते स्य (?) नयुक्तास्तु लया भवन्ति ।
पदाङ्गहारैरभिधीयमानाः कुर्वन्ति तोषं ... वमानसानाम् ॥

**पिअकरिणीति** । प्रियकरिणी तन्निमित्तं विक्षोभितो गुरुशोकानलदीपितो बाष्पजलाकुलनयनः करिवरो भ्रमति समाकुलः ॥२९॥

**कुमारगिरिराजीया** No commentary

(*इति ककुभेन षड्डुपभङ्गाः । अनन्तरे द्विपदिकया दिशोऽवलोक्य*)

पिअकरिणीविच्छोइअओ
गुरुसोआणलदीविअओ ।
बाहजलाउललोअणओ
करिवरु भमइ समाउलओ ॥२९॥
[प्रियकरिणीवियुक्तो
गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः
करिवरो भ्रमति समाकुलः ॥२९॥ ]

(*सकरुणम्*)

हा धिक् । कष्टम् ।

---

**प्रकाशिका**

**ककुभेन षड्डुपभङ्गा** इति । ककुभाख्यरागेण । उक्तं च **भरतेन**—

'मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत् ।
धांशग्रहः पञ्चमान्तो धैवतादिकमूर्च्छनः ॥
प्रसन्नमध्यारोहिभ्यां करुणे यमदैवतः ।
गेयः शरदि

इति । उपभङ्गा अवच्छेदाः । उन्मादातिशयवशात् पुनस्तमेवार्थमाह— **पिअकरिणीति** । प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः । बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ विच्छोइअओ इति वियुक्ते देशी ॥२९॥

**कोणेश्वरी**

**ककुभेति** । कौइ इति प्रसिद्धेन रागेण । भङ्गोपभङ्गौ लयौ पात्रप्रवेशनिष्क्रमयोः प्रयोज्यौ । तथा च **भरताचार्यः**—

भङ्गोपभङ्गाः कथिताः सम्बन्धास्ते स्य (?) नयुक्तास्तु लया भवन्ति ।
पदाङ्गहारैरभिधीयमानाः कुर्वन्ति तोषं ...वमानसानाम् ॥

**पिअकरिणीति** । प्रियकरिणी तन्निमित्तं विक्षोभितो गुरुशोकानलदीपितो बाष्पजलाकुलनयनः करिवरो भ्रमति समाकुलः ॥२९॥

**कुमारगिरिराजीया** No commentary

### प्रकाशिका

**पश्चादिति**। भूयो ग्रहणाय बिसरूपं पाथेयम्। पथिषु साधु पाथेयम्। सिद्धान्नमुत्सृज कुत्रचिन्निधेहि। दयितोदन्तकथनेन मां तावदादौ शुचः शोकादुद्धर। पश्चात् त्वया पाथेयं ग्राह्यमित्यर्थः ॥३१॥

हंसं प्रत्याह—**रे रे इति**। रे रे हंस किं गोप्यते।

**यदि हंसेति**। सरसः सरोवरस्य। 'कासारः सरसी सरः' इति **त्रिकाण्डी** (१-९-२८)। रोधसि तटे। 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इति **त्रिकाण्डी** (१-९-७)। दृक्पथं दृग्गोचरम्। मदेन खेला कामक्रीडा येषु। 'क्रीडा खेला च कूर्दनम्' इति सा (१-६-३४) ॥३२॥

### कोणेश्वरी

**मेघेति**। मेघश्यामा दिशो दृष्ट्वा मानसायोत्सुकं चेतो यस्य तेन राजहंसेनेदं कूजितं न नूपुरशिञ्जितम्। तथा च मम नूपुरशिञ्जितत्वे भ्रम एवाभूदित्यर्थः ॥३०॥ **वलन्तिकया** इति। तल्लक्षणं च लिखितमेव। जलेति। जलविहंगमेषु मध्ये भवान् राजा। तथा च राजत्वेन भवान् धुरंधर इत्यस्माकमपि कार्यधुरां वोढुं त्वमर्हसीति भावः। **पश्चादित्यादि**। मानसं सरः प्रति पश्चाद् गमिष्यसि। इदानीं किं करणीयमित्याशङ्कायामाह—**पाथेयमिति**। बिसं पाथेयमुत्सृज त्यजेत्यर्थः। पाथेयत्यागे कथं मया विना पाथेयं पथि गन्तव्यमित्यत आह। ग्रहणायेति। भूयः पुनर्ग्रहणाय। अग्रे ग्रहीष्यस एवत्यर्थः। पुनश्चेद् ग्रहीतव्यमेव तर्हि इदानीं कथं त्यक्तव्यमित्यत आह—**मामिति**। तावत् प्रथमं शुचः शोकान्मामुद्धर। उद्धारे उपायमाह—**दयितेति**। दयितोदन्तेनेत्यर्थः। ननु स्वप्रयोजनं परित्यज्य कथमन्यप्रयोजनेऽन्यः प्रवर्तेत इत्यत आह—**स्वार्थादिति**। सतां स्वप्रयोजनात् परप्रयोजनमेवाधिकमित्यर्थः ॥३१॥ **अरर इति**। अरे रे किं गोप्यते। तव संगोपनं लब्धपदं न भविष्यतीति भावः। **नर्तित्वा** इति। लक्षणोपलक्षणमेव नर्तने हेतुरवसेयः। गोप्यते सा मया इति कथं त्वया ज्ञायते। अदर्शनेनाप्यकथनोपपत्तेरत आह—**यदीति**। हे हंस मम प्रिया सरसि रोधसि यदि दृष्टिपथं न गता तदा तस्याः सकलं मदखेलपदं गतं चौर त्वया कथं गृहीतं कस्मात् प्राप्तमित्यर्थः ॥३२॥

### कुमारगिरिराजीया

**मेघेति**। स्पष्टोऽर्थः। **पश्चात्** सर इत्यादि। पाथेयं पथि हितम्। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' (पा-४-१-१०४) इति ढञ् प्रत्ययः। बिसं मृणालं भूयो ग्रहणाय पुनर्ग्रहणार्थमुत्सृज त्यज। गृहीतं बिसमुत्सृज्य ममोत्तरं दत्त्वा पश्चाद् गृहाणेत्यर्थः। दयिताप्रवृत्त्या प्रियावार्तया हेतुना मां शुचः शोकादुद्धरोत्तारय। अत्रार्थान्तरमाह—सतां सज्जनानां स्वार्थात् स्वकार्यात् प्रणयिक्रियैव प्रणयिनां प्रार्थयितॄणां क्रियैव कार्यनिर्वर्तनमेव गुरुतरा श्रेष्ठतरा ॥३१॥ **यदि हंस** इत्यादि। स्पष्टोऽर्थः। अत्र तर्जनस्य गम्यमानत्वाद् द्युतिर्नाम सन्ध्यङ्गमुक्तं भवति ॥३२॥

(पुनश्चर्चरी)

गइअणुसारे मइ लक्खिज्जइ । [गत्यनुसारेण मया लक्ष्यते ।] (३४.२)

(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा)

हंस प्रयच्छ मे कान्तां गतिरस्या त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥३३॥

---

प्रकाशिका

गइअण्विति । गत्यनुसारेण मया लक्ष्यते ।

हंस प्रयच्छ इति । यत इत्यध्याहृत्य । अस्या मत्प्रियायाः । यतो यस्मात् । गतिर्गमनं त्वया हृता नीता । विभावितो दृष्ट एकदेशश्चोरितद्रव्यांशो यत्रैतादृशेन चौरेण । यदभियुज्यते स्वामिना चोरे चोरितत्वेनारोप्यते तत्तेन देयम् ॥३३॥

कोणश्वरी

पूर्वोक्तमेवार्थमिदानीं सनिश्चयमाह—गईति । गत्यनुसारेण मया लक्ष्यते । यत्त्वया सा दृष्टेवेत्यर्थः । विहगराजोऽयमिदानीं व्यसनासक्तेन मया । व्यसनमस्मिन् न समुचितमित्यभिप्रायवान् अञ्जलिबन्धेनाह—हंसेति । गतिहरणेन तन्मात्रं दीयते इत्येव उचितायते न तु गतिमानपीत्याह—विभावितेति । विभावितः प्रकाशित एकदेशोऽभियोगविषयैकभागो यत्र स तथा । तेनाभियोगविषयः समस्त एव देयो भवति । यद्यत्र सर्वत्र नायं नियमः किं तु व्याप्ये विभाविते । तथापि प्रकृते गते कृतिमद्व्याप्यत्वमस्त्येवेति भावः ॥३३॥

कुमारगिरिराजीया

हंसेत्यादि । हे हंस मे कान्तां प्रियां प्रयच्छार्पय । अर्पणे कारणमाह—यस्मादस्या गतिर्गमनं त्वया हृता गृहीता । तस्मात् प्रयच्छेति सम्बन्धः । गतिमात्रहरणे सर्वा कान्ता कथमर्पयितव्या इत्याशङ्कयास्मिन्नर्थे न्यायमाह—यद् यद् द्रव्यमभियुज्यतेऽनेन गृहीतमिति निर्दिश्यते । अभियोक्त्रा इति शेषः । तत् सर्वं द्रव्यं विभावितैकदेशेन । विभावितोऽङ्गीकारित एकदेशो हृतद्रव्यैकदेशो यस्य स तथोक्तस्तेन चोरेण देयमभियोक्त्रे प्रत्यर्पणीयम् ॥३३॥ तथाचोक्तं याज्ञवल्क्येन

निह्नुतेऽभिहितं[1] नैकमेकदेशे विभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ (या. स्मृ. व्य. २०)

---

१. लिखितं—या. स्मृ.

(पुनश्चर्चरी)

कइं पइं सिक्खिउ ए गइलालस
सा पइं दिट्ठी जहणभरालस ॥३४॥
[कस्मात् त्वया शिक्षितमेतद्गतिलालस
सा परं दृष्टा जघनभरालसा ॥३४॥]

(*पुनश्चर्चरी । हंस प्रयच्छेत्यादि पठित्वा द्विपदिकया निरूप्य विहस्य*)

एष स्तेनानुशासी राजेति भयादुत्पतितः । यावदन्यमवकाशमवगाहिष्ये ।

(*द्विपदिकया परिक्रम्यावलोक्य*)

अये, प्रियासहायश्चक्रवाकस्तिष्ठति । तावदेनं पृच्छामि ।

---

**प्रकाशिका**

रे रे हंसा इति । रे रे हंस, किं गोप्यते गत्यनुसारेण मया लक्ष्यते । कस्मात् त्वया शिक्षितमेतद् गतिलालस सा परं दृष्टा जघनभरालसा ॥ हे गतिलालस, गतौ गमनविषये लालसा अभिलाषो यस्य । त्वयैतदर्थाद् गमनं, कस्माच् छिक्षितम् । गमनान्यथानुपपत्त्यैव सा परं निश्चितं त्वया दृष्टा । यद् वा ए गइलालस इति पदद्वयम् । लालसार्थाद्गतिशिक्षणे साभिलाष । चेदियं त्वया न दृष्टा तर्ह्येतद्गतिरेतस्या मत्प्राणप्रियाया गतिर्गमनं कइं कथं शिक्षितम् । अभ्यस्तमित्यर्थः । कइं केन शिक्षितमुपदिष्टमिति वा । एतद्गतिलास्यमित्यपि केचित् । अर्थापत्त्यैव त्वत्कृतैतद्दर्शनमवधार्यत इति तात्पर्यार्थः । 'कइं' इति देशी सम्बोधने बहुवचनम् । अग्रे च त्वयेत्येकवचनमुन्मत्तोक्तेर्न दोषकृत् । वस्तुतस्तु दूरादाह्वाने हंसा इति प्लुतान्तत्वादेकवचनमेव ॥३४॥ **एष स्तेनेति** । स्तेनश्चौरः । 'स्यादैकागरिकः स्तेनः' इति **त्रिकाण्डी** (२-१०-२५) ॥

**कोणेश्वरी**

मया सर्वथा सा न दृष्टा इत्यत आह—**कइं** इत्यादि । कुतस्त्वया शिक्षितमेतद्गतिलालस यदि सा न दृष्टेत्यर्थः । तथा च गतिश्चेत्त्वयि तस्या दृश्यते गतिमत्यपि त्वद्दृष्टैवेत्यभिप्रायवान् पुनराह—**विभावितेति** । एतादृश्यां गतौ नान्य उपदेशक इति सनियममाह—सेति । सा त्वया जघनभरालसावश्यं दृष्टेत्यर्थः ॥३४॥ अहमत्र यत्नवान् इति कथनं विना न ते निस्तार इति बोधनाय

(*अनन्तरे कुटिलिका*)

मम्मररणिअमणोहरए

(*मल्लघटी*)

कुसुमिअतरुवरपल्लविए

(*चर्चरी*)

दइआविरहुम्माइअओ
काणणे भमइ गइंदओ ॥३५॥

[मर्मररणितमनोहरे
कुसुमिततरुवरपल्लविते ।
दयिताविरहोन्मादितः
कानने भ्रमति गजेन्द्रः ॥३५॥]

(*द्विलयान्तरे चर्चरी*)

गोरोअणकुंकुमवण्णा[1] चक्का भण इ मइ ।
महुवासर[2] कीलंती धणिअ ण दिट्ठी [3]तुइ ॥३६॥

[गोरोचनाकुङ्कुमवर्ण चक्र भण माम् ।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया ॥३६॥]

(*चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा*)

रथाङ्गनामन् वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥३७॥

कथं कः क इत्याह । मा तावत् । न खलु विदितोऽहमस्य ।

---

**कोणेश्वरी**

पुनः पुनस्तदेव नर्तयति । तामेव वचनिकाममिधत्ते चेति भावः । तिर्यग्जातिरयं चोरश्चेति नानुनयगम्य इति साक्षेपं तदेव पुनराह-हसेति । एव इति । चोरिका-निमित्तेनायं मयि दण्डमपि विदध्यादिति भियाऽसौ पलायित इत्युत्प्रेक्षा ॥

**कुमारगिरिराजीया** No commentary

---

१. गोरोअणवण्णा—सा. ए. २. महुसर—सा. ए. ३. पइं—सा. ए.




**प्रकाशिका**

अनन्तरे **कुटिलिका** इति । कुटिलिका नाट्यविशेष । यदुक्तम्—

रागेण रहितं यत्तु चार्धमत्तलिकायुतम् ।
भाषयैव च तन्नाट्यं कुटलीसञ्ज्ञकं मतम् ॥

**अर्धमत्तलीलक्षणं** तु—

उपेतापसृतौ पादौ वामश्चेद्रेचितः करः ।
कट्यामन्यस्तदा त्वर्धमत्तली तरुणे मदे ॥

इति ।

गजान्योक्त्या पुनराह **मम्मर** इति । मर्मरः शुष्कपर्णध्वनिरिति यद्यपि, तथापि विशिष्टवाचकानां पदानां विशेषणवाचकपदसांनिध्ये सति विशेषमात्रपरत्वमित्यभियुक्तोक्तेः शुष्कपत्रमात्रपरोऽयं मर्मरशब्दः । यद्वा मर्मरः स्वरश्च रणितं च पक्ष्यादीनां ताभ्यां मनोहरे । **मल्लघटीति** । मल्लघटी नाट्यविशेषः ॥३५॥

**द्विलयान्तरे चर्चरी** इति । नृत्यगीतवाद्यानां साम्यं लयः । 'लयः साम्यम्' **इत्यमरः** (१-६-९) । तस्य च त्रैविध्यमुक्तमन्यत्र—'द्रुतो मध्यो विलम्बश्च लयः स त्रिविधो मतः' इति । चक्रवाकीमाह—**गोरोअणेति**। चक्का चक्रवाकी । 'कोकश्चक्रश्चक्रवाकः' इति **त्रिकाण्डी** (२-५-३) । धन्या सर्वाङ्गसौन्दर्यादिसर्वोत्कर्षशालिनी । यद्वा प्रलोभिका स्त्री धन्या । 'रामा त्रिवर्गहेतुः स्त्री धन्या योषित् प्रलोभिका' इति । गोरोचनर्णे चक्के इति सम्बुद्धिर्वा । यद्वा सकृत् प्रश्नोत्तरं चक्रवाकी वदतीत्याह ॥३६॥ **रथाङ्गेति** । नामेति सम्भावनायाम् । 'हे रथाङ्गनामन्' इति तु पाठः साधीयान् । रथाङ्गवच्छ्रोणिबिम्बं यस्यास्तया चक्राकारश्रोणिमण्डलया प्रियतमया संत्यक्तः । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति **त्रिकाण्डी** (१-२-१६) । रथी रथवान् महारथो वा । अभिलाषशतैर्युक्तोऽयं राजा त्वां पृच्छति । उत्तरं देहीत्यर्थः ॥३७॥

**कोणेश्वरी**

**कुटिलिका** लयविशेषः । तत्प्रयोगस्तु—

उन्मत्ते च मदार्ते च सङ्ग्रामे प्रहृतान्तरे ।
मध्यमोत्तमपात्राणां कुटिला परिकीर्तिता ॥

**मम्मरेति** । मर्मररणितमनोहरे ।

पञ्चलं लद्वयं यत्र विरामान्तं द्विधा भवेत् ।
कलाद्वादशसंयुक्तः प्रोक्तो मल्लघटी लयः ॥

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥३८॥

कथं तूष्णीं स्थितः । भवतु । उपालभे तावदेनम् ।

*(जानुभ्यां स्थित्वा)*

तद्युक्तं तावदात्मानुमानेन वर्तितुम् । कुतः—

सरसि नलिनीपत्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात् पृथक्स्थितिभीरुता
मयि च विधुरे भावः कोऽयं प्रवृत्तिपराङ्मुखः ॥३९॥

*(उपविश्य)*

सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः । यावदन्यमवकाशमवगाहिष्ये ।[1]

---

**कोणेश्वरी**

युद्धसेविनि विश्लिष्टे शत्रोश्चापि विमर्दने ।
मध्यमोत्तमपात्राणां योज्या मन्दघटी लयः ॥

कुसुमिततरुपल्लवके कानने दयिताविरहोन्मादितो गजेन्द्रो भ्रमति । इतः सञ्चरतीत्यर्थः । अथ च गजेन्द्रच्छलेन पुरूरवस उन्मादावस्थां प्रकाशयति ॥३५॥ **गोरोअणेति** । गोरोचनाकुङ्कुमवर्णं चक्र मया भण्यते । किं भण्यते इत्याकाङ्क्षायामाह—**महुवासरेति** । मधुवासरे क्रीडन्ती धन्या त्वया न दृष्टा ? अपि तु दृष्टा भवेदिति संभाव्यत इत्यर्थः । यद्वा वासरे दिवसे मम धन्या त्वया न दृष्टा ? अपि तु दृष्टेत्यर्थः ॥३६॥ **रथाङ्गेति** । रथाङ्गनाम रथाङ्गं चक्रं तदेव नाम यस्य एवंभूत । रथाङ्गश्रोणिबिम्बया संत्यक्तोऽयं रथी मनोरथशतैर्वृतः सन् त्वां पृच्छतीति योजना । अनुरक्त एव ॥३७॥ प्रष्टव्यभागे तदीयं 'कष्क' इति शब्दमव्यक्तार्थकरणं समाकर्ण्य आह—अयमिति ॥

**कुमारगिरिराजीया**

**रथाङ्गनामन्नित्यादि** । स्पष्टोऽर्थः । कः कः इति चक्रवाकरुतानुकरणम् । एतदस्य स्वाभाविकमित्यज्ञात्वा 'त्वं कः कः' इत्येष मामधिक्षिपतीत्याशङ्कते ॥३७॥ **मा तावदित्यादि** । अहमस्य चक्रवाकस्य तावन्न विदितो न ज्ञातः । अत्र काकुरनुसन्धेया ॥

---

1. (पदान्तरे स्थित्वा) भवतु । न तावद् गच्छामि—शा. ए., कु. गि.

### प्रकाशिका

**सूर्याचन्द्रमसौ** इति। यस्य मम सूर्याचन्द्रमसौ उष्णरश्मिशीतरश्मी मातामहपितामहौ। कृतयुगादौ सूर्यनप्ता मनोः पुत्रः सुद्युम्नापरनामा इलो नाम राजा मृगयासङ्गाद्धरनिवारितमुमावनमेकाकी प्रविष्टमात्रः स्त्री बभूव। तामेकाकिनीं सुन्दरीं दृष्ट्वा बुधः कामातुरः स्वाश्रमं नीत्वा तस्यां पुरूरवसं पुत्रमजीजनदिति भविष्योत्तरपुराणकथाप्रथा ॥३८॥

'**सरसीति**। 'सरसी तु सरोवरम्' **इत्यमरः** (१-९-२७)। नलिनी कमलिनी। आवृतविग्रहामाच्छादिततनुम् 'विग्रहः समरे काये' इति स एव। सहचरीं स्त्रियम्। विरौषि शब्दं करोषि। पृथक्स्थितिर्भिन्नावस्थानं तेन भीरुता भयशीलत्वम्। विधुरे विरहिते। भावोऽभिप्रायः। प्रवृत्तिपराङ्मुखो वार्ताविमुखः। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति **त्रिकाण्डी** (१-५-७)॥

### कौणेश्वरी

स्वं परिचाययति—**सूर्येति**। यस्य सूर्याचन्द्रमसौ मातामहपितामहौ। उर्वश्या च भुवा च यो द्वाभ्यां स्वयं पतिर्वृतः। ताभ्यां पतित्वेनात्मनाहं वृत इति स्वपौरुषख्यापनं यद्यपि निषिद्धं तथाप्यवस्थाविशेषे न दोषायेति भावः ॥३८॥ **आत्मा** इति। यथात्मा दृश्यते तथाऽन्येऽपि द्रष्टुमर्हन्तीत्यर्थः।

**सरसीति**। सरसि नलिनीपत्रेणाप्यावृतशरीरां सहचरीं दूरे मत्वा समुत्सुकस्त्वं विरौषीति यावत्। जायास्नेहात् भवतः पृथक्स्थितिभीरुता। मयि पुनः समुपस्थिते विधुरे प्रवृत्तिपराङ्मुखो वार्तामात्रकथनेऽप्युदासीनः कीदृगयं भावः स्वभावो वा तव। यद्वा भवनं भावः। प्रवृत्तिपराङ्मुखं कीदृगिदं भवनम् ॥३९॥ **सर्वथेति**। मदीयभाग्यविजृम्भितमेवैतत्तथा च त्वयि नोपालम्भो युक्त इति भावः॥

### कुमारगिरिराजीया

**सूर्याचन्द्रमसावित्यादि**। यस्य मे सूर्याचन्द्रमसौ मातामहपितामहौ। सूर्यो मातामहश्चन्द्रः पितामहः। किं च योऽहमुर्वश्या च भुवा च द्वाभ्यां स्वयं वृतः। आत्मनैव स्वीकृतः। पतिः प्रियः। 'धवः प्रियः पतिर्भर्ता' **इत्यमरः** (२-६-३५)। सोऽहमिति पूर्वेण सम्बन्धः। सूर्याचन्द्रमसौ इत्यत्र 'देवताद्वन्द्वे च' (पा ६-२-१४) इत्यानङ। अत्र विकत्थनाया गम्यमानत्वाद् विचलनं नाम सन्ध्यङ्गमुक्तं भवति ॥३८॥ **सरसीत्यादि**। सरसि कासारे। नलिनीपत्रेणापि बिसिनीदलेनाप्यावृतविग्रहां च्छादितदेहाम्। सहचरीं चक्रवाकीम्। त्वं दूरे विप्रकृष्टे। स्थितामिति शेषः। मत्वा विरौषि ननु आक्रन्दसि खलु। भवतस्तव ज्यायास्नेहात् प्रियानुरागात् पृथक्स्थितिभीरुता भिन्नदेशनिवासकातरता इति चेदंरूपा। उक्तरूपेत्यर्थः। विधुरे वियुक्ते मयि तु भावस्तवाभिप्रायः कान्ताप्रवृत्तिपराङ्मुखः उर्वशीवार्ताविमुखः ॥३९॥

(*द्विपदिकया परिक्रम्यावलोक्य च*)

अये,

इदं रुणद्धि मां पद्ममन्तःक्वणितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥४०॥

इतोगतस्यानुशयो मा भूदित्यस्मिन्नपि कमलसेविनि भ्रमरे प्रणयं करिष्ये ।

(*अस्यान्तरे अर्धद्विचतुरस्रकः*)

एक्कक्कमवड्ढिअगुरुअरपेम्मरसे ।
सरे हंसजुआणओ कीलइ कामरसे[1] ॥४१॥
[एकक्रमवर्धितगुरुतरप्रेमरसे ।
सरसि हंसयुवा क्रीडति कामरसेन ॥४१॥ ]

(*चतुरस्रकेणोपेत्याञ्जलिं बद्ध्वा*)

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं,
वरतनुरथवाऽसौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं,
तव रतिरभविष्यत् पुण्डरीके किमस्मिन् ॥४२॥

---

**प्रकाशिका**

**इदमिति**। रुणद्धि अग्रे गन्तुं न प्रयच्छति । **क्वणिताः** शब्दायमानाः षट्पदा भ्रमराः । सीत्कारः कष्टाभिव्यञ्जकदन्तघटनाजनितशब्दानुकरणम् ॥४०॥ **अर्धद्विचतुरस्रक** इति नन्द्यावर्तापरनामकः संस्थानविशेषोऽर्धचतुरस्रकः। स च द्विवारं कृतत्वादर्धद्विचतुरस्रक इत्युच्यते । लक्षणं तु—

अस्यैव चेच्चरणयोरन्तरं स्यात् षडङ्गुलम् ।
वितस्तिमात्रमथवा नन्द्यावर्तं तदुच्यते ॥

इति । अस्यैवेति प्रकृतसंस्थानस्येत्यर्थः । अयमेव चार्धचतुरस्रक इत्याहुः । 'कमलसेविनि भ्रमरे प्रणयं करिष्ये' इत्युपक्रम्य अनन्तरं दृष्टं हंसं वर्णयति—

---

१. कामवसे—सा. ए.

### प्रकाशिका

**एक्कक्कमेति**। 'सरे' इति पदविहीनो वा पाठः। एकक्रमवर्धितगुरुतरप्रेमरसे। सरसि हंसयुवा क्रीडति कामरसेन॥ कामाभिनिवेशेनेत्यर्थः। यद्वा उन्मादितातिशयवशेन भ्रमरमेव हंसबुद्ध्या वर्णयति—**एक्केति**। अथवा हंसान्योक्त्या स्वावस्थामाह—**एक्केति**। एकक्रमवर्धितगुरुतरप्रेमरसः। शरेण हंसयुवा नावक्रीडति कामरसेन॥ कामस्य रसोऽभिनिवेशो यस्मिन्नेतादृशेन शरेण विद्ध इति शेषः। एकक्रमेण युगपद् वधितश्छिन्नः। प्रियाविरहेणेति भावः। गुरुतरः प्रेमरसो यस्यैतादृशो हंसयुवा नावक्रीडति। ईषत् क्रीडामपि न करोतीत्यर्थः। यद्वा। हंसजुआणओ इत्येकमेव पदम्। कुसुमसायकसायकाभितप्तः प्रियाविच्छेदच्छिन्नप्रेमा हंसयुवा क्रीडति इति शिरश्चालनेऽपि तु कथमपि क्रीडालेशमपि न करोतीति भावः। 'वृधू च्छेदने' (धा. पा. १७८३) इति धातुः। 'निर्गतसरे' इति पाठान्तरे कामरसेन कामाभिनिवेशेन उपलक्षित इति शेषः। यद्वा व्यतिरेकदृष्टान्तेन योज्येयं गीतिः। कामरसेन युगपदुत्पादितगुरुतरप्रेमरसो हंसयुवा क्रीडति। अहं तु दैवदग्धो न तथेति भावः। पेम्मरसे, सरे, कामरसे इत्यादिषु प्रथमातृतीये 'प्राकृते लिङ्गवचनमतन्त्रम्' इत्यादिहेमचन्द्राद्युक्तत्वाद् बोद्धव्ये ॥४१॥ **चतुरस्रकेण** इति। संस्थानविशेषश्चतुरस्रकम्। यदुक्तम्—

> नन्द्यावर्तस्थयोरर्धौ भवेदष्टादशाङ्गुलम्।
> अन्तरे चतुरैः स्थानं चतुरस्रं तदोदितम्॥

इति। **मधुकरेति**। मधुकरो भ्रमरः। मदिराक्ष्याः सालसनेत्रायाः। प्रवृत्तिं वृत्तान्तम् ॥४२॥

### कोणेश्वरी

**इत** इति। इदानीमयं कमलासक्त इति मय्युत्तरं न दास्यत्येव। तथाप्यपृष्ट्वैव गतवति मयि पुनरनुशयः स्यादिति पृच्छामि तावदेनमित्यभिप्रायः ॥४०॥

**अर्धेति**। लय इत्यर्थः। तल्लक्षणं यथा ताम्×××। **एक्केति**। एकक्रमवर्धितगुरुतरप्रेमरसेन कामरसेन सरसि हंसयुवा क्रीडति। एकोऽद्वितीयः श्रेष्ठो वा। क्रमेण कालवशेन वर्धितः प्रेमरसो यत्र तेनेत्यर्थः ॥४१॥

**मधुकरेति**। हे मधुकर। तस्या मदिरे मनोहरे अक्षिणी यस्या एवंभूतायाः प्रवृत्तिं वार्तां शंस कथय। अथवा त्वयाऽसौ मम वरतनुर्नैव दृष्टा इति मत्वा मया तर्क्यत इति भावः। कुत एवं तर्क्यत इत्यत आह—**यदीति**। यदि त्वं तां दर्शनगोचरीकुर्यास्तदा तदाननसौरभं त्वयाप्यवश्यमुपलब्धं भवेत्तथा च सत्यस्मिन् पुण्डरीके प्रीतिरेव तव न तिष्ठेदित्यर्थः ॥४२॥

(*द्विपदिकया परिक्रम्यावलोक्य च*)

अये, करिणीसहायो नागाधिराजो नीपस्कन्धनिषण्णस्तिष्ठति । [1]यावदेनं गच्छामि ।

(*कुलिका*[2])

करिणीविरहसंताविओ ।

(*मन्दघटी*[3])

काणणे गंधुद्धुअमहुअरु ॥४३॥

[करिणीविरहसन्तापितः ।

कानने गन्धोद्धतमधुकरः ॥४३॥]

(*अत्रान्तरे विलोक्य*)

अथवा न तावदयमुपसर्पणकालः ।

---

**कुमारगिरिराजीया**

**इदमित्यादि**: । स्पष्टोऽर्थः ॥४०॥

**मधुकरेत्यादि** । सुरभि घ्राणतर्पणं तन्मुखोच्छ्वासगन्धमवाप्स्यः, यद्यास्वादयिष्यश्चेत् । अस्मिन् पुण्डरीके तव रतिः प्रीतिरभविष्यत् किम् । अजनिष्यत किम् । न भवेदित्यर्थः । लिङ्निमित्ते लृङ् क्रियातिपत्तौ (पा.३-३-१३९) इति लृङ् ॥

**प्रकाशिका**

नीपो धूलिकदम्बः । स्कन्धः शाखा । गजान्यापदेशेनाह—करिणीति । करिणीविरहसन्तापितः । कानने गन्धोद्धतमधुकरः ॥ पुष्पगन्धोद्धतः । गन्धोद्धतो गर्वोद्धत इति वा । गजो भ्रमतीति शेषः । 'गन्धः सम्बन्धलेशयोर्गन्धकामोदगर्वेषु' इति **हेमचन्द्रः** ॥४३॥

**कोणेश्वरी**

करिणीविरहसन्तापितो गन्धोद्धृतमधुकरः कानने नागाधिराजस्तिष्ठतीत्यनुषङ्गः ॥४३॥

**कुमारगिरिराजीया** The verse omitted.

---

१. अस्मात् प्रियोदन्तमुपलप्स्ये । यावदुपसर्पामि—सा. ए. २. कुटिलिका—सा. ए. ३. मल्लघटी—सा. ए.

अयमचिरोद्गनपल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
[1]अभिलेढु तावदासवसुरभिरसं शल्लकीभङ्गम् ॥४४॥

*(स्थानकेनावलोक्य)*

अये, कृताहारकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि ।

(*अनन्तरे चर्चरी*)

हउं पइं पुच्छिमि आअक्खहि गअवरु ।
ललिअपहारे णासिअतरुवरु ।
दूरविणिज्जिअससहरकंती
दिट्ठी पिअ पइं संमुह जंती ॥४५॥
[अहं त्वां पृच्छाम्याचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर ।
दूरविनिर्जितशशधरकान्तिः
दृष्टा प्रिया त्वया संमुखं यान्ती ॥४५॥]

(*पदद्वयं पुरत उपसृत्य*)

मदकल युवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ॥४६॥

(*सहर्षमाकर्ण्य*) अहह, अनेन प्रियोपलब्धिशंसिना मन्द्रकण्ठ-गर्जितेन समाश्वासितोऽस्मि । साधर्म्याद् भूयसी मे त्वयि प्रीतिः ।

---

**प्रकाशिका**

**अयमिति**॥ अचिरोद्गतो नूतनोत्पन्नः । उपनीतमानीतम् । अभिलेढु आस्वादयातु । तावदादौ । आसवो मदिरा । शल्लकी गजप्रियस्तरुभेदः । 'शल्लकी श्वाविदगयोः' इति **लोचनः**। भङ्गो नवपल्लवः । 'भङ्गस्तरङ्ग उद्भेदे भङ्गो जयविपर्यये' इति च सः ॥४४॥

---

१. अभिलषतु—सा. ए.

## प्रकाशिका

**स्थानकेनेति** । स्थानकमालापविशेषः तथाचाभाणीद् भरतः—'स्थानकं तद्वदेव स्यात् पृथग्भूतविदारिकम्' इति । तद्वदिति प्रकृतालापवदित्यर्थः ।

गजं प्रति प्रियाप्रवृत्तिं पृच्छति—**हइं पइ** इति । अहं त्वां परं त्वां वा पृच्छामि आचक्ष्व गजवर ललितप्रहारेण नाशिततरुवर । दूरविनिर्जितशशधर-कान्तिर्दृष्टा प्रिया त्वया संमुखं यान्ती ॥ दूरमत्यन्तं विनिर्जिता पराजिता । आह्लादकतातिशयनिष्कलङ्कतादियुतमुखेनेति शेषः । शशलाञ्छनकान्तिर्यया । शशधरेत्यनेन पूर्णचन्द्रता द्योत्यते ॥४५॥

**मदकलेति** । मदेन कलो मधुराव्यक्तशब्दः । 'कलस्तु मधुराव्यक्तशब्दे जीर्णे' इति लोचनः । युवतिशशिकला इत्यनेन युवतीनां तारकात्वम्, शशिकला इत्यनेन च निष्कलङ्कता द्योत्यते । स्थिरयौवनत्वं तु देवतात्वादेव ॥४६॥ साधर्म्यात् समानधर्मत्वात् ॥

## कोणेश्वरी

**अयमिति** । प्रियतमाया अग्रहस्तेनोपनीतं भग्नशल्लकीखण्डमासवसुरभि-रसमचिरजालपल्लवं तावदयमभिलषतु । इदानीं महाजनानां न गन्तुमर्हतीति भावः ॥४४॥ **हइं** इति । विविधप्रकारेणाश्रिततरुवर गजवर त्वामहं पृच्छामि अत आचक्ष्व । किं तदित्याह—**दूरेति** । दूरविनिर्जितशशधरकान्तिः संमुखं यान्ती त्वया दृष्टा ? यदि दृष्टा तदा कथयेत्यर्थः ॥४५॥

**मदकलेति** । मदेन मत्ततया कल मधुरस्वर गजयूथप यूथिकाशबला बर्बराः केशा यस्या एवम्भूता स्थिरयौवना वर्तमानप्रौढयौवना अत एव सुख-दर्शना युवतिशशिकला दूरादपि तव दर्शनविषयतां यातेत्यर्थः ॥४६॥

कथं साधर्म्यमत आह—

## कुमारगिरिराजीया

**अयमचिरोद्गतेत्यादि** । स्पष्टोऽर्थः ॥४४॥

मदकल मदोत्कट गजयूथप कलभकरोरुः करिपोतस्य करवदूरू यस्याः सा तथोक्ता । 'ऊरूत्तरपदादौपम्ये' (पा. ४-१-६९) इति ऊङ् । यूथिकाशबल-केशी यूथिकाभिः पुष्पविशेषैः शबलाः मिश्राः केशा यस्याः सा तथोक्ता । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा. ४-१-५४) इति ङीष् ॥४६॥

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवान्,
अव्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।
स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा,
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां माऽनुभूः ॥४७॥

सुखमास्तां भवान् ।

(*द्विपदिकया परिक्रम्यावलोक्य च*)

अये, अयमसौ सुरभिकन्दरो नाम विशेषरमणीयः सानुमान् । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत ।

(*परिक्रम्यावलोक्य च*)

कथमन्धकारः । भवतु । विद्युत्प्रकाशेनावलोकयामि । कथम् । मदीयैर्दुरितपरिणामैर्मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्तिष्ये ।

---

**प्रकाशिका**

तदेवाह—**मामाहु**रिति । विशेषेणोच्छिन्ना न भवतीत्यव्युच्छिन्ना पृथ्वी महती प्रवृत्तिरादरो यस्मिंस्तत् । पक्षे प्रवृत्तिरुद्गमो यस्य । 'दानं गजमदे त्यागे' इत्युभयत्र **त्रिकाण्डी** । वशा करिणी । 'वशा योषासुतावन्ध्यास्त्रीगुर्वीकरिणीष्वपि' इति **लोचनः** ॥४७॥

**कोणेश्वरी**

**मामिति** । राजाधिराजं मां वदन्ति । गजाधिराजो भवान् । विगत उच्छेदो यत्र तथा च सन्ततमित्यर्थः । एवंभूतं मम भवतश्च दानं तुलापुरुषादि मदजलं च प्रचुरं वर्तत इत्यर्थः । स्त्रीरत्नेषु मध्ये उर्वशी मम प्रियतमा । तव पुनर्यूथमध्ये इयं वशा करिणी । सकलं मम सादृश्यमेव तेऽनुभूयते । त्वं पुनरहमिव प्रियाविरहजवेदनां मानुभूर्माऽनुभवेत्यर्थः ॥४७॥

**कुमारगिरिराजीया**

**मामाहु** रिति । स्पष्टोऽर्थः ॥४७॥

(अनन्तरे खण्डिका)

पसरिअखरखुरदारिअमेइणि, वणगहणे अविचल्लु ।
परिसप्पइ पेच्छह लीणो णिअकज्जुज्जुअ कोलु[1] ।।४८।।
[प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः ।
परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ।।४८।।]

## प्रकाशिका

अनन्तरे खण्डिका इति । गतिविशेषः खण्डिका । यदुक्तम्—
पर्यायेण शनैस्तिर्यङ्नतमुक्तं धृतं शिरः ।
श्रीरागकुम्भतालेन निबद्धा खण्डिका मता ।।

इति । कुम्भतालश्च—
'कामबाणद्रुता यत्र अर्धचन्द्रस्ततः परम् ।
दविरामो लघुश्चैको बिन्दुश्चार्धद्रुतो भवेत् ।।
दविरामो लघुद्वन्द्वद्रुतो लघुविरामवान् ।।

इति च । यथा—
ते ते ते ते ते ति थ्यै थे ते तिथ्ये थै थैं ते थै ।।
० ० ० ० ० ◡ ઠ । ० ◡ ઠ । । ० ।

खण्डिका गद्यभेदो वा । प्राह च भगवान् भरतः—
खण्डी गणेशदैवत्या सात्वतीं वृत्तिमाश्रिता ।
श्वेता हास्यकृदारब्धा वैदर्भीभङ्गिसम्भवा ।।

इति । वराहान्यापदेशेनाह—पसरिअ इति । प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः । परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ।। अविचलो धीरः । वनगहने लीनोऽपि निजकार्योद्युक्तः कन्दाद्यन्वेषणार्थं कृतोद्योगः परिसर्पतीतस्ततो भ्रमति । प्रसृतखरखुरेति कन्दाद्युत्खननार्थं भूमिदारणम् । बुभुक्षया पीडितः क्रोधवशातः पृथ्वीदारणं करोतीति वा । वराहस्वभाववर्णनं वा । पक्षे धीरः क्रीडार्थं वनगहने लीनः प्रियतमान्वेषणरूपनिजकार्योद्युक्तो भ्रमति । प्रबलतरविरहखिन्नो हस्तपादेन भूम्यास्फालनं च करोति । पश्यतेत्युन्मादवशादाकाशवचनम् । यद्वा शिलोच्चयदर्शनप्रवृत्तोऽन्तरा दृष्टं वराहं वर्णयति—पसरिअ इति ।।४८।।

## कोणेश्वरी

पसरिअ इति । प्रसृतखरखुरदारितमेदिनीकोऽवितृष्णो वनगहने काननारण्ये लीनो निजकार्योद्यतः कोलः संक्रामतीत्यन्वयः ।।४८।।

कुमारगिरिराजीया No commentary

---

१. कोल्लू—ना. प.

अपि वनान्तरमल्पभुजान्तरा
श्रयति पर्वत पर्वसु संनता ।
इयमनङ्गपरिग्रहमङ्गला[1]
पृथुनितम्ब नितम्बवती तव ॥४९॥

कथं तूष्णीमेवास्ते । शङ्के विप्रकर्षान्न शृणोति । भवतु । समीपमस्य गत्वा पृच्छामि ।

*(अनन्तरे चर्चरी)*

फलिहसिलाअलणिम्मलणिब्भरु[2]
बहुविहकुसुमविरइअसेहरु ।
किंणरमहुरुग्गीअमणोहरु
देक्खावहि महु पिअअम महिहरु ॥५०॥

[स्फटिकशिलातलनिर्मलनिर्भर,
बहुविधकुसुमविरचितशेखर ।
किन्नरमधुरोद्गीतमनोहर
दर्शय मम प्रियतमां महीधर ॥५०॥]

*(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा)*

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥५१॥

*(तथैव प्रतिशब्दं शृणोति । आकर्ण्य सहर्षम्)*

कथम् । यथाक्रमं दृष्टेत्याह । भवतु । अवलोकयामि ।

*(दिशोऽवलोक्य सखेदम्)*

कथम् । ममैवायं कन्दरान्तरविसर्पी प्रतिशब्दः ।

*(इति मूर्च्छति)*

---

१. मङ्गना—सा. ए. २. णिज्झरु—सा. ए.

## प्रकाशिका

पर्वतं प्रत्याह—**अपीति**। अपि प्रश्ने। 'क्रोडो भुजान्तरम्' इत्यमरः (२-६-७७)। पर्वस्ववयवग्रन्थिषु। 'पर्व स्यादुत्सवे ग्रन्थौ पर्वप्रतिपदोरपि' इति लोचनः। नितम्बो रोधः शिखरं वा। 'कटीरके नितम्बः स्याच्छिखरे स्कन्धरोधसोः' इति सः ॥४९॥

पर्वतं प्रति प्रार्थयते—**फलिहसिलेति**। स्फटिकशिलातलनिर्मलनिर्भर बहुविधकुसुमविरचितशेखर। किन्नरमधुरोद्गीतमनोहर दर्शय मम प्रियतमां महीधर ॥ स्फटिकशिलातलैर्निभरमत्यन्तं निर्मलः। 'निर्मलनिर्भर' इत्यत्र प्राकृते पूर्वनिपातानियमान् निर्भरनिर्मलेति विग्रेयम्। यद्वा निर्मलेत्यन्तमेकं पदम्। निर्भरेत्यारभ्य शेखरान्तमेकम्। 'देक्खावेहि' इति दर्शय इत्यर्थे देशी। 'निर्मलनिर्झर' इत्यपि क्वचित् पाठः ॥५०॥

**सर्वक्षितिभृतामिति**। अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम्। त्रिगताख्यं वीथ्यङ्गं चेदम्। तथा चाह साहित्यदर्पणकृत्—'त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः।' इति (सा. द. ६. २६५) ॥५१॥

## कोणेश्वरी

**अपीति**। हे पृथुनितम्ब महत्प्रस्थ पर्वत त्वेदमनङ्गपरिग्रहमपि वनान्तरम्। अल्पं भुजान्तरं यस्या एवंभूता। संनतग्रन्थिभागा नितम्बवती इदानीमत्राश्रिताऽस्तीत्यर्थः ॥४९॥

**फलिहेति**। स्फटिकशिलातलनिर्मलनिर्झर बहुविधकुसुमैर्विरचितशेखर, किन्नरमधुरोद्गीतमनोहर मम प्रियतमां दर्शयेत्यर्थः ॥५०॥

**सर्वक्षितिभृतामिति**। सर्वपर्वतानां नाथ, अस्मिन् रम्ये वनान्ते सर्वाङ्गसुन्दरी रामा मया विरहिता त्वया दृष्टेत्यन्वयः। प्रतिरवे तु सर्वक्षितिभृतां राज्ञां नाथ, त्वया विरहिता मया दृष्टेत्यन्वयः ॥५१॥

## कुमारगिरिराजीया

**अपि वनान्तरमित्यादि**। पर्वसु गुल्फादिसन्धिषु संनता निमग्ना। निगूढग्रन्थिरित्यर्थः। अनङ्गपरिग्रहं मन्मथस्वमिदं वनान्तरमपि श्रयति भजति। अपि प्रश्ने ॥४९॥

**सर्वक्षितिभृतामित्यादि**। मया विरहिता त्वया दृष्टेत्यत्र प्रश्नार्थे काकुरनुसन्धेया। एतदेव प्रतिध्वनौ सति त्वया विरहिता मया दृष्टेत्युत्तरवत् प्रतिभाति च। शेषमुभयत्र समानम् ॥५१॥

(*उत्थायोपविश्य सविषादम्*)

अहह । श्रान्तोऽस्मि । यावदस्या गिरिणद्यास्तीरे तरङ्गवातमासेविष्ये ।

(*द्विपदिकया परिक्रम्यावलोक्य च*)

इमां नवाम्बुकलुषां स्रोतोवहां पश्यता मया रतिरुपलभ्यते । कुतः—

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥५२॥

भवतु । प्रसादयामि तावदेनाम् ।

---

**प्रकाशिका**

**तरङ्गभ्रूभङ्गेति** ।'यथा' शब्दः कोपव्यञ्जकेषु तरङ्गेत्याद्याविद्धमित्यन्तेषु विशेषणेषु योज्यः । आविद्धं स्खलनपूर्वकं वक्रं वा याति तथा। ध्रुवमुत्प्रेक्षायाम् । बहुशो बहुतरं स्खलितं मत्कृतमपराधमभिसन्धाय मनसि निधायासहना सा उर्वशी नदीत्वेन परिणता । 'आविद्धः प्रहृते वक्रे' इति **विश्वलोचनः** । 'स्खलितं तूचिताद्भ्रंशे स्खलितं चलिते त्रिषु' इति च सः ॥५२॥

**कोणेश्वरी**

**तरङ्गेति**—ध्रुवं सेयं नदीत्वेन परिणता । तस्या एव नदीपरिणतिरभूदित्यर्थः । असहना यतः । तर्कणनिमित्तं सादृश्यमाह-तरङ्गेति । तरङ्ग एव भ्रूभङ्गो यस्याः सा तथा । क्षुभितविहगश्रेणिरेव रसना यस्याः सा तथा । संरम्भशिथिलं वसनमिव फेनं विकर्षन्ती बहुशोऽभिसन्धाय स्खलितं यथा याति । आविद्धमतोलितमिवातो मन्ये सैव नदीरूपं कृतवतीत्यर्थः ॥५२॥

**कुमारगिरिराजीया**

**तरङ्गेत्यादि** । यथा आविद्धं कुटिलं यथा भवति तथा यान्ती सेयमुर्वशी । बहुशः बहु 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' (पा. ५-४-४२) इति शस् । स्खलितमपराधम् । ममेति शेषः । अनुसन्धाय स्मृत्वा । असहना असहिष्णुः सती नदीभावेन सरिद्रूपेण परिणता विकारं गता । स्वरूपमुत्सृज्य रूपान्तरं प्राप्तेत्यर्थः । ध्रुवमित्युत्प्रेक्षायाम् ॥५२॥

(*अनन्तरे कुटिलिका*)

पसीअ पिअअम सुंदरि एणए
खुहिआकरुणविहंगमए णए ।
सुरसरितीरसमूसुअएणए
अलिउलझंकारिए णए[1] ॥५३॥
[प्रसीद प्रियतमे सुन्दरि एनया
क्षुभिताकरुणविहङ्गमके नत्या ।
सुरसरित्तीरसमुत्सुकैणके,
अलिकुलझंकारिते नदि ॥५३॥]

**प्रकाशिका**

नदीत्वेन ज्ञातां प्रियां प्रत्याह—**पसीअ** इति । प्रसीद प्रियतमे सुन्दरि एनया क्षुभिताकरुणविहङ्गमके नत्या । सुरसरित्तीरसमुत्सुकैणके अलिकुलझंकारिते नदि ॥ सुन्दरि नदि प्रियतमे, नदीरूपे प्रियतमे । एनया नत्या प्रसीद प्रसादं रचय । प्रियतमे मयीति वा । मत्कृतनमस्कारेण नदीभावं त्यक्त्वा आलिङ्गनादिना मयि अनुग्रहं विधेहीत्यर्थः । क्षुभितेत्यादयो नदीसम्बुद्धयः । नमस्कारादिना नदीभावापनयनप्रवृत्तं मामुदीक्ष्य स्वाश्रयविनाशशङ्कया क्षुभिताः प्रियागतिस्वराद्यनुकरणेन मत्पीडकत्वादकरुणा विहङ्गमा हंसपिकादयो यस्या तत्सम्बुद्धिः । एवं च वियोगजन्यपीडावत्त्वे सत्यपि एतादृशमद्विरोधिविहङ्गाश्रयदानेनापि मत्पीडाकरणं तव नोचितमिति व्यज्यते । सुरसरिद्रूपायास्तव तीरे समुत्सुका मृगा यस्यास्तत्सम्बुद्धिः । सुरसरिदिति सम्बुद्ध्यन्तं भिन्नं वा पदम् । सुरसरित्तीरेत्यनेन च त्वमेतादृशी मत्प्रतिपक्षिपक्ष्याश्रयदाननिरताऽहं तु त्वयि नितरामुत्कण्ठित इत्यहो ते नैष्ठुर्यमिति ध्वन्यते ॥५३॥

**कोणेश्वरी**

**पसिअ** इति । प्रसीद प्रियतमसुन्दरिके नदि, क्षुभिततरुणविहङ्गमके नत्या । सुरसरित्तीरसमुत्सुकैणके अलिकुलझंकारिते एनया ॥ हे प्रियतमेव सुन्दरि सुरसरिन्नदि, एनया मत्क्रियमाणनत्या प्रसीद प्रसन्ना भव । अत्र क्षुभितेत्यादिना रसनावत्त्वं तीरेत्यादिना चपलनयनवत्त्वं कपितं मन्तव्यम् ॥ ५३॥

**कुमारगिरिराजीया** No commentary

---

1. अलिउलरअझंकारिअ एणए—शा. ए.

(अनन्तरे कुटिलिका)

पसीअ पिअअम सुंदरि एणए
खुहिआकरुणविहंगमए णए ।
सुरसरितीरसमूसुअएणए
अलिउलझंकारिए णए[1] ॥५३॥
[प्रसीद प्रियतमे सुन्दरि एनया
क्षुभिताकरुणविहङ्गमके नत्या ।
सुरसरित्तीरसमुत्सुकैणके,
अलिकुलझंकारिते नदि ॥५३॥]

प्रकाशिका

नदीत्वेन ज्ञातां प्रियां प्रत्याह—पसीअ इति । प्रसीद प्रियतमे सुन्दरि एनया क्षुभिताकरुणविहङ्गमके नत्या । सुरसरित्तीरसमुत्सुकैणके अलिकुलझंकारिते नदि ॥ सुन्दरि नदि प्रियतमे, नदीरूपे प्रियतमे । एनया नत्या प्रसीद प्रसादं रचय । प्रियतमे मयीति वा । मत्कृतनमस्कारेण नदीभावं त्यक्त्वा आलिङ्गनादिना मयि अनुग्रहं विधेहीत्यर्थः । क्षुभितेत्यादयो नदीसम्बुद्धयः । नमस्कारादिना नदीभावापनयनप्रवृत्तं मामुदीक्ष्य स्वाश्रयविनाशशङ्कया क्षुभिताः प्रियागतिस्वराद्यनुकरणेन मत्पीडकत्वादकरुणा विहङ्गमा हंसपिकादयो यस्या तत्सम्बुद्धिः । एवं च वियोगजन्यपीडावत्त्वे सत्यपि एतादृशमद्विरोधिविहङ्गाश्रयदानेनापि मत्पीडाकरणं तव नोचितमिति व्यज्यते । सुरसरिद्रूपायास्तव तीरे समुत्सुका मृगा यस्यास्तत्सम्बुद्धिः । सुरसरिदिति सम्बुद्ध्यन्तं भिन्नं वा पदम् । सुरसरित्तीरेत्यनेन च त्वमेतादृशी मत्प्रतिपक्षिपक्ष्याश्रयदाननिरताऽहं तु त्वयि नितरामुत्कण्ठित इत्यहो ते नैष्ठुर्यमिति ध्वन्यते ॥५३॥

कोणेश्वरी

पसिअ इति । प्रसीद प्रियतमसुन्दरिके नदि, क्षुभितकरुणविहङ्गमके नत्या । सुरसरित्तीरसमुत्सुकैणके अलिकुलझंकारिते एनया ॥ हे प्रियतमेव सुन्दरि सुरसरिन्नदि, एनया मत्क्रियमाणनत्या प्रसीद प्रसन्ना भव । अत्र क्षुभितेत्यादिना रसनावत्त्वं तीरेत्यादिना चपलनयनवत्त्वं कल्पितं मन्तव्यम् ॥ ५३॥

कुमारगिरिराजीया No commentary

---

१. अलिउलरअझंकारिअ एणए—म्रा. ए.

(*चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा*)

[1]त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि मानिनि दासजनं यतः ॥५५॥

कथं तूष्णीमेवास्ते । अथवा परमार्थतः सरिदियं नोर्वशी । अन्यथा कथं पुरूरवसमपहाय समुद्राभिसारिणी भवेत् । अनिर्वेदप्राप्याणि श्रेयांसि । भवतु । तमेवोद्देशं गच्छामि, यत्र मे नयनयोः सा सुनयना तिरोहिता ।

(*परिक्रम्यावलोक्य च*)

इमं तावत् प्रियाप्रवृत्तये सारङ्गमासीनमभ्यर्थये ।
अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितमधुपझङ्कारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन सन्तप्तो
विचरति गजाधिपतिरैरावतनामा ॥५६॥

(*गलितकः । जानुभ्यां स्थित्वा*)

कृष्णसारच्छविर्योऽयं दृश्यते काननश्रिया ।
नवशष्पावलोकाय कटाक्ष इव पातितः ॥५७॥[2]

---

१. तव निबद्धरतौ प्रियवादिनि ... चेतसि—को.

२. विलोक्य
अयमन्तिकमायान्तीं शिशुना स्तनपायिना ।
अनन्यदृष्टिस्तामेव मृगीं रुद्धां निरीक्षते ॥

**क्षोणेश्वरी**

वरणः । वेलासलिलोद्वेल्लितहस्तदत्ततालोऽवतरति दश दिशो रुणद्धि विना नवमेघकालम् ।।५४।।

**कुमारगिरिराजीया**

No commentary

**प्रकाशिका**

**त्वयीति** । निबद्धरतेर्नितरां सक्तचित्तस्य । प्रियवादिनः प्रियभाषण-परस्य । प्रणयस्य प्रीतेर्भङ्गात् पराङ्मुखं चेतोऽन्तःकरणं यस्य ।।५५।।

ऐरावतान्योक्त्याह—**अभिनवेति** । एतादृशविशेषणविशिष्टे वने भ्रमणं विरहातिशयं द्योतयति ।।५६।।

गलितको नाट्यविशेषः । **कृष्णसारेति** । कृष्णसारः कृष्णमृगस्तद्वच्छवि-र्दीप्तिर्यस्य । पक्षे कृष्णो यः सारोर्थाऽदक्ष्णः कनीनिका तच्छविर्यस्मिन् । अतिश्याम इत्यर्थः । 'शष्पं बालतृणं घास.' इति त्रिकाण्ड़ी ।।५७।।

**क्षोणेश्वरी**

नदीं प्रियतमां मन्यमान एवाह—**तवेति** । तव निबद्धरतौ प्रियवादिनि प्रणयभङ्गे पराङ्मुखं चेतो यस्य तस्मिन् । तव इति सर्वत्र सम्बध्यते । एवंभूते मयि कमपराधलवं पश्यसि यतो दासजनं मां त्यजसि । न तावन्मयि रतिहानिर्न वाप्रियवादिता । तथापि मम त्यागः स्वकीयमितरत्वख्यापनपर इति भावः ।।५५।।

**अभिनवेति** । निगदव्याख्यातमेतत् ।।५६।।

**कृष्णेति** । योऽयं कृष्णसारच्छविर्दृश्यते काननश्रियाऽस्यावलोकाय पातितः कटाक्ष इवेत्यध्याहृरेणान्वयः ।।५७।। **अयमिति** । अन्तिकमायान्तीं स्तनपायिना शिशुना रुद्धामेव मृगीं तामेव निरीक्षतेऽनन्यदृष्टिः सन्नित्यर्थः ।।

**कुमारगिरिराजीया**

**त्वयि निबद्धेत्यादि** । स्पष्टोऽर्थः ।।५५।।

**कृष्णसारेति** । कृष्णा नीला शारा कर्बुरा छविः कान्तिर्यस्य स तथोक्तो यः सारङ्गो हरिणो दृश्यते, असौ काननश्रिया वनलक्ष्म्या मेघकालावलोकाय पातितः प्रसारितः कटाक्ष इव ।।५७।।

**अस्यान्तिकमित्यादि** । स्पष्टोऽर्थः ।।

( [1]चर्चरी )

सुरसुंदरि जहणभरालस पीणुत्तुंगघणत्थणि
थिरजोव्वण [2]तणुसरीरि हंसगइ ।
गअणुज्जलकाणणे मिअलोअणि भमंते
दिट्ठ पइं तह विरहसमुद्दंतरे उत्तारहि मइं ॥५८॥
[सुरसुन्दरी जघनभरालसा पीनोत्तुंगघनस्तनी
स्थिरयौवना तनुशरीरा हंसगतिः ।
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥५८॥]

प्रकाशिका

मृगमनुयुङ्क्ते—सुरसुंदरि इति । सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी स्थिरयौवना तनुशरीरा हंसगतिः । गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥ स्थिरयौवनात्वे सुरसुन्दरीत्वं हेतुः । एतादृशविशेषणोपलक्षिता मत्प्रिया वने भ्रमन्ती यदि त्वया दृष्टा तर्हि मां विरहपारावारात् समुत्तारयेत्यर्थः । तत्कथनेनेति शेषः काननस्य गगनोज्ज्वलत्वं महत्त्वनीलत्वाद्यतिशयसाधर्म्यात् । भमंते भ्रमता त्वयेति वा । तह तथा । अनिर्वचनीयादित्यर्थ इति वा ॥५८॥

कोणेश्वरी

सुरसुंदरि इत्यादि । यदि गगनोज्ज्वले कानने भ्रमता त्वया सुरसुन्दरी दृष्टा तदा विरहसमुद्रान्तरान् मामुत्तारय इत्यग्रे स्थितेन हंहो हरिणपते इत्यनेन सम्बन्धः । अस्मिन् गगनवन्महति कानने बहवः सुरसुन्दर्यः सञ्चरन्ति । तथा च तदुपलक्षणं किञ्चिन्मया यदि ज्ञायते तदा कथ्यत इत्याह—जहणेति । जघनभरालसा पीनोत्तुङ्गघनस्तनी स्थिरयौवना तनुकशरीरा हंसगतिर्मृगलोचनेत्यनेन चिह्नेनाचक्ष्वेत्यर्थः ॥५८॥

कुमारगिरिराजीया

No commentary

१. इति नर्तित्वा—सा. ए. २. तणुअसरीरि—सा. ए.

(*उपसृत्याञ्जलिं बद्ध्वा*)

हंहो हरिणीपते[1] ।

अपि दृष्टवानसि मम प्रियां वने,
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते,
सुभगा तथैव खलु साऽपि वीक्ष्यते ॥५९॥

कथम् । अनादृत्य मद्वचनं कलत्राभिमुखं स्थितः । सर्वथोपपद्यते परिभवास्पदं विधिविपर्ययः । यावदन्यमवकाशमवगाहिष्ये ।

(*परिक्रम्यावलोक्य च*)

हन्त, दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्येदम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥६०॥

---

**प्रकाशिका**

अपिः प्रश्ने । तदुपलक्षणं तस्याश्चिह्नम् ॥५९॥

**रक्तकदम्ब** इति । रक्तानि कदम्बानि कुसुमानि यस्य सः । रक्तकदम्बो हि वर्षासु कुसुमितो भवतीति ॥६०॥

**कोणेश्वरी**

मद्दृष्टेन केनापि दृष्टान्तेन मां बोधय इत्यत आह—**अपीति** । त्वत्सहचरीवत् साऽपि सुभगा इत्यर्थः ॥५९॥ **परिभवेति** । अभाग्यं पराभवास्पदमित्यर्थः । **रक्तेति** । यस्यासमग्रकं केसरं विषममपि कुसुमं प्रियया शिखाभरणं कृतं सोऽयं रक्तकदम्बः । तथा चायं तस्याः पूर्वदृष्टो मार्ग इति । अनेन पथा गता स्यात् ॥६०॥

**कुमारगिरिराजिया**

हंहो इत्यामन्त्रणे । **अपि दृष्टवान्** इति । स्पष्टोऽर्थः ॥५९॥

**रक्तकदम्ब** इत्यादि । स्पष्टोऽर्थः ॥६०॥

---

१. हरिणपते—सा. ए.

[1]तत् किं न खलु शिलाभेदगतं नितान्तरक्तमिदमवलोक्यते ।

प्रभालेपी नायं [2]हरिहतगजस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं पुनरिदम् ।
अये रक्ताशोकस्तबकसमरागो मणिरयं,
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥६१॥

भवतु । आदास्ये तावत् ।

(*ग्रहणं नाटयति*)

---

**प्रकाशिका**

**प्रभालेपीति ।** प्रभया तेजसा लिम्पति व्याप्नोति तादृशः । हरिणा सिंहेन हतो मारितः । स्फुलिङ्गोऽग्निकणः । अभितो वृष्टं जलवर्षणम् । पूषा सूर्यः । व्यवसितः कृतोद्योगः ॥६२॥

**कोणेश्वरी**

**शिलेति**—भिन्नशिलातलस्थमित्यर्थः । कृदभिभूतो भावो द्रव्यवत् प्रकाशत इति व्युत्पत्तेः । शङ्कापरिहाराभ्यां निरस्य निरासपूर्वकं स्वरूपमाह—**प्रभालेपीत्यादि** । हरिहतगजस्यामिषलवस्तावदयं न भवितुमर्हति, प्रभायुक्तो यत इति । प्रभावत्वेनाग्नेः स्फुलिङ्गः स्यात् सोऽपि न । इदं पुनर्गहनमभिवृष्टं यत इति हेतुः । तथा च मणिरयम् । आलम्बितकरः पूषा यमुद्धर्तुं व्यवसित इव प्रतिभातीति शेषः ॥६२॥

**कुमारगिरिराजीया**

**प्रभालेपीत्यादि ।** प्रभाया लेपश्छुरणमस्यास्तीति स तथोक्तः । अयं पुरोवर्ती हरिहतमृगस्यामिषलवो मांसखण्डो न भवति । तस्य प्रभालेपित्वासम्भवात् । अग्नेः स्फुलिङ्गः कणो वा न भवति । वेति पदान्तरे । यतो यस्मादिदं गहनं वनमभिवृष्टं मेघसिक्तम् । तस्मान्नेति सम्बन्धः । एवं सन्दिह्य निश्चिनोति—**अये** इत्यादि । अये इत्यामन्त्रणे । रक्ताशोकप्रसवसमरागो रक्ताशोकस्य प्रसवेन कुसुमेन समो रागो रक्तिमा यस्य स तथोक्तः । अयं पुरोवर्ती मणिः पद्मरागः । उत्प्रेक्षयाऽपि तदेव प्रकटयति—पूषा सूर्य आलम्बितकरः सन् यं मणिमुद्धर्तुमाहर्तुं व्यवसित इव उद्युक्त इव ॥६२॥

---

१. परिक्रम्यावलोक्य.च—सा. प. २. मृगस्य—कु. गि.

पणइणिबद्धासाअओ,
बाह्राउलणिअणअणओ ।
गअवइ गह्णे दूह्अिओ
परिभमइ क्खामिअवअणओ ॥६२॥

[प्रणयिनीबद्धास्वादो[1]
बाष्पाकुलनिजनयनः ।
गजपतिर्गहने दुःखितः
परिभ्रमति क्षामितवदनः ॥६२॥]

(*द्विपदिकयोपसृत्य गृहीत्वात्मगतम्*)

मन्दारपुष्पैरधिवासितायां
यस्याः शिखायामयमर्पणीयः ।
सैव प्रिया संप्रति दुर्लभा मे
मैवैनमश्रूपहृतं करोमि ॥६३॥
(*इत्युत्सृजति*)

(नेपथ्ये)

वत्स, गृह्यतां गृह्यताम् ।
सङ्गमनीयो मणिरिह शैलसुताचरणरागयोनिरयम् ।
आवहति धार्यमाणः सङ्गममाशु प्रियजनेन ॥६४॥

---

**प्रकाशिका**

गजान्यापदेशेन पुनराह—पणइणीति । प्रणयिनीबद्धास्वादो बाष्पाकुलनिजनयनः । गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदनः ॥ प्रणयिनीबद्धा-

---

१. बद्धाशाको—सा. ए.

## प्रकाशिका

सादित इति वा । प्रणयिन्यावबद्धः अर्थात् स्वविरहेणात एवासमन्तात् सादितः कृशीकृत इत्यर्थः । प्रणयिनीबद्धाशाक इति वा । प्रणयिन्यां बद्धा आशा येन । समासान्ते कः । क्षामितवदनो म्लानीभूतास्यः । 'वासिअवअणसो' इत्यपि क्वचित् पाठः । तत्र प्रसारितवदन इत्यर्थः । वासिअ इति प्रसारिते देशी ॥ ६२॥

**मन्दारेति** । मन्दारपुष्पैस्तदाख्यकल्पपादपप्रसूनैरधिवासितायां सुगन्धीकृतायाम् । अश्रूपहृतं बाष्पदूषितम् ॥६३॥

**सङ्गमनीय इति** । सङ्गमनीयनामा । आवहति करोति ॥६४॥

## काणेश्वरी

**पणइणीति** । प्रणयिनीबद्धास्वादो बाष्पाकुलनिजनयनो गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदन इति । पुरूरवस एव गजव्याजादवस्थामाह ॥६२॥

त्यागनिमित्तं चिन्तयति–**मन्दारेति** । यस्याः शिखायां मन्दारपुष्पैः सुरभितायामयं मणिरधिवासनीयः संप्रति सैव मम प्रिया दुर्लभा तथा चानेन किमपीदानीं मम प्रयोजनं नास्ति । किं चान्यस्यापि ममैव वा समयान्तरे तदायं प्रयोजकः स्यात् यदीदानीं मया नोपहन्यत इत्यभिसन्धायाह–**नैवंनमिति** । एनं मणिमश्रूपहृतं न करोमि । एवकारेण सर्वथा तथा कर्तुं नार्हस्युक्तम् । तथा चाग्रे प्रयोजनसंभावनास्य तिष्ठेदिति भावः ॥६३॥

कथं वा गृह्येतेत्यत आह—**सङ्गमनीय** इत्यादि । इह प्रदेशे शैलसुताचरणरागयोनिरयं सङ्गमनीयो मणिस्तिष्ठतीति शेषः । ततः किमत आह—आवहतीति । धार्यमाणोऽयमाशु प्रियजनेन सङ्गममावहति । तथा च त्वं प्रियाविप्रयुक्तस्तवायं धर्तुमर्हतीति भावः ॥६४॥

## कुमारगिरिराजीया

**मन्दारपुष्पैरित्यादि** । स्पष्टोऽर्थः ॥६३॥

अत्र भाविकार्यसूचनात् प्ररोचना नाम सन्ध्यङ्गमुक्तं भवति ।

**सङ्गमनीय इत्यादि** । स्पष्टोऽर्थः ॥६४॥

**राजा**—( [1]ऊर्ध्वमवलोक्य ) को मामनुशास्ति । ( *विलोक्य* ) कथं [2] भगवान् मृगराजधारी । भगवन्, अनुगृहीतोऽहमुनोपदेशेन ।

( *मणिमादाय* )

हंहो सङ्गममणे—

[3]तया वियुक्तस्य निमग्नमध्यया
भविष्यसि त्वं यदि सङ्गमाय मे ।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥६५॥

( *परिक्रम्यावलोक्य च* )

अये, किं नु खलु कुसुमरहितामपि लतामिमां पश्यता मया रतिरुपलभ्यते । अथवा स्थाने मम मनो रमते । इयं हि—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः,
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥६६॥

यावदस्यां प्रियानुकारिण्यां लतायां परिष्वङ्गप्रणयी भवामि ।

---

**प्रकाशिका**

**तया** इति । निमग्नमध्ययातिसूक्ष्मावलग्नया ॥६५॥ **तन्वीति** । चण्डी कोपना । 'चण्डी तु पार्वत्यां हिंस्रकोपनयोषितोः' इति **लोचनः** ॥६६॥

**कोणेश्वरी**

**तयेति** । ईश्वरधृतेन्दुनिदर्शनेन यावज्जीवमनवच्छिन्नधारणमभिप्रेतम् ॥६५॥ प्रीतिनिमित्तमाह—**तन्वीति** । हि यत इमं पादपतितं मामवधूय प्रकुपिता सती सा मत्प्रिया चण्डीव लक्ष्यते । सादृश्ये निबन्धनमाह—**तन्वीति** । मृदुरित्यर्थः । **मेघेति** । मेघजलार्द्रपल्लवतया अश्रुक्षालिताधरेव । स्वसमयविरहाद्

---

१. कर्णं दत्त्वा—सा. ए; कु. गि. २. अये, अनुकम्पते मां कश्चिन्मृगचारी मुनिर्भगवान्—सा. ए. ३. पुनस्तया वेदिवलग्नमध्यया—कु. गि.

लए, [1]पेक्ख विणु हिअएण भमामि
जइ विहिजोएण पुणि तहिं पाविमि[2] ।
ता रण्णे विणु करिमि णिब्भंती
पुण णइ मेल्लइ ताह कअंती ॥६७॥
[लते प्रेक्षस्व विना हृदयेन भ्रमामि
यदि विधियोगेन पुनस्तां प्राप्स्यामि ।
तदारण्येन विना करोमि निर्भ्रान्ति
पुनर्न प्रवेशयामि तां कृतान्ताम् ॥६७॥]

*(इति चर्चरिकयोपसृत्य लतामालिङ्गति । ततस्तदीयस्थानमाक्रम्यैव प्रविष्टोर्वशी)*

राजा–(*निमीलिताक्षः स्पर्शं नाटयित्वा*) अये, उर्वशीगात्रस्पर्शादिव निर्वृतं मे हृदयम् । न पुनरस्ति विश्वासः । कुतः ।

समर्थये यत् प्रथमं प्रियां प्रति,
क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने
करोमि न स्पर्शविभावितप्रियः ॥६८॥

(*शनैरुन्मील्य चक्षुषी*)

कथम् । सत्यमेवोर्वशी । (*इति मूर्च्छितः पतति*)

---

**कोणेश्वरी**

विश्रान्तपुष्पोद्गमा । आभरणैः शून्येव । मधुलिहां शब्दैर्विना चिन्तामौनं स्थितेव । पुष्पविरहेण भ्रमरशून्यतया चिन्तया मौनमागता उर्वशीवेत्यर्थः ॥६६॥

**कुमारगिरिराजीया**

मृगचर्मधारी भगवान् कश्चन मुनिः । अयं नारायण इति संप्रदायः । पुनस्तया वेदिविलग्नमध्ययेति । स्पष्टोऽर्थः ॥६५॥

तन्वीत्यादि । तन्वी पेलवा मेघजलार्द्रपल्लवतया अश्रुभिर्धौताधरेव । स्वकालविरहात् तेषां स्वकीयानां पुष्पाणां कालः प्रादुर्भावसमयस्तस्य विरहो-

---

१. पेक्खे विणु हिअए भावमि—सा. ए. २. पावमि—सा. ए.

कुमारगिरिराजीया

ऽपगमस्तस्माद्धेतोर्विश्रान्तपुष्पोद्गमा विरतपुष्पोदया सती आभरणैः शून्येव। मधुलिहां भ्रमराणां शब्दैर्ध्वनिभिर्विना विनाभूता चिन्तामौनं चिन्तया कृतं मौनमास्थितेव प्राप्तेव। इयं लता पादपतितं मामवधूयाक्षिप्य जातानुतापा सञ्जातपश्चात्तापा चण्डी कोपना सा उर्वशीव लक्ष्यते हि। अत्र कार्यान्वेषणाद् विबोधनं नाम सन्ध्यङ्गमुक्तं भवति ॥६६॥

यावदस्याः प्रियानुकारिण्याः परिष्वंगप्रणयी भवामीति लतामालिङ्गतीत्यत्रालिङ्गनस्य उर्वशीप्राप्तेर्हेतुत्वादादानं नाम सन्ध्यङ्गमुक्तं भवति ॥

प्रकाशिका

लतां प्रत्याह–**लए पेक्खेत्ति**। लते प्रेक्षस्व विना हृदयेन भ्रमामि यदि विधियोगेन पुनस्तां प्राप्स्यामि। तदारण्येन विना करोमि निर्भ्रान्ति पुनर्न प्रवेशयामि तां कृतान्ताम् ॥ 'दाहकअं ती' इति पाठे दाहकृत ताम्। निर्गता भ्रान्तिर्यस्यां क्रियायां यथा स्यात् तथा। तामरण्येन विना करोमि। इदानीं त्वरण्याद् बहिर्निष्कासयामि पुनर्न प्रवेशयामि। कदाप्यरणं नानयामीत्यर्थः। कृतान्तां स्वविरहेण पीडादायिकामित्यर्थः। कृतोऽन्तोऽर्थात् सुखस्य ययेति वा। यद्वा कृतामर्थात् स्वायत्तीकृतां तामुर्वशीं पुनररण्यानीं न प्रवेशयामीत्यर्थः। अथवा पाठान्तरे दाहकृतं विरहजन्यतापजनिकाम्। संयोगे च दाहं कृन्ततीति व्युत्पत्त्या दाहनाशिकामित्यर्थ इनि वा ॥६७॥

कोणेश्वरी

**लए पेक्खेत्ति**। लते प्रेक्षस्व हृदयशून्योऽहं भ्रमामि यदि विधियोगेन पुनस्तां प्राप्नोमि तदा ॥६७॥

कथं न विश्वास इत्यत आह–**समर्थये** इत्यादि। अतः सहसा विलोचने विनिद्रे न करोमि स्पर्शविभावितप्रियः सन्। यतो यत् किंचित् प्रियां प्रति प्रथमं समर्थये तत्प्रेक्षणेनान्यथा प्रवर्तते। तथा चेदानीं निमीलितनयनः स्पर्शसुखं तावदनुभवामि। उन्मीलिते पुनर्नयने एतदपि मम त्यजेदेवेत्यभिप्रायः ॥६८॥

कुमारगिरिराजीया

**समर्थये** इत्यादि। प्रथम पूर्वं प्रियां प्रति उर्वशीमनुसन्धाय यद्रूपं नूपुररवादिकं समर्थये भावयामि। निश्चिनोमीत्यर्थः। तद्रूपादिकं क्षणेन क्षणमात्रेण मे मम अन्यथा अन्यप्रकारेण तडिद्राजहंसरवादिरूपेण परिवर्तते परिवृतिं प्राप्नोतीति यत् ततः कारणात् स्पर्शविभावितप्रियः स्पर्शनाङ्गस्पर्शेन विभाविता निरूपिता प्रिया येन स तथोक्तः। सोऽहं विलोचने नेत्रे सहसा शीघ्रं विनिद्रे उन्मीलिते न करोमि न कुर्वे ॥६८॥

उर्वशी—समस्ससदु, समस्ससदु महाराओ । [समाश्वसितु, समाश्वसितु महाराजः ।]

राजा—(*सञ्ज्ञां लब्ध्वा*) प्रिये, अद्य जीवितम् ।

त्वद्वियोगोद्भवे चण्डि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥६९॥

उर्वशी—मरिसदु, मरिसदु महाराओ । जं मए कोववसं गदाए अवत्थंतरं पाविदो महाराओ । [मर्षयतु मर्षयतु महाराजः । यन्मया कोपवशं गतयावस्थान्तरं प्रापितो महाराजः ।]

राजा—नाहं प्रसादयितव्यस्त्वया । त्वद्दर्शनेन प्रसन्नो मे सबाह्यान्तरात्मा । तत् कथय कथमियन्तं कालं मया विरहिता स्थिताऽसि ।

---

**प्रकाशिका**

उर्वशी—समाश्वसितु, समाश्वसितु महाराजः । उर्वशी—मर्षयतु, मर्षयतु महाराजः । यन्मया कोपवशंगतयावस्थान्तरं प्रापितो महाराजः ॥

**कोणेश्वरी**

अद्य जीवितमित्यनेन किं विशेष्यतेऽत आह—त्वद्वियोगेति । हे चण्डि, त्वद्वियोगोद्भवे तमसि मज्जता मया त्वं दिष्ट्या प्रत्युपलब्धासि । गतासुना चेतनेव । तथा चाद्ययावद् गतासुरेवाहमासमित्यर्थः ॥६९॥

किं मया मर्षणीयमत आह—जं इति । यत् कोपसंगतया मयावस्थान्तरं प्रापितो महाराजः । कोपवशया मया तथा कृतमिति तथा न ममापराध इति भावः । इयन्तं कालमिति किमुच्यते क्षणमात्रमिव मयि प्रतिभातीत्युर्वशीवचनमाशङ्क्य समयाधिक्यबोधनायाह—

**कुमारगिरिराजीया**

त्वद्वियोगेत्यादि । स्पष्टोऽर्थः । कथयिष्यामीममर्थं वचनार्थम् । यन् मया कोपवशंगतया इदमवस्थान्तरमुपपादितं महाराजस्य । अत्र विरोधस्य शमनात् शक्तिर्नाम सन्ध्यङ्गमुक्तं भवति ॥

(अनन्तरे चर्चरी)

मोरा परहुअ हंस रहंगम
अलि गअ पव्वअ सरिअ कुरंगम
तुज्झह कारणे रण्ण भमंते
को ण हु पुच्छिअ मइं रोअंते ॥७०॥
[मयूरः परभृतो हंसो रथाङ्गः,
अलिर्गजः पर्वतः सरित् कुरङ्गमः ।
तव कारणेनारण्ये भ्रमता
को नु खलु पृष्टो मया रुदता ॥७०॥]

**उर्वशी**-अंतक्करणपच्चक्खीकिदवुत्तंतो महाराओ। [अन्तःकरण-प्रत्यक्षीकृतवृत्तान्तो महाराजः । ]

**राजा**-प्रिये, अन्तःकरणमिति न खल्ववगच्छामि ।

**उर्वशी**-सुणादु महाराओ । पुरा भअवदा महासेणेण सासदं कुमारव्वदं गेण्हिअ 'अकलुसो णाम गंधमादणकच्छो अज्झासिदो । किदा अ त्थिदी[२] । [शृणोतु महाराजः । पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः । कृता च स्थितिः ।

**राजा**-कीदृशी ।

---

**प्रकाशिका**

मिलितामुर्वशीं प्रत्याह-**मोरा परहुअ** इति । मयूरः परभृद्धंसो रथाङ्गोऽलिर्गजः पर्वतः सरित् कुरङ्गः । तव कारणेनारण्ये भ्रमता को न खलु पृष्टो मया रुदता ॥ 'हंस विहंगम' इति पाठे हंसः कलहंसः । विहंगश्चक्रवाक इत्यर्थः ॥७०॥

**उर्वशी**—अन्तःकरणप्रत्यक्षीकृतवृत्तान्तो महाराजः ।

**उर्वशी**—शृणोतु महाराजः । पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं

---

१. अअं-सा. ए. २. विही-कु. गि.

**उर्वशी**—जा किल इत्थिआ इमं पदेसं आगमिस्सदि सा लदाभावेण परिणदा भविस्सदि। [1]किदो अ सावांतो गोरीचरणराअसंभवं मणिं वज्जिअ लदाभावं ण मुंचिस्सदि त्ति। तदो अहं गुरुसावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्मकाजणपरिहरणीअं कुमारवणं पविट्ठा। पवेसाणंतरं अ [2]काणणोवंतवत्तिलदाभावेण परिणदं मे रूवं। [या किल स्त्री इमं प्रदेशमागमिष्यति सा लताभावेन परिणता भविष्यति। कृतश्च शापान्तो गौरीचरणरागसम्भवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति। ततोऽहं गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम्।]

**राजा**—प्रिये, सर्वमुपपन्नम्।

रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम्।
सा त्वमिहैतदवस्थं कथं सहेथाश्चिरवियोगम् ॥७१॥

इदं चैतद्यथाकथितं सङ्गमनिमित्तं पुनरुपलब्धप्रभावमासादितमस्माभिः।

(*इति मणिं दर्शयति*)

**उर्वशी**—कधं, संगमणीओ अअं मणी। अदो एव्व महाराएण [3]आलिंगिदा ज्जेव एदंवत्थम्हि संवुत्ता [कथं, संगमनीयोऽयं मणिः। अत एव महाराजेनालिङ्गितैवैतदवस्थास्मि संवृत्ता।]

---

**प्रकाशिका**

गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः। 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' इति त्रिकाण्डी (२.१.११)। कृता च स्थितिः। स्थितिर्मर्यादा।

---

१. किदो सावांतो om.—सा. ए. को. २. वासंतीलदा संवुत्ता—कु. गि.
३. आलिंगिदमेत्त एव्व पकिदित्थ—सा. ए.

**कोणेश्वरी**

**मोरा** इति । मयूरः परभृतो हंसो रथाङ्गः, अलिर्गजः पर्वतः सरित् कुरङ्गमः । तथा च यावता समयेन एतेषां नानास्थानस्थितानामुपगमः प्रश्नश्च संभवति तावान् समयस्त्वं मद्विश्लिष्टा स्थितासीत्यभिप्रायः ॥७०॥

**पुरा** इत्यादि । पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अयमकलुषो नाम गन्धमादनकक्षोऽध्यासितः । कृता च स्थितिः ॥

**कुमारगिरिराजीया**

कुमारव्रतं ब्रह्मचर्यव्रतम् । कृतश्चैष विधिः । विधिर्नियमः ॥

**प्रकाशिका**

या किल स्त्री इमं प्रदेशमागमिष्यति सा लताभावेन परिणता भविष्यति । कृतश्च शापान्तो गौरीचरणरागसम्भवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति । ततोऽहं गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम् ।

रतिखेदेति । रतिखेदेन मैथुनजनितश्रमेण । एदवस्थमेवंप्रकारकम् । अनिर्वचनीयदशमिति यावत् ॥७१॥

उर्वशी—कथं संगमनीयोऽयं मणिः । अत एव महाराजेनालिङ्गितैवैतद-वस्थास्मि संवृत्ता ॥

**कोणेश्वरी**

या किल स्त्री इमं प्रदेशं समागमिष्यति सा लताभावेन परिणता भविष्यति । गौरीचरणरागसम्भवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति । ततोऽहं गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा । प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम् ।

**रतीत्यादि** । या त्वं रतिखेदसुप्तमति मां प्रवासगतं मन्यसे सा इह एतदवस्थं चिरवियोगं कथं सहेथाः । अपि तु सोढुं न त्वं क्षमेति भावः ॥७१॥ **कथमित्यादि** । अम्हो इत्याश्चर्ये । संगमनीयोऽयं मणिरत एव महाराजेना-लिङ्गितमात्रा एतदवस्थास्मि संवृत्ता ॥

**कुमारगिरिराजीया**

**वासन्तीलता संवृत्तास्मि** । अनेन निर्वेदया आत्मनो लताभावकथनं राज्ञा कृतस्य अभ्यन्तरकरणाया मम इति न खलु ते वचनार्थमवैमि इत्यस्य प्रश्नस्यो-त्तरमिति मन्तव्यम् । **रतिखेदेत्यादि** । स्पष्टोऽर्थः ॥७१॥

**राजा**– *(ललाटे मणिं संनिवेश्य)*

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य ।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य ।। ७२।।

**उर्वशी**–पिअंवद, महंतो क्खु कालो अम्हाणं पइट्ठाणादो णिग्गदाणं । कदाइ असूइस्संति पकिदीओ अम्हाणं । ता एहि । गच्छम्ह । [प्रियंवद, महान् खलु काल आवयोः प्रतिष्ठानान्निर्गतयोः । कदाचिदसूयिष्यन्ति प्रकृतय आवाम् । तदेहि, गच्छाव ।]

**राजा**–यदाह भवती ।

*(इत्युत्तिष्ठतः)*

---

**प्रकाशिका**

उर्वशी–प्रियंवद, महान् खलु काल आवयोः प्रतिष्ठानान्निर्गतयोः । कदाचिदसूयिष्यन्ति प्रकृतय आवाम् । तदेहि । गच्छाव । प्रतिष्ठानादिति प्रयागपूर्वतीरस्थित 'झूंसी' सञ्ज्ञकात् स्वनगरात् ।।

**कोणेश्वरी**

स्फुरतेत्यादि । ललाटनिहितस्य मणेः स्फुरता रागेण विच्छुरितमिदं मुखं बालातपरक्तकमलस्य श्रियमुद्वहति । तथा च मणिसमवधानेन एतन्मुखमतीव रमणीयं मां प्रति भातीति भावः ।।७२।।

पिअंवद इति । प्रियंवद, महान् खलु काल आवयोः प्रतिष्ठानान् निर्गतयोः । यात इति शेषः । कदाचिदसूयिष्यन्ति प्रकृतय आवयोः । तस्मादेहि गच्छाव ।

**कुमारगिरिराजीया**

स्फुरता विच्छुरितमित्यादि । स्पष्टोऽर्थः ।।७२।।

उर्वशी—अध कधं महाराओ गंतुं इच्छदि। [अथ कथं महाराजो गन्तुमिच्छति ।]

राजा—

अचिरप्रभाविलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमने विमानतां
नय मां नवेन वसतिं पयोमुचा ॥७३॥

(चर्चरी)

पाविअसहअरिसंगमओ,
पुलअपसाहिअअंगओ ।
सेच्छापत्तविमाणओ,
विहरइ हंसजुआणओ ॥७४॥
[प्राप्तसहचरीसङ्गमः,
पुलकप्रसाधिताङ्गः ।
स्वेच्छाप्राप्तविमानो
विहरति हंसयुवा ॥७४॥]

(*इति खण्डधारया निष्क्रान्तौ*)

इति महाकविकालिदासविरचिते विक्रमोर्वशीये चतुर्थोऽङ्कः ।

---

**प्रकाशिका**

**उर्वशी**—अथ कथं महाराजो गन्तुमिच्छति ।

**अचिरप्रभे**ति । हे सलीलगमने, अचिरप्रभा विद्युत्, तद्विलसितैः केतुमता । सुरकार्मुकमेवाभिनवं नूतनं चित्रमालेख्यं तेन शोभमानेन । 'आलेख्याश्चर्ययोश्चित्रम्' इति **त्रिकाण्डी** (३-३-१७८) । विमानत्वं प्रापितेन । स्वभावेनेति शेषः । नूतनेन मेघेन मां गृहं प्रापय ॥७३॥

हंसान्यापदेशेनाह—**पाविअ** इति । प्राप्तसहचरीसङ्गमः पुलकितप्रसाधिताङ्गः । स्वेच्छाप्राप्तविमानो विहरति हंसयुवा ॥ प्रसाधितं भूषितम् । स्वेच्छ-

## प्रकाशिका

यैव प्राप्तं विमानं यानं येन । स्वेच्छया विहरतीत्यर्थः यद्वा स्वेच्छया ईश्वरे-च्छया प्राप्तो विशिष्टो मानः प्रियासङ्गालिङ्गनादिजन्य उत्कर्षो येन । पक्षे अभिलाषोपनीतव्योमयानः ॥७४॥

**खण्डधारयेति** । खण्डधाराख्यां गीतिमुक्त्वा निष्क्रान्तावित्यर्थः । तल्ल-क्षणं च पूर्वमुक्तम् ।

विवृतिर्विक्रमोर्वश्याश्चतुर्थाऽङ्के यथामति ।
निर्मिता रङ्गनाथेन सद्भिः संशोध्यतामियम् ॥

इति श्रीमच्छिम्बेकरमौनिकुलमौलिमण्डनरङ्गनाथदीक्षितकुक्षिजश्रीबालकृष्ण-तनूजनिरङ्गनाथनिर्मितायां **विक्रमोर्वशीप्रकाशिकायां** चतुर्थाङ्कोन्मेषः ॥

## कोणेश्वरी

**अथेति** । अथ कथं महाराजो गन्तुमिच्छति । केन वाहनेनेत्यर्थः । उत्तरम् **अचिरेति** । नवेन पयोमुचा विमानतां गमितेन अचिरप्रभाविलसितैः पताकिना सुरकार्मुकाभिनवचित्रशोभिना हे खेलगमने मां वसतिं नय । तथा च त्वमिन्द्रप्रिया पुरासीस्तदा तत्समाजे यथा त्वमयासीस्तथा । तद्विमानेनैव चेत् सुलभाजेन (?) मां नयसि तदद्य ममेन्द्रता प्रत्यक्षैव भवतीति भावः ॥७३॥

**पाविअसह** इति । प्राप्तसहचरीसङ्गमः पुलकप्रसाधिताङ्गः । स्वेच्छा-प्राप्तविमानो विहरति हंसयुवा ॥ एवंभूतो महाराजो नगरं प्रति प्रस्थित इत्यर्थः ॥७४॥

इति महामहोपाध्यायश्रीकोणेश्वरविरचिते **विक्रमोर्वशीयत्रोटकविवेके** चतुर्थोऽङ्कः समाप्तः ॥

## कुमारगिरिराजीया

**अचिरप्रभेत्यादि** । अचिरप्रभाविलसितैर्विद्युद्विलसितैः पताकिना पताकावता । व्रीह्यादित्वादिनिः । सुरकार्मुकाभिनवचित्रशोभिना । सुरकार्मुकं शक्रधनुः । अभिनवं नूतनं चित्रमालेख्यं तेन शोभते इति स तथोक्तः । तेन खेलगमने अञ्चितगमने विमानतां गमितेन नवेन नूतनेन पयोमुचा मेघेन वसति-मावासम् । प्रतिष्ठाननगरमित्यर्थः । मां नय प्रापय ॥७३॥

इति श्रीकाटयवेमभूपविरचिते **कुमारगिरिराजीये विक्रमोर्वशीयव्याख्याने** चतुर्थोऽङ्कः ॥

## पञ्चमोऽङ्कः

*(ततः प्रविशति हृष्टो विदूषकः)*

विदूषकः—ही ही भो, दिट्ठिआ चिरस्स कालस्स उव्वसीसहाओ तत्थभवं राआ णंदणवणप्पमुहेसु पदेसेसु विहरिअ पडिणिवुत्तो । पविसिअ णअरं दाणीं सकज्जाणुसासणेण पइदिमण्डलं अणुरज्जंतो रज्जं करेदि । असंताणत्तणं वज्जिअ से ण किंवि सोअणीअं । अज्ज तिहिविसेसो त्ति भअवदीणं गंगाजमुणाणं संगमे देवीए सह किदाहिसेओ संपदं उवआरिअं उवविट्ठो । ता जाव अलंकरणीअमाणस्स [1]अंगाणुलेवणमल्लभाई [2]भादुओ विअ होमि । *(इति परिक्रामति)*

[ही ही भोः, दिष्टया चिरस्य कालस्योर्वशीसहायस्तत्रभवान् राजा नन्दनवनप्रमुखेषु प्रदेशेषु विहृत्य प्रतिनिवृत्तः । प्रविश्य नगरमिदानीं स्वकार्यानुशासनेन प्रकृतिमण्डलमनुरञ्जयन् राज्यं करोति । असन्तानत्वं वर्जयित्वास्य न किमपि शोचनीयम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सङ्गमे देव्या सह कृताभिषेकः सांप्रतमुपकार्यामुपविष्टः । तद्यावदलंक्रियमाणस्याङ्गानुलेपनमाल्यभागी भ्रातेव भवामि ।]

*(नेपथ्ये)*

हद्धी, हद्धी । एसो [2]तालविंतपिधाणं णिक्खिविअ णीअमाणो अच्छराविरहिदेण[3] मोलिरअणदाए योइदो मणी आमिससंकिणा गिद्धेण आक्खित्तो ।

---

१. अणुलेवणमल्ले—सा. ए. २. अग्गभाई—सा. ए. । २. दुऊलुत्तरच्छदे तालवेंटपिहाणे—सा. ए. ३. अच्छराबिलासवदीए मोलिरअणो—सा. ए.

[हा धिक्, हा धिक्। एष तालवृन्तपिधानं निक्षिप्य नीयमानोऽप्सरोविरहितेन मौलिरत्नतायां योजितो मणि-रामिषशङ्किना गृध्रेणाक्षिप्तः।]

---

### प्रकाशिका

इदानीं विदूषकमुखेनाग्रिमकथोपक्षेपार्थं तत्प्रवेशमाह तत इति। उर्वशी-सहितराजागमनतो हृष्टः। विदूषकः--'ही ही भोः' इत्याश्चर्ये। दिष्ट्या चिरस्य कालात्। चिरम्येत्यव्ययम्। उर्वशीसहायस्तत्रभवान् राजा नन्दनवनप्रमुखेषु प्रदेशेषु विहृत्य प्रतिनिवृत्तः। प्रविश्य नगरमिदानीं स्वकार्यानुशासनेन प्रकृति-मण्डलमनुरञ्जयन् राज्यं करोति। असन्तानत्वं वर्जयित्वाऽस्य न किमपि शोचनी-यम्। अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सङ्गमे देव्या सह कृताभिषेकः सांप्रतमुपकार्यामुपविष्टः। 'अलंकृत मुपविष्टः' इत्यपि पाठः। तद् यावदलंक्रिय-माणस्याङ्गानुलेपनमाल्यभागी भ्रातेव भवामि। तिथिविशेषो माघ्यादिः। कृताभिषेको विहितस्नानः। उपकार्यामिति सप्तम्यर्थे। 'प्राकृते लिङ्गवचनम-तन्त्रम्' इत्यभियुक्तोक्तेः। 'उवआरिअं पविट्ठो' इति पाठे तु युक्त एवार्थः। 'उपकार्योपकारिका' इति त्रिकाण्डी (२-२-१०)॥

नेपथ्ये इति। चूलिकार्थसूचनाच् चूलिकेयम्। तल्लक्षणमुक्तं प्राक्। हा धिक् हा धिक्। एष तालवृन्तपिधानं निक्षिप्य नीयमानोऽप्सरोविरहितेन, अर्थाद् भर्त्रा, मौलिरत्नतायां योजितो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः। 'व्यजनं तालवृन्तकम्' इति त्रिकाण्डी (२-६-१४०)॥

### कौमेश्वरी

ही हीति वैदूषके हर्षे। हर्षहेतुमाह--दिट्ठिआ इति। दिष्ट्या चिरस्य कालस्य उर्वशीसहायस्तत्रभवान् राजा नन्दनवनप्रमुखेषु प्रदेशेषु विहारं विधाय प्रतिनिवृत्तो नगरमिदानीं स्वकार्यार्थशासने प्रकृतिमण्डलमनुरञ्जयन् राज्यं करोति। अः सन्तानकं वर्जयित्वा नास्य किमपि शोचनीयं सांप्रतं वर्तत इति शेषः। अद्य च तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः संगमे देव्या सह कृताभि-षेकः साम्प्रतमुपकारिकां प्रविष्टः। तद् यावदलंक्रियमाणस्यास्यानुलेपनमाल्य-भागी अन्तरा भवामि। प्राकृते पूर्वनिपातानियमात् माल्यानुलेपनभागीति बोद्धव्यम्। एसो इत्यादि। आन्तरस्थजलाभ्रतालवृन्तपिधाने निक्षिप्य नीयमानोऽ-प्सरोविरहितेन मौलिरत्नतया प्रयोजितो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः। यद्वा जलान्तरस्थ एव देवे तालवृन्त इत्यादि जलान्तरस्थदेवेति पाठे॥

**विदूषकः**–(*आकर्ण्य*) अच्चाहिदं अच्चाहिदं । परमबहुमदो क्खु [1]तव वअस्स संगमणीओ णाम चूडामणी । अदो क्खु असमत्तणेवत्थो एव्व तत्थभवं आसणादो उट्ठिदो । ता पासपरिवत्ती होमि । (*इति निष्क्रान्तः*)

[अत्याहितमत्याहितम् । परमबहुमतः खलु तव वयस्य संगमनीयो नाम चूडामणिः । अतः खल्वसमाप्तनेपथ्य एव तत्रभवानासनत उत्थितः । तत् पार्श्वपरिवर्ती भवामि ।]

(*प्रवेशकः*)

---

**कुमारगिरिराजीया**

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—ततः प्रविशतीत्यादि । तालवृन्ताधारे पटलिकाविशेषे ॥

**प्रकाशिका**

**विदूषकः**—अत्याहितमत्याहितम् । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इति **त्रिकाण्डी** (३-३-७७) । परमबहुमतः खलु तव वयस्य संगमनीयो नाम चूडामणिः । अतः खल्वसमाप्तनेपथ्य एव तत्रभवानासनत उत्थितः । तत्पार्श्वपरिवर्ती भवामि । प्रवेशकलक्षणमुक्तं प्राक् ॥

**कोणेश्वरी**

**अच्चाहिदमिति** । अत्याहितम्, अत्याहितम् । कुत इत्याह । परमबहुमतः खलु वयस्यस्य संगमनीयो नाम चूडामणिरतः खलु असमाप्तनेपथ्य एव तत्रभवानासनादुत्थितः । तस्मात् पार्श्वपरिवर्ती भवामि । नायमवसरो राज्ञः समीपमुपगन्तुमिति भावः । 'एवार्थो जेव्व' (प्रा. प्र. २६) इत्येवकारार्थो ज्जेवेति निपातः । **प्रवेशकेति** । शौरसेन्यादिवाण्या हीनपात्रद्वयकृतः समालाप इत्यर्थः । यद्यपि तथाविधस्य विदूषकातिरिक्तस्य पात्रस्य न प्रवेश इहोक्तस्तथापि नेपथ्यस्थापरपात्रालापादेव प्रवेशकनिर्वाहात् ॥

**कुमारगिरिराजीया** No commentary

---

१. सो वअस्सस्स–सा. ए.

(ततः प्रविशति राजा सूतश्च [1]कञ्चुकिरेचकौ परिजनश्च)

राजा—वेधक, वेधक[2]

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत् प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥१॥

किरातः—एसो अग्गमुहलग्गहेमसुत्तेण मणिणा अणुरज्जअंतो विअ आआसं भमदि । [एषोऽग्रमुखलग्नहेमसूत्रेण मणिनानुरञ्जयन्निवाकाशं भ्रमति ।]

प्रकाशिका

वेधक इति किरातनाम । क्वचिद् रेचक इत्यपि । आत्मनो वधमाहर्तेति । स्ववधकर्ता । तत् प्रथममाद्यम् । गोप्तुः पालकस्य ॥१॥

किरातः—एषोऽग्रमुखलग्नहेमसूत्रेण मणिनानुरञ्जयन्निवाकाशं भ्रमति । 'मुखकोटिलग्न' इत्यपि पाठः । अग्रमुखेत्यत्र मुखाग्रमिति पूर्वनिपातानियमाज् ज्ञेयम् ॥

कोणेश्वरी

कञ्चुकिरेचकौ इति । कञ्चुकी महल्लकः । तदुक्तम् । 'महल्लकाः कञ्चुकिनः सौविदल्लाः सौविदाश्च ते ।' (अमर. २-८-८) ।

आत्मन इति । असौ प्रस्तुतो विहगः सन् तस्कर आत्मवधसमुद्यतः क्व गत इति शेषः । येन गोप्तुरेव गेहे तत्प्रथमं स्तेयं कृतम् । एतावता सर्वथा शासनार्ह इति भावः ॥१॥

कथयति—एसो इति । मुखाग्रैकदेशे लग्नसूत्रेण मणिना अयं रञ्जन्निवाकाशं परिभ्रमति ॥

कुमारगिरिराजीया

आत्मनो वधमित्यादि । स्पष्टोऽर्थः ॥१॥

---

१. कञ्चुकिरेचकौ—सा. ए. २. रेचक—सा. ए.

राजा—पश्याम्येनम् ।

असौ मुखालम्बितहेमसूत्रं
बिभ्रन् मणिं मण्डलशीघ्रचारः ।
अलातचक्रप्रतिमं विहङ्गस्
तद्रागरेखावलयं करोति ॥२॥
कथय । किं खल्वत्र कर्तव्यम् ।

---

### प्रकाशिका

असाविति । मण्डलैस्तदाकारभ्रमणैः शीघ्रं चारो गतिर्यस्य । अलातं ज्वलत्काष्ठं तस्य चक्रम् । तत्प्रतिमं तत्सदृशम् । तस्य मणे रागलेखा तस्या वलयं मण्डलम् ॥२॥

### कोणेश्वरी

असावित्यादि । मुखालम्बितहेमसूत्रं मणिं बिभ्रत् मण्डितशीघ्रचारोऽसौ विहङ्गस्तद्रागलेखावलयमलातचक्रप्रतिमं तनोति । उल्मुकचक्रवत् तदीयरागराज्या वलयं विधत्त इत्यर्थः ॥२॥

कथमिति । तत् खलु कथं कर्तव्यम् । तस्करत्वादयं शासनोचितः, तिर्यक्त्वेन ज्ञानदुर्बलतया न शासनयोग्य इत्यत्र विप्रतिषेधे किं कर्तव्यमर्हतीत्यर्थः । अत एवाग्रे समुचितं विदूषकोत्तरमलमित्यादि ॥

### कुमारगिरिराजीया

असावित्यादि । असौ विहङ्गः पक्षी मुखालम्बितहेमसूत्रं मुखेनालम्बितं गृहीतं हेमसूत्रं यस्य स तथोक्तस्तं मणिं बिभ्रत् । मण्डलचारशीघ्रो मण्डलाकारसंचारत्वरितः सन् तद्रागरेखावलयं तस्य मणे रागस्य प्रभाया लेखा राजिस्तस्या वलयं मण्डलमलातचक्रप्रतिममुल्मुकवलयसदृशं तथा यथा तनोति विधत्ते ॥२॥

**विदूषकः**–(*उपेत्य*) भो, अलं एत्थ घिणाए। अवराही सासणीओ। [भोः, अलमत्र घृणया। अपराधी शासनीयः।]

**राजा**–सम्यगाह भवान्। धनुर्धनुस्तावत्।

**परिजनः**–जं भट्टा आणवेदि। [यद् भर्ता आज्ञापयति।]

(*इति निष्क्रान्तः*)

**राजा**–न दृश्यते विहगाधमः।[1]

**विदूषकः**–इदो इदो दक्खिणंतरेण चलिदो सउणिहदासो। [इत इतो दक्षिणान्तरेण चलितः शकुनिहताशः।]

**राजा**–(*दृष्ट्वा*[2]) इदानीम्[3]—

प्रभापल्लवितेनासौ करोति मणिना खगः।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥३॥

### प्रकाशिका

**विदूषकः**–अलमत्र घृणया। अपराधी शासनीयः। **परिजनः**–यद् भर्ताज्ञापयति। **विदूषकः**–इत इतो दक्षिणान्तरेण चलितः शकुनिहताशः। **प्रभेति**। प्रभया द्युत्या। पल्लवितेन विस्तृतेन ॥३॥

### कोणेश्वरी

अलमत्र इति। अलमत्र घृणया। एषोऽपराधी शासनीयः। अपराधित्वेन शासनीयता न तु सापराधपरत्वेन गौरवादिति भावः। अत एव राजाह—सम्यगित्यादि। इदो इति। इतो दक्षिणान्तरेण चलितः स पुनर्हताश इति।

**प्रभेति**। प्रभापल्लवितेन मणिनासौ अशोकस्तबकेनेव दिङ्मुखावतंसकं करोति। इदानीं तथा प्रतिभासते इत्यर्थः ॥३॥

### कुमारगिरिराजीया

**प्रभापल्लवितेनेत्यादि**। स्पष्टोऽर्थः ॥

---

१. विहंगः—सा. ए. २. परिवृत्य अवलोक्य—सा. ए. ३. दृष्ट इदानीम्—सा. ए.

**यवनी**–(*प्रविश्य धनुर्हस्ता*[1]) भट्टा, [2]एदं ससरं चावं। [भर्तः, इदं सशरं चापम्।]

**राजा**–किमिदानीं धनुषा। बाणपथातीतः क्रव्यभोजनः। तथा हि।

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंपृक्तः[3] ॥४॥

[4]आर्य लातव्य।

[5]**कञ्चुकी**–आज्ञापयतु देवः।

**राजा**–मद्वचनादुच्यन्तां नागरिकाः सायं निवासवृक्षाग्रे[6] विचीयतां विहगाधम इति।

**कञ्चुकी**–यथाज्ञापयति देवः।

(*इति निष्क्रान्तः*)

---

**प्रकाशिका**

**आभातीति**। मणिविशेष उत्कृष्टो मणिः। लोहिताङ्गो मङ्गलः। 'लोहिताङ्गो महीसुतः' इति **त्रिकाण्डी** (१-२-२६)। परुषघनच्छेदः परिणत-मेघखण्डः ॥४॥

लातव्य इति कञ्चुकिनाम। तल्लक्षणमुक्तं प्राक् ॥

**कोणेश्वरी**

**आभातीत्यादि**। नूनमुत्प्रेक्षायाम्। पतत्रिणा नीतो मणिविशेष इदानीं छिन्नपरुषघनसंपृक्तो नक्तं लोहिताङ्ग इवाभाति। यथा प्रथमं मेघखण्डसमी-पस्थो दृश्यमानो मङ्गलो मेघच्छन्नोऽदृश्यो भवति तथा पतत्रिणाऽसौ मणिरप्य-दृश्यः कृत इत्यर्थः ॥४॥

**कुमारगिरिराजीया**

**आभातीत्यादि**। लोहिताङ्गो भौमः ॥४॥

**विहगाधमः** शकुनिहतकः ॥

---

१. चापहस्ता–सा. ए. २. एदं हत्थावावसहिदं सरासणं–सा. ए. ३. संयुक्तः–सा. ए. ४. कञ्चुकिनं विलोक्य–सा. ए ५. om.–सा. ए. ६. निवासवृक्षाश्रयी–सा. ए.

**विदूषकः**-भो, विसमीअदु[1] भवं संपदं। कहिं गदो सो रअण-कुंभीलओ भवदो सासणादो मुच्चिस्सदि। [भोः, विश्राम्यतु भवान् सांप्रतम्। कुत्र गतः स रत्नकुम्भीरको भवतः शासनान् मोक्ष्यते।]

(*इत्युपविशतः*[2])

**राजा**-वयस्य,[3]

रत्नमिति न मे तस्मिन् मणौ प्रयासो[4] विहंगमोत्क्षिप्ते।
प्रियया तेनास्मि सखे संगमनीयेन संगमितः ॥५॥

### प्रकाशिका

**विदूषकः**—भोः, विश्राम्यतु भवान् सांप्रतम्। कुत्र गतः स रत्नकुम्भीरको भवतः शासनान् मोक्ष्यते। 'कुम्भीरको गण्डगदस्तस्करश्च मलिम्लुचः' इति **कोषः**। **रत्नमिति**। विहंगमेन पक्षिणोत्क्षिप्ते नीते। संगमनीयेन तन्नाम्ना। सङ्गमितः सङ्गं प्रापितः ॥

### कोणेश्वरी

**विसेत्यादि**—विश्राम्यतां भवान् सांप्रतम्। कुत्रापि गतो मणिकुम्भीलको भवतः शासनान्मोक्ष्यत इति। मणिमिति शेषः। सार इति। तस्मिन् विहंगाक्षिप्ते सार इति कृत्वा न प्रयासः। तर्हि कथं प्रयास इत्यत आह—**प्रियये**ति। हे सखे, तेन सङ्गमनीयेन सङ्गमितः ॥५॥

### कुमारगिरिराजीया

उपविशतु भवान् साम्प्रतम्। कुत्र गच्छति स रत्नकुम्भीलकः। भवतः शासनान् न मुच्यते।

**रत्नमित्यादि**। स्पष्टोऽर्थः ॥५॥

१. उवविसदु—सा. ए. २. विदूषकेण—सहोपविश्य—सा. ए. ३. om. सा. ए. ४. प्रियत्वं विहंगमाक्षिप्ते—सा. ए.

(*ततः प्रविशति सशरं मणिमादाय कञ्चुकी*)

**कञ्चुकी**–जयतु जयतु देवः ।

अनेन निर्भिन्नतनुः स वध्यो
रोषेण[1] ते मार्गणतां गतेन ।
प्राप्यापराधोचितमन्तरिक्षात्
समौलिरत्नः पतितः पतत्री ॥६॥

(*सर्वे विस्मयं रूपयन्ति*)

**कञ्चुकी**–अभि[2]प्रक्षालितोऽयं मणिः कस्मै प्रदीयताम् ।

**राजा**–वेधक,[3] गच्छ । कोषपेट्टके स्थापयैनम् ।

[4]**किरातः**–जं भट्टा आणवेदि । [यद् भर्ताज्ञापयति ।]

(*इति मणिमादाय गच्छति*)

**राजा**–(*लातव्यं प्रति*), आर्य, जानाति भवान् कस्यायं बाण इति ।

**कञ्चुकी**–नामाङ्कितो दृश्यते । नात्र मे वर्णविभावसहा दृष्टिः ।

**राजा**–तदुपश्लेषय[5] शरं यावन्निरूपयामि ।[6]

**विदूषकः**–किं भवं विआरेदि । [किं भवान् विचारयति ।]

**राजा**–शृणु तावत् प्रहर्तुर्नामाक्षराणि ।

[7]**विदूषकः**–अवहिदो म्हि । [अवहितोऽस्मि ।]

**राजा**–(*वाचयति*)

उर्वशीसम्भवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः संहर्ता[8] द्विषदायुषाम् ॥७॥

---

१. बलेन–कु. गि. २. अद्भिः–सा ए. ३. किराति, अग्निशुद्धमेनं कृत्वा पेटकं प्रवेशय–सा. ए ४ किराती–सा. ए. ५. तेन ह्युपनय–सा. ए. ६. कञ्चुकी तथा करोति, राजा नामाक्षराण्यनुवाच्य सापत्यतां निरूपयति । कञ्चुकी–यावन्नियोगमशून्यं करोमि । इति निष्क्रान्तः–सा. ए. ७. om.–सा. ए. ८. प्रहर्तुः–सा. ए. संहर्तुः–कु. गि.

**विदूषकः**—(*सपरितोषम्*) दिट्ठिआ संताणेण वड्ढदि महाराओ[1]।
[दिष्टया सन्तानेन वर्धते महाराजः।]

**राजा**—सखे, कथमेतत्। [2]अनिमिष्याविमुक्तोऽहमुर्वश्या। न कदाचिदपि तत्रभवती गर्भाविर्भूतदोहदाऽप्युपलक्षिता। कुत एव प्रसूतिः। किं तु-

### प्रकाशिका

**अनेनेति**। निर्भिन्नतनुर्विदारितशरीरः। वधमर्हतीति तादृशः। मार्गणतां गतेन रोपेण बाणभावं प्राप्तेन क्रोधेन। अपराधस्योचितं योग्यं शासनमित्यर्थात्॥६॥

कोषपेट्टके भाण्डागारान्तर्वर्तिनि वंशादिरचितपेटिकाख्यपात्रे। किरातः—यद् भर्ताज्ञापयति। उपश्लेषयान्तिके समानय। यावद्योगेन निरूपयामीति भविष्यदर्थः। **विदूषकः**—किं भवान् विचारयति। **विदूषकः**—अवहितोऽस्मि।

**उर्वशीसम्भवस्येति**। ऐलसूनोः पुरूरवसः सूनोः पुत्रस्य। आयुर्नामकस्य कुमारस्य। शत्रूणामायुषां द्विषज्जीवितानाम्॥७॥

**विदूषकः**—दिष्टया सन्तानेन वर्धते महाराजः। दिष्टया इत्यानन्दने इति सागरः। अनिमिषी देववनिता। 'अन्यत्र नैमिषेयसत्रात्' इत्यपि क्वचित् पाठः। 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इति विश्वकोषः (१००-३९)॥

### कोणेश्वरी

Folio missing

### कुमारगिरिराजीया

**अनेनेत्यादि**। वध्यः स पतत्री पक्षी मार्गणतां बाणत्वं गतेनानेन ते बलेन सामर्थ्येन। 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' (अमर ३.३.१९५)। निर्भिन्नतनुर्विद्धदेहः। अपराधोचितमपराधस्योचितमर्हम्। मरणमित्यर्थः। प्राप्य समौलिरत्नो मौलिरत्नसहितोऽन्तरिक्षात् पतितः॥६॥

**उर्वशीसम्भवस्येति**। उर्वशीसंभवस्योर्वशीजातस्य। ऐलसूनोरिलाया अपत्यमैलः पुरूरवास्तस्य सूनोः पुत्रस्य। धनुर्भृतो धानुष्कस्य। द्विषदायुषां संहर्तुरायुष आयुःसंज्ञकस्य कुमारस्यायं बाणः॥७॥

---

१. भर्ता—सा. ए. २. अन्यत्र नैमिषीयसत्राद्वियुक्तोऽहमुर्वश्या। न च मया गर्भव्यतिकरो लक्षितः—सा. ए.

आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
[1]कतिचिदहानि शरीरं श्लथवलयमिवाभवत्तस्याः॥८॥

**विदूषकः**—मा भवं [2]माणुसीधम्मं दिव्वाए ताए संभावेदु । पभावगूढाइं ताणं चरिदाइं । [मा भवान् मानुषीधर्मं दिव्यायास्तस्याः संभावयतु । प्रभावगूढानि तासां चरितानि ।]

**राजा**—अस्तु तावदेव यथाह भवान् । पुत्रसंवरणे किमिव कारणं तत्रभवत्याः ।

**विदूषकः**—मा बुड्ढिं मं राआ परिहरिस्सदि त्ति । [मा वृद्धां मां राजा परिहरिष्यतीति ।]

---

**प्रकाशिका**

**आविलेति** । आविलं मलिनम् । लवली लताविशेषः । द्राक्षेति केचित् । आननं मुखम् । 'आनीलचूचुकाग्रम्' इत्यपि पाठः । 'चूचुकं तु कुचाग्रं स्यात्' **इत्यमरः** (२-६-७७) ॥८॥ **विदूषकः**—मा भवान् मानुषीधर्मं दिव्यायास्तस्याः संभावयतु । प्रभावगूढानि तासां चरितानि । संवरणं गोपनम् । **विदूषकः**—मा वृद्धां मां राजा परिहरिष्यतीति ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

**आविलपयोधराग्रमिति** । तस्या वपुः शरीरं कानिचिद् दिनानि कतिपयानि दिवसानि केवलमाविलपयोधराग्रं कलुषचूचुकं, लवलीदलपाण्डुराननच्छायम्, लवली लताविशेषस्तस्या दलवत् पाण्डुरा आननच्छाया मुखकान्तिर्यस्य तत् तथोक्तम् अलसेक्षणं चाभूत् ॥८॥ पुत्रसंवरणे पुत्रगोपने ॥

---

१. तानि दिनानि वपुरभूत् केवलमलसेक्षणं तस्याः ॥—सा. ए. २. सव्वं माणुसीधम्मं दिव्वासु संभावेदु—सा. ए.

**राजा**—कृतं परिहासेन । चिन्त्यताम् ।

**विदूषकः**—को [1]देवरहस्साइं तक्कइस्सदि । [को देवरहस्यानि तर्कयिष्यति ।]

**कञ्चुकी**—(*प्रविश्य*) जयतु जयतु देवः । देव, च्यवनाश्रमात् कुमारं गृहीत्वा तापसी सम्प्राप्ता । देवं द्रष्टुमिच्छति ।

**राजा**—उभयमप्यविलम्बितं प्रवेशय ।

**कञ्चुकी**—यदाज्ञापयति देवः ।

(*इति निष्क्रम्य [2]तापसीसहितं कुमारमादाय प्रविष्टः [3]*)

**विदूषकः**—णं क्खु एसो खत्तिअकुमारो जस्स णामंकिदो गिद्ध-लक्खवेही णाराओ उवलद्धो । तत्थभवदो बहु अणुकरेदि । [ननु खल्वेष क्षत्रियकुमारो यस्य नामाङ्कितो गृध्र-लक्ष्यवेधी नाराच उपलब्धः । तत्रभवतो बह्वनुकरोति ।]

---

**प्रकाशिका**

विदूषकः—को देवरहस्यानि तर्कयिष्यति । उभयं कुमारस्तापसी चेत्यर्थः । विदूषकः—ननु खल्वेष क्षत्रियकुमारो यस्य नामाङ्कितो गृध्रलक्ष्यवेधी नाराच उपलब्धः । नाराचो बाणः । तत्रभवतो बह्वनुकरोति । तत्रभवतः पूज्यस्य ॥

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

No commentary

---

१. देववारहस्साइं—सा. ए. २. बापहस्तेन कुमारेण तापस्या च सह प्रविष्टः—सा. ए. ३. कञ्चुकी—इत इतो भवती—सा. ए.

**राजा**—एवमेतत् ।

बाष्पायते निपतिता मम दृष्टिरस्मिन्,
वात्सल्यबन्धि हृदयं मनसः प्रसादः ।
सञ्जातवेपथुभिरुज्झितधैर्यवृत्तिर्,
इच्छामि चैनमदयं परिरब्धुमङ्गैः ॥९॥

**कञ्चुकी**—भगवति, एवं स्थीयताम् ।

(*तापसीकुमारौ यथोचितं स्थितौ*)

**राजा**—(*उपसृत्य*) भगवति, अभिवादये ।

**तापसी**—महाराअ, [1]सोमवंसं धारअंतो होहि । (*आत्मगतम्*) भो, अणाचक्खिदो वि विण्णादो एव्व तस्स राएसिणो आउसो अ ओरसो संबंधो । (*प्रकाशम्*) जाद, पणम दे गुरुं । [महाराज, सोमवंशं धारयन् भव । भोः, अनाख्यातोऽपि विज्ञात एव तस्य राजर्षेरायुषश्चौरसः सम्बन्धः । जात, प्रणम गुरुम् ।]

(*[2]कुमारो बाणगर्भमञ्जलिं बद्ध्वा प्रणमति*)

---

प्रकाशिका

**बाष्पायते निपतितेति** । बाष्पमुद्वमति बाष्पायते । अश्रुसंभृता भवति । वात्सल्यबन्धि प्रेमातिशययुक्तम् । वेपथुः कम्पः । परिरब्धुमालिङ्गितुम् ॥९॥ **तापसी**—महाराज, सोमवंशं धारयन् भव । भोः, अनाख्यातोऽपि विज्ञात एव तस्य राजर्षेरायुषश्चौरसः सम्बन्धः । जात, प्रणम गुरुम् । जातेति पुत्रामन्त्रणम् ॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

**बाष्पायत इत्यादि** । अस्मिन्निपतिता मम दृष्टिश्चक्षुर्बाष्पायते बाष्पमश्रु उद्वमति । 'बाष्पोष्मभ्यामुद्वमने' (पा. ३-१-१२) इति क्यङ । हृदयं मनो वात्सल्यस्य प्रेम्णो बन्धोऽस्यास्तीति तत्तथोक्तम् । तादृशं सत् प्रसादं प्रसन्नतां वहति प्राप्नोति । उज्झितधैर्यवृत्तिरुज्झिता त्यक्ता धैर्यस्य वृत्तिर्वर्तनं येन स तथोक्तः । सञ्जातवेपथुभिर्जातकम्पैरङ्गैरवयवैरेनं कुमारमदयं निर्दयम् । गाढमित्यर्थः । परिरब्धुमालिङ्गितुमिच्छाम्यभिलषामि ॥९॥

---

१. सोमवंसं वित्थारहत्तओ—सा. ए. २. कुमारश्चापगर्भमञ्जलिं करोति—सा. ए.

**राजा**—वत्स, आयुष्मान् भव ।

**कुमारः**—(*स्पर्शं रूपयित्वा स्वगतम्*)

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
[1]उत्सङ्गे वृद्धानां गुरुषु भवेत् कीदृशः स्नेहः ॥१०॥

**राजा**—भगवति, किमागमनप्रयोजनम् ।

**तापसी**—सुणादु महाराओ । एसो दीहाऊ आऊ जादमेत्तो एव्व उव्वसीए किं वि णिमित्तं अवेक्खिअ मम हत्थे णासीकिदो । जं खत्तिअस्स [2]कुलीणस्स जादकम्मादिविहाणं तं से तत्थ [3]भवदा चवणेण सव्वं अणुट्ठिदं । गिहीदविज्जो धणुव्वेदे अ विणीदो । [शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियस्य कुलीनस्य जातकर्मादिविधानं तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम् । गृहीतविद्यो धनुर्वेदे च विनीतः ।]

**राजा**—सनाथः खलु संवृत्तः ।

**तापसी**—अज्ज [4]पुप्फसमिधकुसणिमित्तं इसिकुमारएहिं सह गदेण इमिणा [5]अस्समवासविरुद्धं समाअरिदं । [अद्य पुष्पसमित्कुशनिमित्तमृषिकुमारकैः सह गतेनानेनाश्रमवासविरुद्धं समाचरितम् ।]

**विदूषकः**—कधं विअ । [कथमिव ।]

---

**प्रकाशिका**

**यदि हार्दमिति ।** अयं मम पिता जनयिता, अहमस्य सुतः पुत्र इति श्रुत्वा यदि चेदिदमनिर्वचनीयमित्यर्थः । हार्दं प्रेम । उत्सङ्गोऽङ्कः ॥१०॥

**तापसी**—शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियस्य कुलीनस्य जातकर्मादिविधानं तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम् । कुलीनस्य महावंशजस्य ।

---

१. उत्सङ्गवर्धितानां—सा. ए. २. खत्तिअकुमारस्स—सा. ए. ३. भअवदा—सा. ए. ४. पुप्फसमिदत्थं—सा. ए. ५. अस्समविरुद्धं—सा. ए.

**तापसी**–गहिदामिसो किल गिद्धो [1]अस्समपादवसिहरे णिलीअमाणो लक्खीकिदो बाणस्स। [गृहीतामिषः किल गृध्र आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य।][2]

**राजा**–ततस्ततः।

**तापसी**–तदो उवलद्धवुत्तंतेण भअवदा चवणेण अहं समादिट्ठा णिज्जादेहि [3]एदं उव्वसीहत्थे णासं ति। ता इच्छामि उव्वसिं पेक्खिदुं। [तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा। निर्यातयैनमुर्वशीहस्ते न्यासमिति। तदिच्छाम्युर्वशीं प्रेक्षितुम्।]

**राजा**–तेन ह्यासनमनुगृह्णातु भगवती।

(*तापसी प्रेष्योपनीते आसने उपविशति*)

---

**प्रकाशिका**

कौ पृथिव्यां लीनस्य राजतो गोपितस्येति वा। गृहीतविद्यो धनुर्वेदे च विनीतः। गृहीतविद्योऽभ्यस्तविद्यः। विनीतः शिक्षितः। **तापसी**—अद्य पुष्पसमित्कुशनिमित्तमृषिकुमारकैः सह गतेनानेनाश्रमवासविरुद्धं समाचरितम्। **विदूषकः**—कथमिव॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

**यदि हार्दमित्यादि**। ममायं पिता, अहमस्य सुत इति श्रुत्वा यदि यस्मात् कारणादिदं हार्दं प्रेम भवति, तस्मादुत्सङ्गवर्धितानामङ्कपरिवर्धितानां पुत्राणां गुरुषु पितृषु कीदृशः किंविधः स्नेहो भवेत्॥१०॥

**प्रकाशिका**

**तापसी**–गृहीतामिषः किल गृध्र आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य। **तापसी**–तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा निर्यातयैनमुर्वशीहस्ते न्यासमिति। निर्यातनं न्यासप्रत्यर्पणम्। 'दाने न्यासार्पणे वैरशुद्धौ निर्यातनं मतम्' इति **मुक्तावली**। न्यासो निक्षेपः। तदिच्छाम्युर्वशीं प्रेक्षितुम्॥

**कोणेश्वरी** Folio missing

**कुमारगिरिराजीया**

निर्यातनं न्यासार्पणम्। 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च' **इत्यमरः** (३-३-१२०)॥

---

१. पादवसिहरे–सा. ए. २. विदूषको राजानमवलोकयति–सा. ए.
३. हत्थणासं ति–सा. ए.

**राजा**–लातव्य, आहूयतामुर्वशी ।

**कञ्चुकी**–यदाज्ञापयति देवः ।

(*इति निष्क्रान्तः*)

**राजा**–(*कुमारमवलोक्य*) एह्येहि, वत्स ।

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपनतेन[1] ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥११॥

**तापसी**–जाद, णंदेहि पिदरं । [जात नन्दय पितरम् ।]

(*कुमारो राजानमुपसर्पति*)[2]

**राजा**–([3]*आलिङ्ग्य*) वत्स, प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

---

**प्रकाशिका**

सर्वाङ्गीण इति । किलेत्यैतिह्ये । सर्वाङ्गीणः सर्वाङ्गव्यापी । उपनतेन प्राप्तेन । तेन स्पर्शेन । 'उपगतेन' इत्यपि पाठस्तदर्थ एव ॥११॥ तापसी— जात, आनन्दय पितरम् ॥

**कौणेश्वरी**

चन्द्रकान्तमिव प्रह्लादयस्व । यथा चन्द्रकिरणसम्बन्धाच्चन्द्रकान्तमणिर्जलकणाक्रान्तो भवति तथा त्वदीयसम्पर्कादहमपि हर्षजलकणाक्रान्तो भवामीत्यर्थः ॥११॥

**कुमारगिरिराजीया**

सर्वाङ्गीण इत्यादि । सुतस्य पुत्रस्य स्पर्शः । अत्र स्पर्शशब्देन स्पर्शसुखं लक्ष्यते । सर्वाङ्गीणः सर्वाङ्गव्यापी किल । 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति खः (पा. ५-२-७) । तेन कारणेनोपगतेनोपगमनेन । उपश्लेषेणेत्यर्थः । मां प्रह्लादयस्वानन्दय । तावदिति साकल्ये । अत्रोपमामाह—चन्द्रकरश्चन्द्रकिरणश्चन्द्रकान्तमिव ॥११॥ जात वत्स ॥

---

१. उपगतेन—सा. ए. २. राजानमुपगम्य पादग्रहणं करोति—सा. ए. ३. कुमारं परिष्वज्य पादपीठे चोपवेश्य—सा. ए.

**विदूषकः**–किं ति संकिस्सदि । णं अस्सम वासपरिचिदो एव्व साहामिओ । [किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः ।]

**कुमारः**–(*सस्मितम्*) तात, वन्दे ।

**विदूषकः**–सोत्थि भवदो । [1]वड्ढदु भवं । [स्वस्ति भवते । वर्धतां भवान् ।]

(*ततः प्रविशत्युर्वशी कञ्चुकी च*)

**कञ्चुकी**–इत इतो देवी ।

**उर्वशी**–(*कुमारमवलोक्य*) को णु क्खु एसो [2]कणअपीठोवविट्ठो महाराएण सज्जीअमाणसिहंडो चिट्ठदि । (*तापसीं दृष्ट्वा*) अम्महे, सच्चवदीसहिदो[3] पुत्तओ मे आऊ । महंतो क्खु संवुत्तो । [को नु खल्वेष कनकपीठोपविष्टो महाराजेन सज्ज्यमानशिखण्डस्तिष्ठति । अम्महे, सत्यवतीसहितः पुत्रको मे आयुः । महान् खलु संवृत्तः ।]

**प्रकाशिका**

**विदूषकः**—किमिति शङ्किष्यति । नन्वाश्रमवासपरिचित एव शाखामृगः । आश्रम एकत्रावस्थित्या कृतचिरमैत्रीक इत्यर्थः । **विदूषकः**—स्वस्ति भवते । वर्धतां भवान् । **उर्वशी**—को नु खल्वेष कनकपीठोपविष्टो महाराजेन सज्ज्यमानशिखण्डस्तिष्ठति । शिखण्डश्चूडा । 'शिखण्डो बर्हचूडयोः' इति मुक्तावली । अम्महे आश्चर्ये । सत्यवतीसहितः पुत्रको मे आयुः । महान् खलु संवृत्तः ॥

**कोणेश्वरी**

**किं तीति** । किमिति मे शङ्कते । आश्रमवासपरिचिता एतस्य शाखामृगाः । एतस्य तावदाश्रमवासेन परिचिताः शाखामृगा वानरा इति मे ममापि किं तथैव शङ्कते । सम्बन्धमात्रविवक्षायां कर्मण्यपि कर्मत्वाविवक्षितत्वात् षष्ठी

१. om–सा. ए. २. सबाणासणो पादपीठे सअं महाराएण संजमीअमाणसिहंडो–सा ए. ३. सूहदो–सा. ए.

**राजा**–(*विलोक्य*) वत्स,

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्नवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥१२॥

**तापसी**–जाद, एहि । पच्चुवगच्छ मादरं । [जात, एहि । प्रत्युपगच्छ मातरम् ।]

(*[1]इति कुमारेण सहोर्वशीमुपसर्पति*)

**उर्वशी**–[2]अज्जे, पादवंदणं करोमि । [आर्ये, पादवन्दनं करोमि ।]

**तापसी**–वच्छे, भत्तुणो बहुमदा होहि । [वत्से, भर्तुर्बहुमता भव ।

**कुमारः**–अम्ब, अभिवादये ।

**उर्वशी**–[3]वच्छ, पिदरं आराधयंतो होहि । (*राजानं प्रति*) जेदु जेदु महाराओ ।

[वत्स, पितरमाराधयन् भव । जयतु, जयतु महाराजः । ]

**राजा**–स्वागतं पुत्रवत्यै । इत आस्यताम् ।[4]

[5]**उर्वशी**–अज्जा, उवविसध । [आर्याः, उपविशत ।]

(*सर्वे यथोचितमुपविष्टाः*)

**तापसी**–वच्छे, गिहिदविज्जो आऊ संपदं कवआरिहो[6] संवुत्तो । एसो भत्तुणो समक्खं णिज्जादिदो सहिहत्थणिक्खेवो । ता तुम्हेहिं विसज्जिदं अत्ताणं इच्छामि । उवरुज्झदि मे अस्समधम्मो ।

---

कोणेश्वरी

उर्वशी तर्कयति— को इत्यादि । को नु खल्वेष कनकपीठोपविष्टो महाराजेन संयम्यमानशिखण्डस्तिष्ठति । तापसीं दर्शनेन परिचित्य सहर्षमाह—अम्म इति । हर्षमभिनीय । सत्यवतीसहितः पुत्रको मे । महान् खलु संवृत्तः ॥

कुमारगिरिराजीया No commentary

---

१. कुमार उर्वशीं प्रत्युद्गच्छति–सा. ए. २. अम्ब–सा. ए. ३. कुमारमुन्नमितमुखं परिष्वज्य–सा. ए. ४. अर्धासनं ददाति–सा. ए. ५. om –सा. ए. ६. कवअहरो–सा. ए.

[वत्से, गृहीतविद्य आयुः साम्प्रतं कवचार्हः संवृत्तः। एष भर्तुः समक्षं निर्यातितः सखीहस्तनिक्षेपः। तद् युष्माभि-र्विसर्जितमात्मानमिच्छामि। उपरुध्यते मे आश्रमधर्मः।]

**उर्वशी**—कामं चिरस्स अज्जउत्तं पेक्खिअ [1]अवहिदहिअएण जुज्जदि पुणो अस्समधम्मं विभाविदुं। ता गच्छदु अज्जा पुणोदंसणाअ। [कामं चिरस्यार्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्मं विभावयितुम्। तद् गच्छत्वार्या पुनर्दर्शनाय।]

प्रकाशिका

**इयमिति**। आलोकनतत्परा विलोकनैकताना। स्नेहेन प्रेम्णा प्रस्नवः क्षरत्पयः तेन नितरां भिन्नं संगतम्। आर्द्रीभूतमिति यावत्। 'स्नेहप्रसर' इति पाठे स्नेहस्य प्रसरो रोमाङ्कुरस्वेदादिद्वारा आधिक्यम्। 'प्रस्रव' इति पाठे स्नेहप्रस्रवः, अर्थात् स्वेदोद्गमः। 'भिन्नं वाच्यवदत्यर्थे दारिते संगते स्फुटे' इति लोचनः॥१२॥ **तापसी**—जात, एहि प्रत्युपगच्छ मातरम्। **उर्वशी**—आर्ये, पादवन्दनं करोमि। **तापसी**—वत्से, भर्तुर्बहुमता भव। **उर्वशी**- वत्स, पितरमाराधयन् भव। जयतु जयतु महाराजः। **उर्वशी**—आर्याः, उपविशत।

**तापसी**—वत्से, गृहीतविद्य आयुः साम्प्रतं कवचार्हः संवृत्तः। 'कवचहरः' इत्यपि पाठः। एष भर्तुः समक्षं निर्यातितः सखीहस्तनिक्षेपः। तद् युष्माभि-र्विसर्जितमात्मानमिच्छामि। उपरुध्यते मे आश्रमधर्मः। 'अपराध्यति' इत्यपि पाठः। **उर्वशी** - कामं चिरस्यार्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्मं विभावयितुम्। तद् गच्छत्वार्या पुनर्दर्शनाय। 'कामं चिरस्य प्रेक्ष्य विरहोत्क-ण्ठितास्मि न पुनर्धर्मविरोधे वर्तितुम्' इत्यपि क्वचित् पाठः॥

कोणेश्वरी

**इयमिति**। स्नेहप्रस्नवनिर्भिन्नं स्तनांशुकमुद्वहन्ती ते जननीयं प्राप्ता आगता इत्यर्थः॥१२॥ **जादेति**। जात एहि। प्रत्युपगच्छ मातरम्। पुरा मामुपगतवानसि। इदानीं मातरं प्रत्युपगतो भव इत्यर्थः।

१. विरहुक्कंठिदम्हि। ण उण जुज्जदि धम्मावरोधे वट्टिदुं—सा. ए.

**राजा**–अम्ब, [1]तत्रभवते च्यवनाय मम प्रणाममावेदयिष्यसि।

**तापसी**–एव्वं भोदु। [एवं भवतु।]

**कुमारः**–आर्ये, सत्यमेव निवर्तनम्। इतो मामपि नेतुमर्हसि।

**राजा**–अयि वत्स, उषितं त्वया पूर्वस्मिन्नाश्रमे। द्वितीयमध्यासितुं तव समयः।

**तापसी**–जाद, गुरुणो वअणं अणुचिट्ठ। [जात गुरोर्वचनमनुतिष्ठ।]

---

**कोणेश्वरी**

वच्छेति। वत्से, गृहीतविद्यः साम्प्रतमायुष कवचधरश्च संवृत्तः। एष भर्तुश्च ते समक्षं निर्यातितो मया तव हस्ते निक्षेपः। तस्माद् विसर्जितमात्मानमिच्छामि। उपरुणद्धि मामाश्रमवासधर्मः। काममिति। कामं चिरस्य प्रेक्ष्योत्कण्ठितास्मि न पुनर्धर्मविरोधे वर्तितुम्। अस्मि इत्यावृत्य योज्यम्। गच्छत्वार्या पुनरपि दर्शनाय इति॥

**कुमारगिरिराजीया**

**इयमित्यादि**। स्पष्टोऽर्थः॥१२॥

निर्यातितः प्रत्यर्पितः। अत्रानुभूतार्थकथनात् निर्णयो नाम सन्ध्यङ्गमुक्तं भवति॥

**प्रकाशिका**

**तापसी**—एवं भवतु। उषितं स्थितम्। पूर्वस्मिन्नाश्रमे ब्रह्मचर्याख्ये। द्वितीयो गार्हस्थ्याश्रमः। **तापसी**—जात, गुरोर्वचनमनुतिष्ठ।

**कोणेश्वरी**

Folio missing

**कुमारगिरिराजीया**

No commentary

---

१. भगवते च्यवनाय मां प्रणिपातय–शा. ए.

**कुमारः**—तेन हि—

य: सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय [1]शितिकण्ठकं शिखिनम् ॥१३॥

**तापसी**—एव्वं करेमि । [एवं करोमि ।]

[2]**उर्वशी**—भअवदि, पादवंदणं करेमि । [भगवति, पादवन्दनं करोमि ।]

[3]**राजा**—भगवति, प्रणमामि ।

**तापसी**—सोत्थि भोदु तुम्हाणं । [स्वस्ति भवतु युष्मभ्यम् ।]

(*इति निष्क्रान्ता*)

---

**प्रकाशिका**

**यः सुप्तवानिति** । सुप्तवान् निद्रां चकार । यद्वा सुप्तं स्वापो विद्यतेऽस्येति तादृशः । जातकलापमुद्गतपिच्छभारम् । 'कलापः संहते बर्हे काव्यादौ तृणवृन्दयोः' इति **मुक्तावली** । शितिकण्ठं नीलग्रीवं तन्नामानं वा ॥१३। **तापसी**—एवं करोमि । **उर्वशी**—भगवति, पादवन्दनं करोमि । **तापसी**—स्वस्ति भवतु युष्मभ्यम् ॥

**कोणेश्वरी**

**यः सुप्तवानिति** । यः शिखण्डकण्डूयनोपलब्धसुखो मदङ्के सुप्तवान् तं जातकलापं शितिखण्डकं शिखिनं मे प्रेषय । भवदादिविश्लेषं पितोः संश्लेषात् कथमपि सहिष्ये । तद्विरहस्तु न समाधेय इति भावः ॥१३॥

**कुमारगिरिराजीया**

**यः सुप्तवानित्यादि** । मणिकण्ठो नाम तस्य मयूरस्य सञ्ज्ञा ॥१३॥

---

१. मणिकण्ठकं—सा. ए. ? . ३. om.—सा. ए.

**राजा**—सुन्दरि,[1]

अद्याहं पुत्रिणामग्र्यः सुपुत्रेण तवामुना ।
पौलोमीसम्भवेनेव जयन्तेन पुरन्दरः ॥१४॥

(*उर्वशी स्मृत्वा रोदिति*)

**विदूषकः**—किं णु क्खु संपदं [2]अत्थभोदी अस्सुमुही संवुत्ता । [किं नु खलु सांप्रतमत्रभवत्यश्रुमुखी संवृत्ता ।]

**राजा**—(*सावेगम्*)

किं सुन्दरि प्ररुदितासि ममोपनीते[3]
वंशस्थितेरधिगमात् स्फुरति प्रमोदे ।
[4]पीनस्तनोपरिनिपातिभिरर्पयन्ती
मुक्तावलीविरचनां[5] पुनरुक्तमस्रैः ॥१५॥[6]

**उर्वशी**—सुणादु महाराओ । पढमं उण पुत्तदंसणसमुत्थिदेण आणंदेण विसुमरिदम्हि । दाणिं महिंदसंकित्तणेण मम[7] हिअए ट्ठिदं समएण । [शृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनसमुत्थितेनानन्देन विस्मृताऽस्मि । इदानीं महेन्द्रसंकीर्तनेन मम हृदये स्थितं समयेन ।]

**राजा**—कथ्यतां समयः ।

**उर्वशी**—अहं पुरा महाराअगहिदहिअआ [8]गुरुसावसंमूढा महिंदेण [9]अवधीकदुअ अब्भणुण्णादा । [अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेणावधीकृत्याभ्यनुज्ञाता ।]

प्रकाशिका

अद्याहमिति । पुत्रिणां पुत्रवतामग्र्यः श्रेष्ठः । पौलोमी शची । जयन्त इन्द्रसुतः ॥१४॥ विदूषकः—किं नु खलु सांप्रतमत्रभवत्यश्रुमुखी संवृत्ता । 'सांप्र-

१. कल्याणि—सा. ए. २. सत्थभोदी एक्कवदे—सा. ए. ३. ममोपपन्ने—सा. ए. ४. पीनोन्नतस्तनविसर्पिभिरानयन्ती—सा. ए. ५. पुनरुक्तिम्—सा. ए. ६. बाष्पमस्याः प्रमार्ष्टि—सा. ए. ७ समओ मह हिअअं आआसेदि—सा. ए. ८. om.—सा. ए. ९. आणत्ता—सा. ए.

### प्रकाशिका

तम्' इत्यत्र 'एकपदे' इति पाठः। एकपदे तत्क्षणे। 'तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृतम्' इति **हलायुधः**(४-६७)। **किं सुन्दरीति**। प्ररुदिता कृतरोदना। वंशस्य कुलस्य स्थितेरवस्थानं यस्मात् तादृशस्य सुतस्याधिगमात् प्राप्तेः कुलावस्थानप्राप्तेर्वा। 'वंशो वेणौ कुले वर्गे पृष्ठस्यावयवास्थनि। नासाविवरदेशेऽपि वाद्यभाण्डान्तरेऽपि च॥' इति **श्रीधरसेनः**। 'मर्यादायामवस्थाने स्थाने सीमनि च स्थितिः।' इति **विश्वलोचनः**। स्फुरति प्रकाशमाने। प्रमोदे सन्तोषे। उपनीते कृते सति। 'महति' इति क्वचित् पाठः। महति उद्दामे। पुनरुक्तमिति क्रियाविशेषणम्। 'विरचनम्' इति पाठे तद्विशेषणम्। अस्रैरश्रुभिः। 'अस्रमश्रु च (शोणितम्)' इति **त्रिकाण्डी**॥१५॥ **उर्वशी**—शृणोतु महाराजः। **प्रथमं** पुनः पुत्रदर्शनसमुत्थितेनानन्देन विस्मृतास्मि। इदानीं महेन्द्रसंकीर्तनेन मम हृदये स्थितं समयेन। समयेनावधिकालेन। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इति **त्रिकाण्डी** (३-३-१४९)। **उर्वशी**—अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेणावधीकृत्याभ्यनुज्ञाता॥

### कोणेश्वरी

**अद्येति**। तवामुना सुपुत्रेणाद्याहं पुत्रिणामग्र्यः प्रथमशस्त्यः संवृत्तः। यथा पौलोमीसंभवेन जयन्तेन पुरन्दरः पुत्रिणामग्र्य इत्यर्थः॥१४॥

**किमिति**। किं नु खलु सांप्रतं तत्रभवत्युर्वशी अश्रुमुखी संवृत्ता। **किमिति**। वंशस्थितेरधिगमादुपनीते प्रमोदे मम स्फुरति हे सुन्दरि किं प्ररुदिताऽसि। नायं प्ररोदनावसरोऽपि तु हर्षावसर इति भावः। नील (पीन) स्तनोपरिनिपातिभिरस्रैर्मुक्तावलीविरचनां पुनरुक्तं यथा स्यादेवमर्पयन्ती। एतावता रोदनस्य प्रकर्ष उक्तः॥१५॥

**सुणादु** इत्यादि। शृणोतु महाराजः। प्रथमं पुत्रदर्शनसमुत्थितेनानन्देनानन्दिताऽस्मि। इदानीं महेन्द्रसंकीर्तनेनावधिर्मम हृदयेन स्मृतः। **अहमिति**। अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेणावधीकृत्याभ्यनुज्ञाता॥

### कुमारगिरिराजीया

**अहं हीत्यादि**। स्पष्टोऽर्थः॥१४॥

**किं सुन्दरीत्यादि**। वंशस्थितेः कुलप्रतिष्ठाया अधिगमात् प्राप्तेः पुत्रलाभादित्यर्थः। महति प्रमोदे प्रसक्ते सति किं किमर्थं प्ररुदितासि रोदितुं प्रक्रान्ता भवसि। 'आदिकर्मणि क्तः कर्तरि च' (पा. ३-४-७१) इति क्तः॥१५॥

**अस्या उर्वश्या बाष्पमश्रु प्रमार्ष्टि अपनयति**। अत्र पर्युपासनात् प्रसादो नाम सन्ध्यङ्गमुक्तं भवति॥

**राजा**–किमिति ।

**उर्वशी**–जदा मम सो पिअवअस्सो तुइ समुप्पण्णसुदस्स[1] मुहं पेक्खदि[2] तदा मम समीवं तुए आअंतव्वं ति । तदो मए महाराअविओअभीरुदाए जादमेत्तो एव्व विज्जागमणिमित्तं अ भअवदो च्चवणस्स अस्समपदे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे अप्पणा[3] णिक्खित्तो । अज्ज उण पिदुणो आराहणसमत्थो संवुत्तो त्ति[4] काउण णिज्जादिदो एसो दीहाऊ आऊ । एत्तिओ मे महाराएण सह संवासो । [यदा मम स प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य मुखं प्रेक्षते तदा मम समीपं त्वयागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं च भगवतश्च्यवनस्याश्रमपद एष पुत्रक आर्यायाः सत्यवत्या हस्त आत्मना निक्षिप्तः । अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निर्यातित एष दीर्घायुरायुः । एतावान् मम महाराजेन सह संवासः ।]

( *सर्वे विषादं नाटयन्ति ।* [5]*राजा मोहमुपगच्छति* )

[6]**सर्वे**—समस्ससदु समस्ससदु महाराओ । [समाश्वसितु समाश्वसितु महाराजः । ]

**कञ्चुकी**–समाश्वसितु महाराजः ।

**विदूषकः**–अब्बम्हण्णं अब्बम्हण्णं [अब्रह्मण्यमब्रह्मण्यम् । ]

**राजा**–( [7]*समाश्वस्य*) अहो, सुखप्रत्यर्थिता दैवस्य ।

आश्वासितस्य मम नाम सुतोपलब्ध्या,
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥१६॥

---

१. वंसकरस्स–सा. ए. २. पेक्खिस्सदि–सा. ए. ३. अप्पआसं–सा. ए. ४. कलअंतीए–सा. ए. ५. om.–सा. ए. ६. सर्वे—अब्बम्हण्णं om.–सा. ए. ७. सनिःश्वासम्–सा. ए.

### प्रकाशिका

**उर्वशी**–यदा मम स प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य मुखं प्रेक्षते तदा मम समीपं त्वयागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं च भगवतश्च्यवनस्याश्रमपद एष पुत्रक आर्यायाः सत्यवत्या हस्ते आत्मना निक्षिप्तः । अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निर्यातित एष दीर्घायुरायुः । एतावान् मम महाराजेन सह संवासः ।

**सर्वे**–समाश्वसितु समाश्वसितु महाराजः । **विदूषकः**–अब्रह्मण्यमब्रह्मण्यम् । 'अब्रह्मण्यमवध्योक्तौ' इति **त्रिकाण्डी** (१.६.१३) । सुखप्रत्यर्थिता सुखविरोधिता । 'प्रतिरोधिपरास्कन्दिप्रत्यर्थिपरिपन्थिनः' इति **त्रिकाण्डी** (२.१०.२५) । **आश्वासितस्येति** । सुतोपलब्ध्या पुत्रप्राप्त्या । नामेति प्रकाशे । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति **त्रिकाण्डी** (३.३.२५१) । आश्वासितस्य कृतसमाधानस्य । विप्रयोगो वियोगः । व्यावर्तिता दूरीकृता आतपरुग्उष्णपीडा यस्य । 'आतपो रश्मिमात्रे स्यात् सूर्यरश्मौ च दृश्यते' इति **धरणिः** । 'आतपभिया' इति तु युक्तः पाठः । प्रथमाभ्रवृष्ट्या नूतनमेघवर्षेण । 'अभ्रं मेघो वारिवाहः' **इत्यमरः** (१.२.७) । वैद्युतो विद्युत्सम्बन्धी ॥१६॥

### कोणेश्वरी

**जदेति** । यदा स मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य पुत्रस्य मुखं प्रेक्षिष्यते तदा मम समीपं त्वया आगन्तव्यमिति । ततो मया महाराजवियोगभीरुतया चिरकालत्वत्संगमनिमित्तं भगवतश्च्यवनस्याश्रमप्रदेशे पुत्रक आर्यायाः सत्यवत्या हस्तेऽर्पणान्निक्षिप्तः । अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा तया निष्पादित (निर्यातितः) एष दीर्घायुः । एतावत्को मे महाराजेन संवासः । इदं मे रोदननिमित्तमिति शेषः ।

**अब्बम्हण्णं** इति । अब्रह्मण्यम् अब्रह्मण्यम् । कथं सुखप्रतिबन्धिता इत्यत आह । **आश्वासितस्येति** । नाम संभावनायाम् । सुतोपलब्ध्या आश्वासितस्य मम हे कृशोदरि त्वया सह सद्यो विप्रयोगोऽयमुपस्थितः । प्रथमजलवृष्ट्या व्यावर्तितातपरुजो वृक्षस्य वैद्युतो वह्निरिव । त्यक्तातपदुःखवृक्षवज्रपात इवायं भावी मम त्वद्वियोग इत्यर्थः ॥१६॥

### कुमारगिरिराजीया

तस्मादेतावान् मे महाराजेन सह संवासः । अत्र मिथो जल्पनात् परिभाषा नाम सन्ध्यङ्गमुक्तं भवति ॥

**आश्वासितस्येत्यादि** । स्पष्टोऽर्थः ॥१६॥

**विदूषकः**—अअं सो अत्थो अणत्थाणुबंधी त्ति[1] तक्केमि तत्थभवदा वक्कलं गेण्हिअ तपोवणं गंतव्वं ति। [अयं सोऽर्थोऽनर्थानुबन्धीति तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति।]

**उर्वशी**—[2]हा हदम्हि मंदभाआ। मं वि[3] किदविणअस्स पुत्तअस्स [4]लंभाणंतरं सग्गारोहणेण अवसिदकज्जं [5]विप्पओअमुहिं महाराओ समत्थइस्सदि। [हा हतास्मि मन्दभाग्या। मामपि कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति।]

---

### प्रकाशिका

**विदूषकः**—अयं सोऽर्थोऽनर्थानुबन्धीति तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति। 'अत्रभवान् देवराजः स्वयमनुग्राहयितव्यः' इत्यपि क्वचित् पाठः। **उर्वशी**—हा हतास्मि मन्दभाग्या। मामपि कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति॥

### कोणेश्वरी

**अअं इति।** अयं सोऽर्थोऽनर्थानुबन्ध इति तर्कयामि। अत्र भवान् देवराजः स्वयमनुग्राहयितव्यः। अत्रार्थः पुत्रप्रतिलम्भोऽनर्थश्चोर्वशीवियोग इत्यर्थः। **हा हदम्हि इति।** हा हतास्मि मन्दभाग्या कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति॥

### कुमारगिरिराजीया

**महाराजः समर्थयिष्यते।** गतेषु कार्येषु यथा शोको नास्ति तथा मयि गतायामपि शोको न भविष्यतीत्यभिप्रायः॥

---

१. णुबन्धो संवुत्तो—सा. ए. २. om.—सा. ए. ३. मन्दभाइणि—सा. ए. ४. लाभाणंतरं—सा. ए. ५. om.—सा. ए.

**राजा**–सुन्दरि, मा मैवम् ।

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः ।
अहमपि तत्र [1]सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥१७॥

**कुमारः**–नार्हति तातो[2] नृपपुङ्गवधारितायां धुरि दम्यं नियोजयितुम् ।

---

**प्रकाशिका**

**न हीति** । सुलभः सुप्रापो वियोगो यस्याः सा । तादृशी परवत्ता पराधीनता । 'परतन्त्रः पराधीनः' **इत्यमरः** (३.१.१६) । शासनमाज्ञारूपम् । सूनौ पुत्रे । 'सूनुः पुत्रेऽनुजे रवौ' **इत्यनेकार्थः** (२.३२६) । विचरितानि कृतगमनानि मृगयूथानि मृगसमूहा येषु ॥१७॥ नृपपुंगवो नृपश्रेष्ठः । 'महोक्षधारितायां' इत्यपि पाठः । 'दम्यवत्सतरौ समौ' इति **त्रिकाण्डी** (२.९.६२)॥

**कोणेश्वरी**

तवानायत्तमेतदिति प्रतिपादयति–**न हीत्यादि** । परवत्ता आत्मप्रियाणि कर्तुं न प्रभवति । सुलभो वियोगो यत्र । एतादृशी त्वं पराधीना । अतो भर्तुः शासने तिष्ठ प्रभोरादेशं कुर्वित्यर्थः । अहमपि विरहनिर्वापणं कर्तुं प्रकारं चिन्तितवानस्मीत्याह–**अहमिति** । तव सूनावद्य राज्यं विन्यस्य विचरितमृगयूथानि वनान्यहमप्याश्रयिष्ये । यथा चाश्रमान्तरपरिग्रहादेव विरहस्तव सहिष्यत इति भावः ॥१७॥

**कुमारगिरिराजीया**

**न हि सुलभवियोगेत्यादि** । स्पष्टोऽर्थः ॥१७॥

**पुङ्गवधार्यायां पुङ्गवेन** महोक्षेण धार्यायां धारयितुमर्हायां धुरि भारे दम्यं वत्सतरं नियोजयितुं नियन्तुम् ॥

---

१. सूनावायुषि न्यस्तराज्यो–सा. ए.　२ पुंगवधारितायां–सा. ए.

**राजा**-अयि वत्स । मा[1]मैवम् ।

शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्,
[2]प्रभवतितरां वेगोदग्रं भुजङ्गशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं,
न खलु वयसा जात्यैवायं स्वकार्यसहो गणः[3] ॥१८॥

आर्य लातव्य,

[4]**कञ्चुकी**-आज्ञापयतु देवः ।

**राजा**-मद्वचनादमात्यपर्वतं[5] ब्रूहि संभ्रियतामायुषो राज्याभिषेक इति ।

*(कञ्चुकी दुःखेन निष्क्रान्तः । सर्वे हर्षविघातं रूपयन्ति)*

---

प्रकाशिका

**शमयतीति** । गन्धद्विपो गन्धगजः कलभो बालोऽपि सन्नन्यान् गजान् शमयति परिभवति । गन्धगजलक्षणं च 'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । स वै गन्धगजो नाम नृपतेर्विजयावहः' (पालकाप्ये पृ. १४२) इति । वेगैः । 'धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' इति वचनोक्तैर्विषवेगैरुदग्रं क्रूरम् । भुजङ्गशिशोर्विषं गरलं प्रभवति मारणसमर्थं भवति । धातवश्च सप्त । उक्तं च वाग्भटादौ—वसाऽसृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः' इति । एवं च सप्तैव विषवेगा अपि भवन्ति । तल्लक्षणानि च विषतन्त्रे पृथक् पृथङ्निरूपितानि । यथा—

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वंस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥'

इति । एवं बालावस्थोऽप्यधिपती राजा भुवं परिरक्षितुमलं समर्थः खलु । यतोऽयं गन्धगजादेर्गणः समुदायो वयसा तारुण्यादिना स्वकार्यसहो निजकार्यकरणसमर्थो न, किन्तु जात्यैव स्वकार्यनिर्वहणसमर्थ इत्यर्थः ॥१८॥

---

१. om.—सा. ए. २. भवति सुतरां—सा. ए. ३. भरः—सा. ए. ४. om.—सा. ए. ५. पर्वतं—सा. ए.

राजा–(*आकाशमालोक्य*) कुतो नु खलु भो[1] विद्युत्संपातः ।[2] (*निपुणमवलोक्य*) । अये, भगवान् नारदः ।[3]

गोरोचनानिकषपिङ्गजटाकलापः,
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसम्भृतमण्डनश्रीर्,
हैमप्ररोह इव जङ्गमकल्पवृक्षः ॥१९॥
[4]अर्घोऽर्घस्तावत् ।

उर्वशी–[5]अअं भअवदो अग्घो । [अयं भगवतोऽर्घः ।]

(*ततः प्रविशति नारदः*)

नारदः–विजयतां विजयतां मध्यमलोकपालः ।

राजा–[6]भगवन्, अभिवादये ।

उर्वशी–भअवं, पणमामि । [भगवन्, प्रणमामि ।]

नारदः–अविरहितौ दम्पती भूयास्ताम् ।

राजा–(*आत्मगतम्*) अपि नामैवं स्यात् । (*प्रकाशम् । कुमारमाश्लिष्य*) वत्स, भगवन्तमभिवादयस्व ।

कुमारः–भगवन्, और्वशेय आयुः प्रणमति ।

नारदः–आयुष्मानेधि ।

राजा–अयं विष्टरोऽनुगृह्यताम् ।

नारदः–तथा । (*उपविष्टः*)

(*सर्वे नारदमनूपविशन्ति*)

---

**कोणेश्वरी**

**शमयतीति** । कलभोऽपि सन् गन्धद्विपोऽन्यान् गजान् शमयति । भुजङ्गशिशोः शिशोरपि भुजङ्गस्य विषं प्रभवतितराम् । अत्यर्थेन स्वकार्यकारि

---

१. किं नु खलु निरभ्रे–सा. ए. २. उर्वशी–(विलोक्य) अम्मो, भअवं णारदो ।–सा. ए. ३. य एषः–सा. ए. ४. अर्घ्यमस्मै–सा. ए. ५. यथोक्तमादाय–सा. ए. अरिहणा–कुणि. ६. उर्वशीहस्तादर्घ्यमादाय, आवर्ज्य–सा. ए.

### कोणेश्वरी

भवतीत्यर्थः । वेगोदग्रमिति सहेतुकं विशेषणम् । बालावस्थोऽप्यधिपतिर्भुवं परिरक्षितुमलं समर्थः । अयं गणो जात्यैव स्वकार्यक्षमो न खलु वयसा । वयो नापेक्षते इत्यर्थः ॥

### कुमारगिरिराजीया

शमयतीत्यादि । गन्धद्विपो विशिष्टजातिगजः कलभः शिशुः सन्नप्यन्यान् गजानितरजातिगजान् शमयति वारयति । भुजङ्गशिशोर्विषं सुतरामत्यर्थं वेगोदग्रमुद्रेकेणोदग्रमधिकं भवति । दृष्टान्ताविति शेषः । अधिपती राजा बाल्यमवस्था यस्य स तथोक्तस्तथाविधः सन्नपि भुवं परिरक्षितुमलं शक्नोति । अर्थान्तरन्यासमाह—अयं भर एषोऽतिशयः । 'अतिशयो भरः' इत्यमरः (१-१-६६) । जात्यैव जन्मनैव स्वकार्यसहः आत्मकार्यक्षमो भवति । वयसा तारुण्येन न खलु न हि स्वकार्यसहो भवतीत्यर्थः ॥१८॥

### प्रकाशिका

गोरोचनेति । गोरोचनाया निकषः कषपाषाणः । लक्षणया तत्स्था रेखाः । तद्वत् पिङ्गो जटाकलापो जटासमूहो यस्य । शशिकलावदमलं शुभ्रं वीतसूत्रमुपवीतं यस्य । मुक्तागुणैर्मौक्तिकसरैरतिशयेनात्यन्तं संभृता कृता मण्डनश्रीर्भूषणशोभा यस्य । तथा हैमा हेमसम्बन्धिनः । सौवर्णा इत्यर्थः । प्ररोहा निजजटा यस्यैतादृशो जङ्गमकल्पवृक्ष इव संलक्ष्यते ॥१९॥

उर्वशी—अयं भगवतोऽर्घः । 'मूल्ये पूजाविधावर्घः' इति विश्वः (१९-२) ।

मध्यमलोको मर्त्यलोकः । 'पुंसि स्मृतौ मध्यमलोकमर्त्यौ' इति त्रिकाण्डी ।

उर्वशी—भगवन्, प्रणमामि । आयुष्मानेधि दीर्घायुर्भव । विष्टर आसनम् । 'विष्टरः कुशमुष्टौ स्यादासनेऽपि महीरुहे' इति मुक्तावली ॥

### कोणेश्वरी

गोरोचनेति । गोरोचनानिकषपिङ्गो जटाकलापो यस्यैवंभूतः । शशिकरवदमलं वीतसूत्रं यस्य तादृशः । मुक्तागुणातिशयसंभवेन संभृता श्रीर्यस्य । स हेम्नः प्ररोहो जङ्गमः कल्पतरुरिव संलक्ष्यते ॥१९॥

### कुमारगिरिराजीया

'किं नु खलु' इत्यत्र अद्भुतार्थप्राप्तेरपगूहनं नाम सन्ध्यङ्गमुक्तं भवति ।

गोरोचनेति । स्पष्टोऽर्थः ।

अचिरहितौ इत्यादिना कार्यस्य सिद्धत्वात् कार्यं नाम पञ्चमी अर्थप्रकृतिरित्यनुसन्धेयम् ॥

**राजा**–(*सविनयम्*) भगवन्, किमागमनप्रयोजनम् ।

**नारदः**–राजन्, श्रूयतां महेन्द्रसन्देशः ।

**राजा**–अवहितोऽस्मि ।

**नारदः**–प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।

**राजा**–किमाज्ञापयति ।

**नारदः**–त्रिकालदर्शिभिरादिष्टः सुरासुरविमर्दो भावी । भवांश्च सांयुगीनः सहायो[1] । तेन न त्वया शस्त्रन्यासः कर्तव्यः । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति ।

**उर्वशी**–(*अपवार्य*) [2]सल्लं विअ हिअआदो अवणीदं । [शल्यमिव हृदयादपनीतम् ।]

---

**प्रकाशिका**

प्रभावेन पश्यति तच्छीलः । त्रिकालदर्शिभिस्त्रिकालविद्भिर्भावी भविष्यत् सुरासुरविमर्दो देवदानवसङ्ग्राम आदिष्टः कथितः । संयुगे युद्धे साधुः सांयुगीनः । 'सांयुगीनो रणे साधुः' इति **त्रिकाण्डी** (२-८-७८) । शस्त्रन्यासः शस्त्रत्यागः । यावदायुर्यावज्जीवम् । **उर्वशी** –शल्यमिव हृदयादपनीतम् ॥

**कोणेश्वरी**

**प्रभावेति** । शस्त्रसंन्याससमुद्यतं त्वां विशिष्टप्रभावाद् विज्ञाय यावज्जीवं तुभ्यमुर्वशीं दत्तवान् देवदेव इत्यर्थः । **सल्लमिवेति** । शल्यमिव हृदयादपनीतम् ॥

**कुमारगिरिराजीया**

इयं चोर्वशीत्यत्र समग्रफलसम्पत्तेः फलागमो नाम पञ्चम्यवस्था दर्शिता । कार्यफलागमयोः समन्वयान् निर्वहणं नाम पञ्चमः सन्धिः । **अम्महे** इति हर्षे निपातः । शल्यं मे हृदयादपनीतम् । अत्र दुःखविनिर्गमात् समयो नाम सन्ध्यङ्गमुक्तं भवति ॥

---

१. नः–सा. ए. २. अम्महे–सा. ए.

राजा—[1]परमनुगृहीतोऽस्मि परमेश्वरेण ।

नारदः—युक्तम्

त्वत्कार्यं वासवः कुर्यात् त्वं च तस्येष्टकार्यकृत् ।[2]
सूर्यः संवर्धयत्यग्निमग्निः सूर्यं स्वतेजसा ॥२०॥

(*आकाशमवलोक्य*)

रम्भे, उपनीयतां [3]मन्त्रेण सम्भृतः कुमारस्याभिषेकः ।

रम्भा—अअं से अहिसेअसंभारो । [अयमस्याभिषेकसम्भारः ।]

नारदः—उपवेश्यतामयमायुष्मान् भद्रपीठे ।

(*रम्भा कुमारं भद्रपीठे उपवेशयति*)

प्रकाशिका

त्वत्कार्यमिति । वासव इन्द्रः । इष्टानि कार्याणि करोति तादृशः । अग्नितेजो हि दिने सूर्यमनुप्रविशति, रात्रौ सूर्यतेजोऽग्निमिति पौराणी प्रसिद्धिः ॥२०॥ रम्भा—अयमस्याभिषेकसम्भारः । सम्भारो बिल्ववल्मीकमृत्तिकादिसामग्री । भद्रपीठं हेमादिमयमासनम् । भद्रासनलक्षणं चोक्तं **देवीपुराणे**—हैमं च राजतं ताम्रं क्षीरवृक्षमयं च वा । भद्रासनं प्रकर्तव्यं सार्धहस्तसमुच्छ्रितम् ॥ सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ॥ **वराहसंहितायां च**—त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजित् समस्तराज्यार्थिनां शुभदः ॥ इति ॥

कोणेश्वरी

त्वदिति । युवयोरन्योन्यसेवोपकर्तृत्वमिति नात्र चित्रमिति भावः ॥२०॥

कुमारगिरिराजीया

परवानस्मि देवेश्वरेण इत्यत्रेष्टार्थसिद्धेर्गम्यमानत्वादानन्दो नाम सन्ध्यङ्गमुक्तं भवति । त्वत्कार्यमित्यादि । सूर्यस्तेजसाग्निं समेधयति वर्धयति, अग्निश्च सूर्यं तेजसा समेधयति । 'तस्मादग्निर्दूराद्दृश्ये ददृशे' इत्यादि श्रुतिप्रसिद्धम् ॥२०॥

१. परवानस्मि देवेश्वरेण—सा. ए. २. माधवेः—सा. ए. ३. स्वयं महेन्द्रेण—सा. ए.

**नारदः**–(*कुमारस्य शिरसि कलशमावर्ज्य*) रम्भे, निर्वर्त्यतामस्य शेषो विधिः ।

**रम्भा**–(*यथोक्तं निर्वर्त्य*) । वच्छ, पणम भअवंतं [1]पिदरो अ । [वत्स, प्रणम भगवन्तं मातापितरौ च ।]

(*कुमारः सर्वान् प्रणमति*)

**नारदः**–स्वस्ति भवते ।

**राजा**–कुलधुरन्धरो भव ।

**उर्वशी**–पिदुणो आराहओ[2] होहि । [पितुराराधको भव ।]

(*नेपथ्ये वैतालिकद्वयम्*)

**प्रथमः**–विजयतां युवराजः ।

अमरमुनिरिवात्रिः [3]स्रष्टुरत्रेरिवेन्दुर्,
बुध इव शिशिरांशो[4]र्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणैर्लोककान्तैर्,
अतिशयिनि समाप्ता वंश एवाशिषस्ते ॥२१॥

**द्वितीयः**–

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मिन्,
स्थितिमति च विभक्ता त्वय्यनाकम्प्यधैर्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मीर्
हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥२२॥

---

**प्रकाशिका**

**रम्भा**—वत्स, प्रणम भगवन्तं मातापितरौ च । **उर्वशी**—पितुराराधको भव । 'पितुरस्य वचनानि भवन्तु' इत्यपि क्वचित् पाठः । यद्यत् पित्रैतच्छुभमुच्यते तत् तदस्य भवत्वित्यर्थः ॥ **नेपथ्ये** । **प्रथमो वैतालिकः**—अमरमुनिरिति ।

---

१. मादापिदरा–सा. ए. २ आराधइत्तओ–सा ए ३. ब्रह्मणो–सा. ए. ४. बैधवस्य–की.

**रम्भा**–दिट्ठिआ पिअसही पुत्तअस्स जुवराअसिरिं पेक्खिअ भत्तुणो अविरहेण वड्ढदि। [दिष्ट्या प्रियसखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते।]

**उर्वशी**–णं साहारणो ज्जेव एसो अब्भुदओ। *(कुमारं हस्ते गृहीत्वा)* जाद, जेट्ठमादरं वंदेहि। [ननु साधारण एवैषोऽभ्युदयः। जात, ज्येष्ठमातरं वन्दस्व।]

**राजा**–तिष्ठ। सममेव तत्रभवत्याः समीपं यास्यामस्तावत्।

**नारदः**–

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते।
अभिषुक्तं महासेनं सैनापत्ये मरुत्वता ॥२३॥

**राजा**–[1]अनुगृहीतोऽस्मि मघवता।

**नारदः**–भो राजन्, किं ते भूयः प्रियं करोतु पाकशासनः।

**राजा**–अतः परमपि प्रियमस्ति। [2]यदि भगवान् पाकशासनः प्रसादं करोतु, ततः

---

**प्रकाशिका**

बोधनो बुधः। 'ऐन्दवस्य' इति पाठेऽप्यर्थः स एव। देवो राजा पुरूरवा इत्यर्थः। 'राजा भट्टारको देवः' इत्यमरः (१-६-१२)। अनुरूपो योग्यः। अतिशयिनि सर्वोत्कर्षशालिनि ते वंशे कुल एव समस्ता आशिषः। सन्तीति शेषः। स्रष्ट्रादिपुरूरवःपर्यन्तेषु अखिलपूर्वपूर्वगुणसमूहो यथाभूत्तथा त्वय्यपि भूयादिति भावः ॥२१॥ द्वितीयः–तव पितरीति। उन्नतानां महताम्। स्थितिमति मर्यादायुक्ते। अनाकम्प्यधैर्येऽनुच्छेद्यचेतःस्थैर्यशालिनि। राजते शोभते ॥ २२ ॥

**कौमेश्वरी**

पितुर्वचनानि भवन्तु। अथास्य कुमारस्येत्यर्थः।

अमरेति। तव वंश एवाशिषः समाप्ताः संपूर्णाः सम्प्राप्ता इति वा। अतिशयशालिनि। यतो लोककान्तैर्गुणैस्त्वं पितुरनुरूपो भूया इत्याशीःस्वरूपम्।

---

१. एवमनुगृहीतो भगवता कथं न यौग्यो भविष्यति–कु. गि. २. यदि मे मघवा प्रसन्नः किमतःपरमिच्छामि। तथापीदमस्तु–सा. ए.

**कोणेश्वरी**

कस्य क इव । स्रष्टुर्ब्रह्मणोऽमरमुनिरत्रिरिव । अत्रेरिन्दुरिव । शिशिरांशोर्बुध इव । वैधवस्य बुधस्य देव इव राजेव । तव पितुस्त्वं तथानुरूप इति समस्ता आशंसा तव वंश एव प्राप्ता इत्यर्थः ॥२१॥ तवेति । पुरस्तादुन्नतावस्थिते स्थिते सति तस्मिंस्तव पितर्यनाकम्प्यधैर्ये त्वयि च विभक्ता राजलक्ष्मीरिदानीमधिकतरं यथा स्यादेवं राजते । यथा हिमालये जलालये च प्राप्ततोया गङ्गा अधिकं शोभत इत्यर्थः ॥२२॥

**कुमारगिरिराजीया**

**अमरमुनिरित्यादि** । स्पष्टोऽर्थः ॥२१॥
**तव पितरीत्यादि** । स्पष्टोऽर्थः ॥२२॥

**प्रकाशिका**

**रम्भा**—दिष्टया हर्षे । प्रियसखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते । **उर्वशी**—ननु साधारण एवैषोऽभ्युदयः । कुमार, ज्येष्ठमातरं वन्दस्व । **आयुषो यौवराज्येति** । स्मारयति स्मृतिगोचरीकरोति । महासेनं कार्त्तिकेयम् । 'कार्त्तिकेयो महासेनः' इति **त्रिकाण्डी** (१-१-३९) । सेनापतेर्भावः सैनापत्यम् । मरुत्वता इन्द्रेण । 'इन्द्रो मरुत्वान्' **इत्यमरः** (१-१-४१) ॥२३॥ पाकशासन इन्द्रः ॥

**कोणेश्वरी**

**दिट्ठिआ** इति । दिष्टया सखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते । अतिपुण्यशालिनीयमिति भावः । **णमिति** । ननु साधारण एव नौ आवयोरभ्युदयः । यथायं मत्सुतस्तथा तवापीति मतिमत्र विधेहीति भावः । अत आह—**जेट्ठेति** । जात, ज्येष्ठमातरं वन्दस्व । **आयुष** इति । तवात्मजस्यायुषो यौवराज्यश्रीर्मरुत्वता सैनापत्येऽभिषिञ्चता महासेनं स्मारयति । तथा च त्वमिन्द्रसमोऽयं च कार्त्तिकेयसम इति भावः ॥२३॥

**कुमारगिरिराजीया**

**दिष्टया पुत्रस्य** । अत्र लब्धार्थस्य स्थिरीकरणात् कृतिरिति सन्ध्यङ्गमुक्तं भवति ॥ **आयुष इत्यादि** । स्पष्टोऽर्थः ॥२३॥

एवमत्रानुगृहीतो मघवता कथमसौ न पूज्यो भविष्यतीत्यत्र वरस्य गम्यमानत्वादुपसंहारो नाम सन्ध्यङ्गमुक्तं भवति ॥

(*भरतवाक्यम्*)

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
सङ्गतं [1]श्रीसरस्वत्योर्भूयादुद्भूतये सताम् ॥२४॥

[2]अपि च,

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥२५॥

(*इति निष्क्रान्ताः सर्वे*)

समाप्तमिदं श्रीकालिदासकृतं विक्रमोर्वशीयं नाम त्रोटकम् ।

---

प्रकाशिका

**परस्परेति** । संश्रय आश्रयः । सङ्गतं मिलनम् । उद्भूतये उत्कृष्टभूत्यै ॥२४॥ **सर्व इति** । दुर्गाणि दुःखानि । भद्राणि कल्याणानि । 'श्वःश्रेयसं शिवं भद्रं कल्याणम्' इत्यमरः (१-२) । कामानभिलाषान् । 'कामोऽभिलाष' इत्यमरः (१-६-२९) । सर्वत्र सर्वस्मिन् स्थले सर्वस्मिन् काले च नन्दत्वानन्दं प्राप्नोतु ॥२५॥

श्रीश्रिम्बेकरवंशभूषणमणिः श्रीतानभट्टात्मजः
श्रीमद्दीक्षितरङ्गनाथविबुधो धीरो धराविश्रुतः ।
श्रीनारायणबालकृष्णकृतिनौ जज्ञे तनूजौ स्फुरद्-
विद्वद्वादिकरीन्द्रकुम्भमरणीमञ्चारिपञ्चाननौ ॥
सर्वतन्त्रस्वतन्त्रश्रीबालकृष्णतनूद्भवौ ।
श्रीवेणीमाधवबुधरङ्गनाथाभिधौ सुतौ ॥
व्योमकेशपुटभेदनवासी जानकीशपदपद्ममिलिन्दः ।
रङ्गनाथ इममाशु वितेने प्रीतये रघुवरस्य निबन्धम् ॥
कृतेयं विक्रमोर्वश्या रङ्गनाथमनीषिणा ।
प्रकाशिका काशिकाधिपतमेषु प्रकाशताम् ॥
प्रेक्षाविशेषमथनेन वितर्कदाम्ना
भूम्ना परोपकृतये विबुधेश्वराणाम् ।
साहित्यसागरत एष समाचकर्ष
ग्रन्थं सुधाधिककथं किल रङ्गनाथः ॥

---

१. भूतयेऽस्तु सदा सताम्—सा. ए. २. अपि च—नन्दतु om.—सा. ए.

## प्रकाशिका

पौरोभाग्यनिवेशिताशयवतामापाततः पश्यताम्
आमूलं कलुषैकसंग्रहकृतामात्मस्तुतिं कुर्वताम् ।
किं नः कार्यमनार्यसंगतिमतामास्तामिह श्रीमताम्
आनन्दोत्कलिकाविकासितहृदां प्रेमैकदृष्टिः सताम् ॥

नयनधरणिभूभृद्भूमिते (१७१२)ऽब्दे नभस्ये-
ऽसितदल इह नागानां तिथावर्कवारे ।
सुरभिषगधिदैवत्येऽपि भे वृद्धियोगे-
ऽकृत कृतमतिरेनं रङ्गनाथः प्रपूर्णम् ॥

इत्थं सत्पदबन्धुरा गुणधुरा धाराधरालङ्कृतेः
सारा संसृतिसागरान्तरमिता मोदोल्लसन्नागरा ।
द्योतत्कान्तिभराच्चिराद् विरचिता श्रीरङ्गनाथाह्वये-
नेयं भाववता भवत्वविरतं वामोदिनी भामिनी ॥

यदालिखापयदिदं रङ्गनाथस्तदा किल ।
ऋषीन्द्वद्रिधराधीराः समवेता बभूविरे ॥

**श्रिम्बेकरोपनामश्रीरङ्गनाथतनूजनेः ।**
श्रीबालकृष्णविदुषो जगज्जानातु पुस्तकम् ॥

इति श्रीमद्यायजूकप्रवरश्रिम्बेकरमौनिवंशोत्तंसरङ्गनाथदीक्षितकुक्षिजबिन्दुवृन्द-पुरन्दरश्रीबालकृष्णभट्टाङ्गोद्गतरङ्गनाथविरचितायां **विक्रमोर्वशीप्रकाशिकायां** पञ्चमाङ्कोन्मेषः ॥

## कोणेश्वरी

**परस्परेति**—श्रीसरस्वत्योरेकाश्रयदुर्लभं सङ्गतं संमतं सतां भूयात् । परस्परविरोधिन्योः इति दुर्लभत्वप्रतिपादनाय । तथा चाहमेतावतैव कृतकृत्यः । स च प्रसादकर्ता तर्हि सतामिति समीहितं सिध्यतु इति प्रसादः कर्तव्य इत्यभिप्रायः ॥ एतावता इतरसाधारणं किमपि वरत्वेन प्रार्थितमित्युपेक्षा स्यादित्यभिप्रेत्याह । सर्वं इति ॥ निगदव्याख्यातमेतत् । सर्वार्थप्रार्थनयानया कविरात्मनः परकृपामयतां व्यञ्जयतीति ॥२५॥

इति **श्रीमहोपाध्यायश्रीकोणेश्वरविरचिते विक्रमोर्वशीतोटकविवेके** पञ्चमोऽङ्कः ॥

## कुमारगिरिराजीया

**परस्परेत्यादि** । परस्परविरोधिन्योरन्योन्यद्वेषिण्योः श्रीसरस्वत्योर्लक्ष्मी-भारत्योरेकसंश्रयदुर्लभमेकस्मिन् संश्रये आश्रये दुर्लभमलभ्यं संगतं संगमः सतां सज्जनानां भूतये ऐश्वर्याय सदा सर्वदा अस्तु विद्यताम् ॥२५॥ अत्र शुभशंसनात् प्रशस्तिनाम सन्ध्यङ्गमुक्तं भवति ॥ इति **श्रीकाटयवेमभूपविरचिते कुमारगिरि-राजीये विक्रमोर्वशीयव्याख्याने पञ्चमोऽङ्कः** ॥

समाप्तमिदं नाटकम् ॥

# REFERENCES

## Not Already Given

| Page | Line | | Page | Line | |
|---|---|---|---|---|---|
| ६ | २ | (अ. शि. ३.१३) | ६१ | २० | (३.३.२) |
| ८ | ६ | (१.१.६३) | ६३ | १४ | (द. रू. १.६०) |
| ८ | ७ | (१ ४.६) | ६४ | १४ | (२.४.७) |
| ९ | १ | (३.६.७) | ६४ | १६ | (२.३.१४७) |
| ९ | २५ | (श्वे. ३.८) | ६५ | १६ | (२.९.२७) |
| १० | ८ | (तै. सं १.३.४.३ | ६७ | १८ | (२.६.९९) |
| १२ | २ | (बृ. १.४ १५) | ६७ | २३ | (२.५.१७) |
| १२ | ८ | (त्रि. ता. ४.१७) | ६७ | २४ | (३.३.८२) |
| १५ | १६ | (६.१२.२) | ६७ | २६ | (३.३.५३) |
| १६ | १२ | (ना. शा. ५.१०) | ६७ | २७ | (२.४.३) |
| १६ | १६ | (६.११) | ६९ | १२ | (२.४.७३) |
| १७ | २५ | (ना. शा. १७.७२) | ६९ | १८ | (२.४.३) |
| १८ | १८ | (ना. शा. १७.७२) | ६९ | १९ | (३.३.२७) |
| १९ | ७ | (सा. द. ५.५) | ७० | १७ | (२.४.३३) |
| १९ | २० | (ना. शा. ३.९) | ७० | १८ | (१.५.१६) |
| २२ | २८ | (द. रू. १.५६) | ७१ | २२ | (२.४.७४) |
| २३ | १० | (द. रू. १.५८) | ७२ | १५ | (२.४.७२) |
| २३ | १२ | (द. रू. १.६१) | ९९ | २१ | (१.५.१०) |
| २४ | १७ | (३.१६) | १०६ | १३ | (३.५.११६) |
| २५ | १३ | (३.७) | १०६ | १४ | (१.५.१) |
| २५ | १५ | (सा. द. ६.१७) | १०९ | २७ | (३ १५९) |
| २५ | १७ | (सा. द. ६.२०) | १०९ | २८ | (३.१४७) |
| २९ | ७ | (२.८.८३) | ११५ | १६ | (१.९.२९) |
| ३० | १४ | (३.१.१७) | ११५ | १७ | (२.५.३१) |
| ३९ | १६ | (६.१६०) | ११५ | १९ | (२.४.६) |
| ४२ | १६ | (६.१६०( | ११५ | २१ | (२.५.५५) |
| ४८ | २५ | (सा द. ६.१६०) | १२१ | २२ | (पा. ३.४.७१) |
| ५१ | २१ | (१.७.२) | १२९ | १४ | (१.२.२२) |
| ५२ | १८ | (१.२.२) | १८८ | ७ | (प्रा. प्र. ७.६१) |
| ५२ | २२ | (सा. द. ६.४०) | १८८ | ३१ | (हे. व्या. ८.४.१३२) |
| ५५ | १५ | (द. रू. २.९) | २०५ | १६ | (ना. शा. ३१.३२६) |
| ५६ | १७ | (२ ७.२४) | २२१ | १२ | (२.४.१६८) |
| ५८ | १७ | (पा. २.१.३९) | २५९ | १० | (२.६.९३) |

# INDEX
## of
## Verses

# INDEX
of
Authors and Works Quoted in the Commentaries

### प्रकाशिका

# Errata

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| ३ | ३१ | लौकैः | लोकैः |
| ९ | १२ | ढय | ढ्य |
| १६ | १७ | मारङ्गभ्य | मारभ्य |
| ३२ | ५ | नाटये | नाट्ये |
| ४० | २४ | गुणैर्हृद्य | गुणैर्हृद्य |
| ५१ | १४ | नाटयेन | नाट्येन |
| ५४ | ९ | द्विव्य | दिव्य |
| ५६ | १४ | स्कुटन्न | स्फुटन्न |
| ५९ | ३ | समाचरिदं | समाचरितम् |
| ६६ | १० | अङ्गुदीया | अङ्गुदीआ |
| ६९ | २४ | व्यापारन् | व्यापारयन् |
| ७५ | २४ | मेऽप्रहस्तित | मेऽपहस्तित |
| ७७ | ३ | ननु | सखि विश्रब्धा भव । ननु |
| ७९ | २२ | पार्श्वर्तिना | पार्श्ववर्तिना |
| ८० | २० | दिदूषकः | विदूषकः |
| ८१ | २१ | आलोकयान | आलोकयमान |
| ८४ | १८ | प्रकृदा | प्रकृता |
| ८७ | २ | तं | तत् |
| ८८ | ३ | यच्छनीयं | यच्छयनीयं |
| ९० | २२ | लसितार्थं | ललितार्थं |
| ९४ | १४ | दर्शनान् | दर्शनात् |
| ९७ | ३ | दगतः | दागतः |
| १०८ | ८ | ग्विविधे | ग्विधे |
| १०८ | २७ | प्रयोजनं | प्रयोजनं |
| ११८ | ९ | गतास्त्रै | गतास्त्रै |
| १३२ | १८ | बाहुल्येव | बाहुल्येन |

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| १३७ | ९ | प्रतिक्षग | प्रतिक्षण |
| १४३ | ३ | रोहिणा | रोहिणी |
| १५७ | ८ | नै | तै |
| १६५ | २९ | रीदृशं | रीदृशं |
| १६६ | २६ | कथम | कथय |
| १८१ | २७ | सन्तन् | तन्तन् |
| १८२ | २८ | प्रामाणिाका | प्रामाणिका |
| १८२ | २९ | अदेति | यदेति |
| १८६ | ११ | गल्दमते | गलक्ष्यते |
| १९७ | २१ | शुवन्ति | शृंवन्ति |
| २०३ | २३ | कागरिक: | कागारिक: |
| २१० | १६ | भवविष्यत् | भविष्यत् |
| २११ | २२ | आस्वादयातु | आस्वादयतु |
| २१६ | ८ | निभर | निर्भर |
| २१९ | २१ | विशेषणम् | विशेषम् |
| २२१ | १ | कोणेस्वरी | कोणेश्वरी |
| २२४ | १२ | व्यवसित: | व्यवसित: |
| २३१ | ९ | को नु | को न |
| २३३ | १५ | एदव | एतदव |
| २४० | २१ | रञ्जभि | रञ्जयभि |
| २४१ | ४ | चक्रमप्रतिमं | चक्रप्रतिमं |



## OUR PUBLICATIONS

### A. GENERAL SERIES

| | |
|---|---|
| JÑĀNACATURVIṀŚĪ | 1.25 |
| PAṆḌITARĀJA KĀVYA SAṄGRAHA | 6.00 |
| ṚGATHASĀRA | 2.50 |
| SAṀSKṚTA KAVI JĪVITAM | 3.50 |
| KṢEMENDRA LAGHU KĀVYA SAṄGRAHA | 15.00 |
| NARAKĀSURA VIJAYA VYĀYOGA | 1.50 |
| SĪTĀRĀMA VIHĀRA KĀVYA | 4.00 |
| DĀNODDYOTA | 6.50 |
| CATALOGUE OF SANSKRIT MANUSCRIPTS IN OSMANIA UNIVERSITY | 30.00 |
| ĀRYĀSAPTAŚATĪ | 8.00 |

### B. POPULAR SERIES

| | |
|---|---|
| STORIES FROM KATHĀSARITSĀGARA, PART I. | 2.00 |
| ,, ,, ,, PART II. | 5.00 |
| GEMS FROM SANSKRIT LITERATURE | 1.50 |

---

**SANSKRIT ACADEMY**
OSMANIA UNIVERSITY,
HYDERABAD-7.